यार्थशास्त्रपुस्तकेषु सर्वत्रापि पकारघटित एव पाठः। सम्भाव्यते प्राचीनादर्श पुस्तकेष्वेवम्भूत एव पाठः स्यात्।

(१३) "तथाहि-कुप्याध्यक्षप्रचारे लोहवर्गश्चर्मवर्गो विषादिवर्गश्च दर्शितः। 'कुप्यमसारं द्रव्य' मिति तट्टीकाकृतश्च"।

अमर. सर्वा. टी. काण्ड २ वर्ग ६ श्लो. ६२।

सर्वाण्यप्येतानि वाक्यानि समुपलभ्यमानायां नयचन्द्रिकाव्याख्यायां न दृश्यन्त एव। अन्तिममुद्धरणद्वयं तु यस्मिन्नधिकरणे सम्भवि, तस्य नयचन्द्रिका व्याख्या नोपलभ्यते। कदाचिदयं पाठो भट्टस्वामिप्रणीते व्याख्याने स्यादिति येषामन्तिके ऽस्ति तद् व्याख्यानं ते सुनिपुणं निभालयन्तु।

(१४) "तथा चार्थशास्त्रम्—परिखोद्धृतया मृत्तिकया वप्रं कारयेत्, तस्योपरि प्राकारम्" इति।

अमर. सर्वा. टी., काण्ड २, वर्ग २, श्लो. ३।

सर्वथाप्येतदानुपूर्वीकमेव वाक्यन्तु कौटलीये ऽर्थशास्त्रे नास्ति। परमस्त्येवायमर्थः कौटलीयेप्येभिरेव शब्दैर्बोधितः। तथाहि-द्वितीयाधिकरणस्य दुर्गविधानप्रकरणे:—

"परिखायाः........खाताद् वप्रं कारयेत्.....।
वप्रस्योपरि प्राकारम्......"। इति

अत्र शब्दभेदं विद्वांसः स्वयमेव विभावयन्तु।

(१५) अपि च—

"तदुक्तमर्थशास्त्रे—

सम्पन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः॥
अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम्।
तथारिमित्रमित्रश्च विजिगीषोः पुरः स्थिताः॥
पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरः।
आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः॥
अरेश्च विजिगीषोश्च मध्यमो भूम्यन तरः॥
अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे॥
मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः।
अनुग्रहे संहतानां व्यस्तानां निग्रहे प्रभुः॥"

अमर. सर्वा. टी., काण्ड २, वर्ग ८, श्लो. १०।

(१६) अत्रैव श्लोकव्याख्यायां क्षीरस्वामी :—

"अरिर्मित्रमरेर्मित्रं मित्रामित्रमतः परम्।
तथारिमित्रमित्रश्च विजिगीषोः पुरः स्थिताः ॥
पार्ष्णिग्राहस्तथाक्रन्द आसारौ च तयोः पृथक् ।
मध्यमोऽथाप्युदासीन इति द्वादशराजकम् ॥"

सर्वेऽपीमे श्लोकाः कामन्दकीये नीतिसारेऽष्टमवर्गे द्वादशप्रकरणे वर्त्तन्त इति। एतानेव च श्लोकान् नानामहाकाव्यव्याख्याकारो मल्लिनाथोऽपि माघकाव्यस्य द्वितीयसर्गस्थितैकाशीतितमश्लोकव्याख्यावसरे समुदाजहार । अरिर्मित्रमित्यादिपद्ये 'तथारिमित्रम्' इत्यग्निपुराणादिगतः पाठः। कामन्दकीये तु (अनन्तशयनसंस्कृते प्रथमसंस्करणे १०६ पृष्ठे) 'मित्रारिमित्रम्' इत्येव पाठः। क्षीरस्वामिसमुद्धृतः 'पार्ष्णिग्राहः' इत्यादिश्लोक एतदानुपूर्वीकः कामन्दकीये नोपलभ्यते । कदाचिदयं प्राचीनकामन्दकीयहस्तलेखानुरोधिपुराणादित एव समुद्धृतः स्यादिति सम्भावयामः ।

(१७) अपि च—

"राजग्राह्यः षड्भागादिः भागः । प्रत्येकं स्थावरजङ्गमादादेयः करः । नियोज्योपजीव्यो बलि, रित्यवान्तरभेदोऽर्थशास्त्रोक्तो नाश्रितः।"

अमर. क्षीर. टी., काण्ड २, वर्ग २ श्लो. २७ ।

अयमपीदमाकारः पाठोऽर्थशास्त्रे कौटलीये क्वापि नोपलभ्यते। कुत्रत्योयं पाठः, अन्यच्चात्र विषये यत्किञ्चित् शिष्टं विशिष्टं स्यात्, तत्सर्वं सुधीभिः स्वयमेवोहनीयम् ।

## एतदर्थशास्त्रप्रणेताचाणक्यः

आचार्यचाणक्यो ह्ययं मगधेषु कुसुमपुरे निजतिरस्कारासहिष्णुस्तदधिपतीन् नवनन्दान्त्समूलमुन्मूल्य तदीयराज्यासने मौर्यं चन्द्रगुप्तमभिषिषेचेति पुरातत्त्वविदः । चन्द्रगुप्तश्च खीष्टाब्दाच्चतुःशतवर्षपूर्वं भारतभुवं शशासेति न तिरोहितं विदुषाम्। तत्समकालिकः कौटल्याचार्योपि खीस्ताब्दात्प्राक् चतुर्थशताब्द्यां ग्रन्थममुं निर्ममे इति नास्ति सन्देहलवोऽपि ।

आधुनिकाः केचन विद्वांसो यूरोपभुवं सनाथयन्तो भारतीयभारतीवैभवकृतनिजाभिभवामर्षिणः प्राक्तनसंस्कृतवाङ्मयस्याप्यापेक्षिकमधुनातनत्वं बलात्कर्त्तुं प्रयतमाना बहुधा जल्पन्ते। विशेषतस्त्वसाम्प्रतिकः साम्प्रतिको जर्मनिदेशवासी जौली महाशयः प्रमाणविकलांस्तांस्तान्निजापराभिप्रायान् सर्वथापि विशकलितान् स्वसम्पादितार्थशास्त्रपुस्तकोपोद्धाते स्वैरं न्यरूपयत्। तच्च श्रीमूलाभिधव्याख्यानोपोद्घातावसरे श्रीमता गणपतिशास्त्रिणा सर्वमपि प्रमाणपरिपाट्या लीलयेव कर्पूरायितमिति कृतमत्र पिष्टपेषणेन। जिज्ञासुभिस्तत्रैव सर्वमवलोकनीयम्।

यत्तु जौलीमहाशयः स्वकीयोपोद्घातस्यैकादशे पृष्ठे-"मनुस्मृतिव्याख्याकारो मेधातिथिः सप्तमाध्यायान्तर्गतैकनवत्युत्तरशततम (१९१) श्लोकव्याख्यावसरे समानतन्त्रशब्देन कौटलीयमर्थशास्त्रमुदाजहार। तथाहि-'समानतन्त्रेणोक्तम्—

द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहः।
भिन्नसंघातनार्थं तु न युध्येताप्रतिग्रहः॥ इति

कौ. अ., अधि. १०, अध्या. ५. सू. ६४।

किञ्च सप्तमाध्यायस्यैव पञ्चाधिकद्विशततम (२०५) श्लोकव्यायामपि 'समानतन्त्रेऽपिः—दैवं मानुषं०'।

कौ. अ., अधि. ६, अध्या. २, सू. ७।

इत्यात्मकेन ग्रन्थेनापि समानतन्त्रशब्दं कौटलीयर्थशास्त्रकृत एव प्रयुङ्क्ते। एवञ्च कौटलीयेऽर्थशास्त्रे समानतन्त्रशब्दप्रयोगस्य किं प्रयोजकमिति विचार्य्यमाणे ऽस्माकमत्र निश्चयः,—कौटल्यो हि स्वीयेऽर्थशास्त्रे 'समानं पूर्वेण—समानं पूर्वेण' इत्यसकृदुपन्यस्यति। तमेव विशेषं समानशब्दमधिकृत्य मेधातिथिः समानतन्त्रशब्देनैव तस्य सस्मार" इति न्यरूपयत्, तत्सर्वथाप्यविचारितरमणीयमेव। सम्भावयामो वयं यत् समानतन्त्रशब्दस्य कस्मिन्नर्थे शक्तिरस्तीति नैव विज्ञातं जौलीमहाशयेन। अन्यथा त्वियमश्रुतपूर्वा पाण्डिती न विशदीकृता स्यात्। वयन्तु मन्यामहे—समानार्थप्रतिपादकशास्त्र एव समानतन्त्रशब्दः प्रयुज्यते। अयं हि क्रमः संस्कृतवाङ्मये प्राचु-

र्येण दृश्यते । अत एव मानवधर्मशास्त्रस्य सप्तमाध्यायं राजनीति-निरूपणपरं विवृण्वन् मेधातिथिर्यत् तत्समानार्थप्रतिपादकं कौटलीय-मर्थशास्त्रं समानतन्त्रशब्देन समुदाजहार, तत्सर्वतोभावेन युज्यत एव।

बहुत्र चैवंविधाः प्रयोगा दृश्यन्ते। कानिचित्तु स्थलानि ततः समाहृत्य विदुषां सौकर्यायात्र समुपस्थाप्यन्ते । तथाहि :—

सांख्यसप्ततिव्याख्याकारो नारायणतीर्थः स्वव्याख्यायां चन्द्रि-काभिधायां 'इत्येषप्रकृतिकृत' इत्यादिषट्पञ्चाशत्तमकारिकाव्याख्या-नावसरे आह :—

"आह चैवं समानतन्त्रे भगवान् पतञ्जलिः—

तदर्थ एव दृश्यस्यात्मा । कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ।" इति

(योग०, २ । २१–२२ ।)

किञ्चायमेव व्याख्याकारः षट्षष्टितमकारिकाव्याख्यायामपिः–

"यथाहसमानतन्त्रे भगवान् पतञ्जलिः—

'ऋतम्भरा तत्र प्रज्ञा । श्रुतानुमानप्रज्ञाभ्यामन्यविषया-विशेषार्थत्वात्' इति।

(योग० १ । ४८–४९)

सुस्पष्टमेव समानतन्त्रशब्दं कापिलसांख्यशास्त्रसमानार्थप्रति-पादनपरे पातञ्जले योगदर्शने प्रायुङ्क्त । सम्भावयामः कदाचिदयं जौलीमहाशयस्तु पातञ्जले योगदर्शनेऽन्यत्र समानतन्त्रशब्दप्रयोजकं बहुत्रप्रयुक्तं समानशब्दमन्विष्येत् ।

किञ्च ऋषिप्रवरो गोतमोऽपि स्वीये न्यायशास्त्रे एतदर्थपरमेव समानतन्त्रशब्दं प्रायुङ्क्त । तथाहि :—

"समानतन्त्रासिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः" इति।

(न्याय०, अध्या. १, आ. १, सू. २९)

कदाचिद् वैशेषिकादावपि न्यायसमानतन्त्रे समानशब्दमार्गणा-यैव जौलीमहाशयो नितरां प्रयस्येत् । अधिकन्त्वत्र यतस्ततो विद्वद्भिः स्वयमनुसन्धेयमित्यलं परदोषाविष्कृति पल्लवितेनेति।

# कौटलीये स्मृताः पूर्वाचार्य्याः.

१ आचार्याः=स्वपूज्यगुरवः ।

२ औशनसाः=शुक्रानुयायिनः, शुक्रो वा ।

३ कौणपदन्तः=भीष्मः ।

४ खरपट्टः=

५ पाराशराः=पराशरशिष्याः ।

६ पिशुनः=नारदः

७ बार्हस्पत्याः=बृहस्पत्यनुयायिनो बृहस्पतिर्वा ।

८ बाहुदन्तीपुत्रः=इन्द्रः ।

९ भारद्वाजः=द्रोणाचार्यः ।

१० मानवाः=मनुशिष्याः, मनुर्वा ।

११ वातव्याधिः=उद्धवः ।

१२ विशालाक्षः=

इत्येते द्वादश । अत्र पर्यायशब्दास्त्वस्माभिर्नयचन्द्रिकाव्याख्यानुसारमेव निवेशिताः ।

प्रसङ्गवशाद्देशनाम्ना निजनाम्ना वा

कौटलीये स्मृताः पूर्वे राजानोऽन्ये आचार्या वा

| | | | |
|---|---|---|---|
| १ | भद्रसेनः= | १२ | नल = |
| २ | कारूशः= | १३ | युधिष्ठिरः= |
| ३ | काशिराजः= | १४ | माण्डव्यः |
| ४ | वैरन्त्यः= | १५ | कात्यायनः= |
| ५ | सौवीरः= | १६ | कणिङ्को भारद्वाजः |
| ६ | जालूथः= | १७ | दीर्घश्चारायणः= |
| ७ | विदूरथः= | १८ | घोटमुखः= |
| ८ | सुयात्रः=नलः | १९ | किञ्जल्कः= |
| ९ | उदयनः=वत्सराजः | २० | पिशुनः= |
| १० | जयत्सेनः= | २१ | पिशुनपुत्रः= |
| ११ | दुर्योधनः= | | |

अत्रापि पर्यायपदनिर्देशो नयचन्द्रिकानुसारमेव बोध्यः। यद्यस्मत्प्रमादेनात्र पठिताः पूर्वाचार्या राजानो वा केचन न परिगणिताः स्युस्तान् विद्वांसः स्वयमेव सुस्थापयन्तु।

नवमाधिकरणीयप्रथमाध्यायान्तर्गताष्टादशसूत्रव्याख्यानावसरे नयचन्द्रिकायामपि राज्ञः पृथोर्नाम स्वतन्त्रतया स्मर्यते।

## कौटलीयेऽन्येषामुद्धरणानि।

सन्ति बहूनि वाक्यानि परतो ग्रन्थेभ्यः समुद्धृतानि कौटलीयेऽप्यर्थशास्त्रे। दशमाधिकरणान्तर्गततृतीयाध्यायस्य 'नवं शरावं' इत्यादि पद्यं भासप्रणीतस्य प्रतिज्ञायौगन्धरायणनाम्नो नाटकस्यात्र कौटल्येन समुद्धृतमिति न तिरोहितं विदुषाम्। एवमन्यदप्येकं पद्यं भारतीयमिहावलोक्यते सह किञ्चित्पाठभेदेन। तथाहि—दशमाधिकरणान्तर्गतषष्ठाध्यायस्यान्तिमः श्लोकः—

"एकं हन्यान्नवा हन्यादिषुः क्षिप्ता धनुष्मता।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि॥" इति।

अथ महाभारते उद्योगपर्वान्तर्गतप्रजागरपर्वणि त्रयस्त्रिंशत्तमाध्यायेऽष्टाचत्वारिंशत्तमः श्लोकः—

"एकं हन्यान्नवा हन्यादिषुर्मुक्तो धनुष्मता।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम्॥" इति

अत्र सत्यप्यल्पीयसि शब्दभेदे ऽर्थभेदो नितरां नास्त्येव। अन्यद्विशिष्टन्त्वत्र विद्वांसः स्वयमेव निभालयन्तु।

## कृतज्ञताप्रकाशनम्।

स्निग्धप्रवरस्य विद्वद्वरस्य पण्डित भगवद्दत्त महाभागस्यात्यन्तं कृतज्ञोऽस्मि। यत्साहाय्येन प्रकृतोपोद्घातसामग्रीं सञ्चेतुमपारिषम्। सुतरां साधुवादार्होऽयं महानुभावः। अन्येऽपि दृष्टादृष्टविधयाऽस्मत्सहायाः सर्वेऽपि विद्वांसः सबहुमानं प्रणम्याः।

लवपुरम्
मार्गशीर्ष कृष्णा ५
स० १९९१ वि०

विनम्रो विदुषां विधेयः

उदयवीरशास्त्री

* श्रीः *

# अर्थशास्त्रव्याख्या नयचन्द्रिका

## षाड्गुण्ये सप्तमो ऽध्यायः ।

### ११३ प्रक. द्वैधीभाविकाः सन्धिविक्रमाः ।

तदेवं परिपणितादिभेदसन्धिमुक्त्वा सम्प्रति तेषामेव द्वैधीभाविनानां समहीनांशलाभदैरपेक्षाभ्युपगमादिकारणप्रदर्शनार्थं सूत्रम्—द्वैधीभाविकाः सन्धिविक्रमा इति—सन्धिविग्रहोपादानं हि द्वैधीभावः तन्निविष्टाः सन्धिविग्रहभेदाः कारणादिभेदा उच्यन्त इत्यर्थः ॥ सन्धिविग्रहयोरन्विष्टत्वात् प्रतियोगिद्वयं तावदाह—

*[1]विजिगीषुरित्यादि—द्वितीया§त्प्रकृतिमिति । भूम्यनन्तरं शत्रुमुपगृह्णीयादिति सहकारितया स्वीकुर्यादित्यर्थः ॥ [2]अत्र साहाय्यार्थमित्यत्राह—सामन्तं सामन्तेनेति ॥ सामन्तमिति यातव्यम् । सामन्तेनेति पश्चाद्वापार्श्वयोर्वा भूम्यनन्तरेण । संभूयेति एकार्थतापादनेन यातव्यं यायादित्यर्थः । अनेन चास्य संभूय प्रयाणाङ्गत्वमुक्तमितिग्राह्यम्॥ [3]यातव्यमभियास्यतः सामन्तान्तरोपग्रहः किमित्यत्राह पार्ष्णिमित्यादि—॥ विजिगीषोरस्वयं पार्ष्णिग्रहणाकरणार्थम् अपेक्ष्यार्थः ॥ [4]पार्ष्णिं गृह्णतोऽन्यस्य वारणार्थं वेत्याह—पार्ष्णिग्राहं वा वारयिष्यति । विजिगीषोर्यो यातव्यः तदभिसरणं तत्यक्ता·········नुत्यर्थं वेव्यमित्यादिमद्बलं तद्बलेन सहितं द्विगुणं स्यात् तादिति तदर्थं वेत्यर्थः

[6]बलद्वैगुण्यमित्यादि—॥ [7]वीवधासारप्रवर्तनार्थं वेत्याह वीवधेत्यादि—स्वदेशादन्वायतिर्वीवधः मित्रबलमासारः तयोरनिवारणार्थः ॥

---

* एताः संख्याः डा० जौलीमहोदयेन संस्कृतस्य अर्थशास्त्रस्य मूलसूत्रानुसारेण बोध्याः ।

§ द्वितीयां प्रकृतिमिति मूले पाठः समुपलभ्यते ।

प्रस्थितस्य मे मार्गे प्रतिबन्धका.............त्वमर्दयितुं वेत्याह बलान्वाय* इत्यादि—॥ [10]शैलादिदुर्गेषु चारण्येषु च यात्राभङ्गादौ बलस्य सरणस्थानानि तेषूपदेशेषु कलहावस्कन्दपरिहारार्थं सन्नद्धबलः सर्वतश्चारिष्यतीति तदर्थं वेत्याह दुर्गाटवीत्यादि—॥ यात्वारिहार्येणार्थे वा सन्धौ वा स्थापयितुं वेत्याह यातव्यमित्यादि—॥ [12]मत्प्रयाणसाध्यर्थे † अयमप्यङ्गहानिर्भूत्वा मय्यविश्वस्तानन्यान्विश्वासयिष्यतीत्येतदर्थं वेत्याह लब्धलाभांशे वेत्यादि—। एभिः प्रयोजनैः सामन्तान्तरं न सहायीकुर्यादित्यर्थः ॥

[13]एवं यातव्याभियाने पार्ष्णिशुद्ध्यादिभिः प्रयोजनैः संभूययानार्थं सन्धिमुक्त्वा तदविस्रंभणे तेन सह संभूतये द्वैधीभूत इत्यनुवादः। कोशदण्डानपेक्षया सन्धानस्यापि द्वैधीभावे अन्तर्भावज्ञापनार्थम् सामन्तादीनामपि सामन्तो भूम्यनन्तरः। आदिशब्दान्मध्यमादिस्वीकारः। सामन्तादीनामित्यत्रादिशब्दं विना पाठे पृष्ठे पार्श्वयोश्चावस्थितानां समभिन्नज्यायसामन्यतमादित्यर्थः ॥ [14]सामन्तेन संभूययानस्यांशादिलाभस्य च सन्ध्यधीनत्वाद्द्वैधीभाविकान् सन्धिभेदानाह—तेषामित्यादिना ॥ तेषामिति—समहीनज्यायसाम्। अत्र समसन्धयः त्रयः कण्ठोक्ता विषमसन्धयस्तु षडित्युभये संभूय नव, अतिसन्धयोपि तेषामेव विशेषलाभरूपत्वात् नव वेत्यष्टादश सन्धयः ॥

अन्येत्वाहुः—समसन्धयस्त्रयः, विषमसन्धयोपि त्रय एव, न तु षट्। विपर्यये विषमसन्धिरित्यत्र विपर्ययपदेन हीनेत्वस्यैव‡ विवक्षितत्वात्। अन्यथा तयोर्विषयलाभात् अतिसन्धिरित्यन्यस्यानुपपत्तेः। हीनत्रयवदधिकत्रयस्यापि विषमसन्धित्वे सन्धिस्तत्र न स्यात्,

* अस्य प्रतीकस्य मूलं 'बलान्वाय' इत्याद्यर्थशास्त्रे नोपलभ्यते। 'बह्वाबाधे' इति वा स्यात्।

† अयमेव आदर्शपुस्तके पाठः, परं 'साध्येऽर्थे' 'साध्यार्थे' इति वा पाठः स्यादित्यनुमीयते। एवमग्रे 'अङ्गहानिर्भूत्वा' इत्यस्य मूलानुगामी स्फुटोर्थः कश्चिन्नावगम्यते। 'लब्धलाभांशे वेत्यादि' इति प्रतीकग्रहणे च 'लब्धलाभांशो वा' इति पाठः स्यादित्यनुमीयते।

‡ 'हीनेत्वस्यैव' इति आदर्शपुस्तके पाठः 'हीनत्वस्यैव' इति पाठः स्यात्।

विशेषलाभासंभवात्। अतो विशेषलाभपदसामर्थ्यादेवाधिकत्रयं हीनत्रयञ्च षडेवातिसन्धयः। एवञ्च विषमसन्धयो ज्यायसः समः समाद्धीनेन हीनाद्धीनतरेणेति त्रय एव॥

अतिसन्धयस्तु हीनात्समेन समादधिकेन ज्यायसोऽधिकतरेणेत्येवं समसन्धौ विशेषलाभः। विषमसन्धावपि ज्यायः* समेन समाद्धीनेन हीनाद्धीनतरेणेत्येवं विशेषलाभ इति षट्॥ तथा च संभूयपञ्चदशेति॥

तत्र विशेषलाभपदस्यान्यथैवार्थोपपत्तेः। वक्ष्यति हि मित्रहिरण्यभूमिलाभानामुत्तरोत्तरो लाभः श्रेयानित्युक्त्वा त्वञ्चाहञ्च मित्रं लभावह इत्यादिः समसन्धिः। त्वं मित्रमहं हिरण्यमित्यादिर्विषमसन्धिः। तयोर्विशेषलाभादतिसन्धिरित्युक्तम्॥

समसन्धौ तु यः सम्पन्नं मित्रकृच्छ्रे वा मित्रमाप्नोति। सन्धत्ते इत्यत्र सन्धिश्चोक्तः। तदिदं तदा दुर्घटम्, तत्र हि त्वं मित्रमहं हिरण्यमित्यत्र सन्धिः स्यात्, न तु विषमसन्धिः सम्पन्नमित्रलाभे हि सन्धिरित्यवि§रुध्येत। विषमसन्धेरेवातिस्तयोक्तत्वात्। ज्यायसोधिकांशेन समसन्धिरित्यनेन च विरोधः स्यात्, तस्याधिकफलेनातिसन्धित्वापत्तेः। बलसमादधिकत्वं तत्र विवक्षितम्॥

अतिसन्धौ तु ततोप्यधिकत्वमितिचेत् अनधिकत्वस्यावधिभेदनियमाभिधानात्। तस्माद्धीनाधिकसाधारण्येन प्रसरतो विपर्ययपदस्याधिकं विहाय हीन एव व्यवस्थानस्याशक्यत्वाद्विशेषलाभपदस्य अन्यथैवोपपन्नत्वाच्च हीनत्वेनाधिकत्वेन च षडपि विक्रमसन्धय एव। अतिसन्धयस्तु विषमसन्धिषु न वि·············पणनीयम् द्रव्यस्वरूपगतविशेषोपाधिकमतिसन्धित्वमस्त्येवेति संभूयाष्टादशैवेत्यलम्॥

---

* अत्रापि 'ज्यायसः' इति पाठः स्यात्।

§ अत्र 'संधिरिति विरुध्येत' 'संधिरित्यवरुध्येत' इति वा पाठो ऽर्थानुसारी प्रतीयते, एवमग्रे 'अतिस्तयोक्तत्वा'दित्यत्र 'अतितयोक्तत्वात्' इति च।

‡सदाग्रहेणेति—॥ एवं द्वैधीभाविकाः सन्धिभेदास्त्रिधा विभज्य सम्प्रति विजिगीषोस्समहीनज्यायोभिः सन्धिकरणे द्वयोर्ज्यायस्त्वं हीनत्वं वा अन्योन्योपेक्षया न संभवति द्वयोरपि ज्यायस्त्वे हीनत्वे वा समत्वापत्तेः । तेन विजिगीषोर्ज्यायस्त्वं हीनापेक्षं हीनत्वमपि च ज्यायस्त्वापेक्षम् । अतो हीनस्य ज्यायसा वा समस्य समेन वा ज्यायसो हीनेन वा त्रिभिर्विज्यैः सन्धिर्वाच्यः । तत्र लाभभेदात् हीनः सन्धिभेदः ॥

लाभश्च त्रिविध एव सम्भवी । बलसमः बलसमादधिकः बलसमहीनश्चेति । एवं लाभत्रैविध्यात् प्रत्येकं त्रिधा भूत्वा नवधा स्युरिति आशयवान् प्रथमं हीनस्य ज्यायसा सन्धिभेदान् त्रिविधलाभोपाधिना त्रिधैव दर्शयति व्यसनिनमित्यादि—। नाव्यसनं गुणप्रातिलोम्यादिकं अपायः शरीरनाशादिः अनर्थ एकतो अनर्थाभयतः अनर्थादिः सयुक्तमित्यर्थः* ॥

एवंभूतं ज्यायांसं बलसमेन दण्डानुरूपेण "§अंशो दण्डसमः पूर्वे" इति प्रागुक्तेन लाभेन पणेतेत्यर्थं विषमसन्धिः ज्यायसोऽधिकेनांशेन समसन्धिरित्युक्तत्वात् । एवं पणमानस्याभिप्रायमुक्त्वा पणितस्याप्याह—पणित इति । तस्यापकारसमर्थ इति-बलसमाल्लाभ इति केन हि ज्यायान् पणनीयः तथापि हीनेन राज्ञा तस्य व्यसनाद्युपगतत्वबुद्ध्या तथा न पणितम् । अतस्तत्रापचिकीर्षा स्यादेव । तथा च अपकारं क्षमयेत् तदा व्यसनादिप्रशमनेन विगृह्णीयादित्यर्थः॥हीनस्यैवाधिकलाभेन ज्यायसा सह समसन्धिमाह–एवंभूत इति । एवंभूतः व्यसनित्वादिरयुक्तः । हीनानां शक्तीनां प्रतापस्य ज्यायसा सह सन्धिना पूरणं स्यादिति वा संभाव्यस्य निश्चितप्रायस्यार्थस्य प्राप्त्यर्थं वा मूलस्य स्थानियस्य¶

---

‡ अस्य प्रतीकस्यार्थशास्त्रे मूलं नोपलभ्यते ।

* इदं वाक्यं व्यत्यस्तमात्रावर्णविन्यासमनन्वितमिव प्रतिभाति यादृशमादर्शपुस्तके दृष्टं तादृशमेवास्माभिर्निबद्धम् ॥

§ अर्थशास्त्रे ७ अधि. ४ अध्या. सू. सं. २६ ।

¶ अत्र कश्चिन्मात्रांशस्त्रुटित इव । 'स्थानीयस्य' इति वा पाठः स्यात् । अग्रे पृ. ६ मूलपदस्य स्थानीयपदेन व्याख्यानं दृश्यते ।

पार्ष्णेः पश्चाद्विषयस्य त्राणार्थी वा हीनो व्यसनादिमत्तया बलसमाप्ता-भाद्विशिष्टेनाधिकेन लाभेन पणेतेत्ययं समसन्धिः। ज्यायसाधिकांश-स्यानुरूपतया समसन्धित्वेनोक्तत्वात् ॥

[21]पणितस्य राज्ञो विधिमाह पणित इति—अत्राधिकांशपणनेन-ज्यायसो नापचिकीर्षेत्यनुगृह्णीयादित्युक्तम्॥ [22]हीनस्यैव ज्यायसा हीनेन-लाभेन पणनमाह—जातव्यसनेत्यादि। व्यसनं मृगयादि बलव्यसनं वा। प्रकृतिरन्ध्रं क्रुद्धहिताभिप्रायम्। अनर्थं एकतोऽनर्थोभयतोऽनर्थादि* तद्युक्तं ज्यायांसं स्वदुर्गमित्राभ्यां उद्धतो वा मार्गमदीर्घं यियासुर्वा शत्रुं युद्धेनापि ‡सैवगृह्णीतुकामो वा निश्चितसिद्धिकं लाभमादातुका-मो वेत्यर्थः ॥

दुर्गमित्रादेदपोह्य कार्यादितो वा हीनो ज्यायांसमपि समबल-समालाभात् हीनलाभेन पणेतेत्यर्थः। तथापणितस्य ज्यायसो विधि-माह—पणित इत्यादिना ॥

अपकारसमर्थ इति—॥ हीनलाभेन पणनाव्यसनिनेनापि ज्याय-सोपचिकीर्षा न्याय्येतिभावः ॥ [24]व्यसनिनो ज्यायसो हीनलाभपणने विक्रममुक्त्वा व्यसनभावेपि तस्य तथापणितस्यापि हीनात् कार्यान्त-रैरपि हीनलाभः प्रतिग्राह्य इत्याह—अरन्ध्रव्यसनो वेत्यादिना। रन्ध्रं प्रकृ-तिभेदादिव्यसनं मृगयादि बलव्यसनं वा §तदगृहीत इत्यर्थः। दुरारम्भो देशकालादिविरुद्धत्वं क्षयोग्युग्यपुरुषापचयः ‖प्रवृत्तितसैन्यभक्तोपकरण-दानादि भूयस्ताभ्यां योक्तुकाम इति। सहायतया ज्यायसः प्रवृत्तो दुरा-रम्भो+ हीनविश्रम्येदितिभावः। दूष्यदण्डमिति स्वदूष्यबलं प्रवासयि-तुकामः नाशयितुमन्यत्र नमयितुं वेत्यर्थः। आवाहयितुकामो वेति परदूष्यबलमानयितुकामो वा। पीडनीयमिति उभयतःपीडनीयं वोन्मू-

---

* 'अनर्थं एकतोनर्थ उभयतोनर्थादि' इति पाठः स्यात्।

‡ अत्रापि पदे कश्चिन्मात्रांशस्त्रुटित इव।

§ अत्र 'तदगृहीत' इति पाठः अर्थानुविधायी प्रतिभाति।

‖ 'प्रवृत्तिते' त्यत्रापि कश्चिन्मात्रावर्णांशस्त्रुटित इव।

+ हीनविश्रम्येदिति आदर्शपुस्तके पाठः हि न विश्रम्येदिति हीने विश्रम्येदिति वा पाठः स्यादिति प्रतिभाति।

लनीयं वा।स्वशत्रुमनेन सहायभूतेन हीनेन तथा कर्तुकामः।सति*प्रधान घाति। विग्रहस्य क्षयव्ययप्राणसंशयादिदोषदर्शीत्यर्थः। कल्याणबुद्धि रित्यादिना अनर्थान्तरजना‡नार्थीत्यर्थः॥[२५]कल्याणबुद्धिनेति। हीनांशतो पि अदुष्टबुद्धिश्चेत्तत्साहाय्यं कुर्यादित्यर्थः॥

[२७]एवं हीनस्य ज्यायसा सह सन्धित्रिकमभिधाय समस्य समेः सन्धित्रिकेऽपि तमेव प्रकारं सामान्यतोऽतिदिशति—एवं समनुत्यादि§ना—॥तथा हीनस्य ज्यायान् सन्धिप्रार्थनायां तस्य दुष्टबुद्धित्वेऽतिसन्धानं विशेषलाभप्रकारः। कल्याणबुद्धित्वे तस्यानुग्रहश्च प्रतिपादितां स्वीकारश्चाक्षोः✳॥

[२८]तथा समस्य ×समेवसिद्धिप्रार्थने पणितेनातिसन्ध्यनुग्रहौ कार्यावित्यतिदेशार्थः। अत्रापि लाभत्रैविध्येन त्रीन् प्रकारान् विशेषतो दर्शयेत्¶—॥प्रथमं ||बलसमालाभेन पणनमाह—परानीकस्येत्यादि।परबलस्य परिमितादपि........प्रत्यनीकमवस्कन्दक्षमं शत्रोर्या विभूमयः शैलगुहा✳ नादयस्तद्देशिकस्तत्प्रचाराभिज्ञं मूलस्य स्थानीयस्य पश्चाद्विषयस्य च रक्षार्थं वेत्यर्थः॥

॥[२९]पणितस्य विधिमाह—पणित इति॥

[३१]हीनलाभपणनमाह—जातव्यसनेत्यादि। व्यस्तैदैवकृतभयादिकं ऽकृतिरन्ध्रं तस्याः क्रुद्धभीतादिभूयिष्ठत्वम्। अनेकमविरुद्धमिति+ अनेकशत्रुकं एवंभूतं सममित्यर्थः। अन्यतो लभमानो वेति। एवं विना सामन्तान्तरं सहायं लभमानमित्यर्थः=। सम्बन्धादिति लाभादि

---

* 'सतिप्रधान' इत्येवादर्शपुस्तके पाठः सन्धिप्रधान इति प्रतिभाति मूलानुरोधात्

§ अत्र 'एवं सम इत्यादिना' इति पाठः स्यात्।

‡ अत्रापि मात्रावर्णाशत्रुटित इव। अनर्थान्तरजननार्थीति वा स्यात्।

✳ अत्रोभयत्रापि पदवर्णविपर्यास इव प्रतिभाति।

× अत्र 'समेन सिद्धिप्रार्थने' इति पाठः स्यादिति प्रतिभाति।

¶ अत्र 'दर्शयति' इति पाठः प्रतिभाति।

|| अत्र 'बलसमलाभेन' इति पाठः मूलार्थानुविधायी।

+ 'अनेकावरुद्धमिति' इति पाठः मूलार्थानुविधायी।

= अत्र 'लभमान इत्यर्थ' इति पाठः स्यात्।

विशेषः ॥ [32]पणितस्य विधिमाह—पणित इति । अपकारसमर्थ इति । हीनलाभपणनादपचिकीर्षुरितिभावः ॥ [34]अधिकलाभपणनमाह— एवंभूतो वेति । एवंभूतः व्यसनप्रकृतिरन्ध्रादियुक्तम्* । सामन्तायत्त-कार्य इति व्यसनादिमत्वे §भावम् । कर्तव्यबलो वेति अशिक्षितहस्त्यश्व इति वा संपाद्यबलो वेत्यर्थः । बलसमार्थिनो वेति — बलसमादंशात् न्यूनो वेत्यर्थः । बलसमाद्धीनेनेति — बलसमादंशान्न्यूनो वेत्यर्थः ॥

[37]समस्य समेन सन्धित्रिकमुक्त्वा समहीनज्यायस्त्वाविभागेन पण्यमानस्यैव भूयो याचनं विशेषणलाभरूपत्वेनातिसन्धिमाह— जातव्यसनप्रकृतिरन्ध्रमिति—॥ ज्यायांसं समं हीनं वेत्यप्रभाविना सम्बन्धः । ||अभिहर्तुकामः संशयितुकामः। स्वारब्धमिति–देशकाला-द्युचितमित्यर्थः । अत एवैकान्ते सिद्धनिश्चितासिद्धिकामस्य कर्म विहन्तुकामो वेत्यन्वयः । मूले स्थानीये यात्रायामवगमनदशायां वा प्रहर्तुकामः । विजिगीषोर्यो यातव्यः तस्मादेतद्देयात् बहुतरं लभमानो ¶न्वाज्यायस्त्वान्यविभागेन बहुतरमेव याचेत ॥

[+[38]एवं वक्ष्यमानस्य विधिमुक्त्वा पणमानस्याप्याह याचित इति —॥ तस्य यावदन्याश्रितदाने कारणान्याह स्वबलरक्षार्थमिति । कारणान्तरमाह दुर्घर्षमित्यादि—। अन्यदुर्गमिति–शत्रुदुर्गमासारं दुर्ग-बलं अटवीं आटविकम् । अन्यस्य स्वशत्रोर्दुर्गादिकम् परस्य प्रमाणस्य बलेनावमर्दयितुकामो वा । प्रकृष्टे दूरतरे अन्यवनि चिरतरे काले च। परत् अन्यं पणमानस्य बलं क्षयव्ययाभ्यां योक्तुकाम इति । स्वयाहार्य-विश्वासे पणमानो दूरोत्सवगमनचिरप्रवृत्त्यादिषु वारप्स्येत तत्क्षय-व्ययौ चाप्स्यतीति भावः ।] परदण्डेनेति—परस्य यातव्यस्य दण्डेन

---

* 'युक्त' इति पाठः प्रतिभाति ।

§ अत्र 'भावः' इति पाठः स्यात् ।

|| अत्र 'अभिहन्तुकामः' इति डा० जोली महोदयेन संशोधितस्यार्थशास्त्रस्य मूलपाठः ।

¶ अत्र 'न्वाज्यायस्त्वान्यविभागेन' इत्यत्र कश्चिन्मात्रांशो विपर्यस्त इव । 'वा ज्यायस्त्वाद्यविभागेन' इत्यादिर्मूलानुसारी पाठः कल्पनीयः ।

+ [ ] एतत्कोष्ठकगतो व्याख्यांशः लेखनपरम्परया प्रमादाद्वा त्रुटितोऽपूर्णोऽविस्पष्टः प्रतीयते।

बलेन ततो गृहीतगजाश्वादिना । वृद्धौ भूत्वा पुनः पूर्वदत्तमस्य लाभातिशयं= माच्छेत्स्यामीति बुद्ध्वादेवेत्यर्थः । परदण्डमित्यादि-परस्य यातव्यस्य दण्डमनेन सहायेन गृहीतुकामो वेत्यर्थः ॥ एतानि कारणानि बुद्ध्वा बहुतरमभिलाभांशं दद्यादित्यर्थः । ज्यायांसं हीनं समं वेति हीनो ज्यायान् समो वेति शेषः ॥

[४१]एवं समहीनज्यायस्त्वाविभागेन भूयो याचनतत्प्रसादनाभ्यां अति-सन्धिमुक्त्वा ज्यायसो हीनेन सह सन्धित्रिकं दर्शयति *ज्यायान्वेत्या-दिना-॥ यातव्योच्छेदमपदिश्य सर्वबलसन्दोहेन कृतसन्नाहो हीनमेव जिघृक्षुर्वा यातव्योच्छेदानन्तरं हीनमप्युच्छेत्तुकामो वा ज्यायान् हीनं बलसमूहादधिकलाभेन पणेतेत्यर्थः ॥ [४२]यातव्येनैव सन्धिं कृत्वा स्थानं स्वीकुर्याद्वा॥ [४३]अस्मै ज्यायसे सन्ध्यर्थं दण्डं दद्यात्। दूष्यामित्राटाविकबलं वा दाद्यत् । तेषामात्मनैव वध्यत्वादित्याशयः ॥

[४४]एवं हीनेन सहाधिकलाभेन सन्धिमुक्त्वा समबललाभेन सन्धिमाह-जातव्यसनेत्यादि—। ज्यायानपि व्यसनादिमत्तया हीनेन सह समबलेन लाभेन पणेतेत्यर्थः॥ पणि[४५]तस्य विधिमाह—पणित इति। अपकारसमर्थ इति—हीनोप्यस्य ज्यायसो दुष्टबुद्धित्वं ज्ञात्वापचिकी-र्षुरितिभावः ॥

हीने[४६]लाभेन सन्धिमाह—एवंभूतमिति । पूर्वं यथा ज्यायान् व्यसनादिमान् तथेदानीं हीनो व्यसनादिमानित्यर्थः । बलसमादिति लाभादिति शेषः ॥ एवं §ज्यायस्याहितेन सन्धित्रयमुक्तम् ॥

[४७]एवं समहीनादिषु पणितपणमानयोः अधिकलाभपणनस्य तत्स्वीकारयोश्च कारणान्युक्त्वा इदानीं तान्येवालोच्य तदनुगुणं सन्धौ वा विग्रहो¶ वा तिष्ठेदित्याह॥ +अत इत्यादि—॥ यत एव समबलादि-

---

= अत्रानुस्वारोऽधिक इव, लाभातिशयमाच्छेत्स्यामीति पाठः सुष्ठु प्रतिभाति ।

* ज्यायांसं वेत्यादिना इति पाठः स्यात् मूलानुरोधात् ।

§ अत्र कश्चिन्मात्रावर्णांशस्त्रुटित इव ।

¶ अत्र 'सन्धौ वा विग्रहे वा' इति पाठोर्थानुसारी प्रतीयते ।

+ अत्र आदौ इत्यादीति पाठः स्यात् यतो मूले अतः इति पदमेव नास्ति ।

लाभपणनतदभ्युपगमानां कारणानि बहूनि च। अतो यथोक्तानि विचार्य निश्चिनुयात्। निश्चित्य चोभयतः सन्धिविग्रहयोः द्वयोर्यतः श्रेयः स्यात् तमेव स्वीकुर्यादित्यर्थः। अत्र च सर्वत्र पणितत्वं पणमानत्वञ्चोभयमेव विजिगीषोरेवावस्थाभेदेनेति द्रष्टव्यम्॥

इति श्रीवादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वविरचितायां कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये सप्तमे ऽधिकरणे सप्तमो ऽध्यायः॥

## ७ अधि. ८ अध्या. ११४–११५ प्रकरणम्॥

### सू. यातव्यवृत्तिरनुग्राह्यमित्रविशेषाश्च॥

यातव्याभिधानार्थं समवायिनां भूयः प्रमाणं* मिथः संन्धिविक्रमाश्चोक्ताः। संप्रति यातव्यस्य कथं तेषु वृत्तिः, तेषां यातव्ये च कथमित्येतद्विचारार्थं सूत्रं–यातव्यवृत्तिरिति। यातव्यस्य समा सामवायिकेषु तेषां यातव्येषु च वृत्तिरुच्यत इत्यर्थः॥

तदेवाह–यातव्यो ऽभियास्यमान इत्यादिना–॥ अत्र विजिगीषुरेव यातव्यस्तदवस्थापन्नः। स च सामवायिकानामन्यतमं सन्धिकारणं सन्धिनिमित्तं स्वीकर्तुकामो वा परसन्धित एवैनं विहर्तुकामो वा तत्र †यास्य लाभांशतया व्यवस्थापितः ततो द्विगुणेन लाभेन पणेतेत्यर्थः॥

सामवायिकतया लाभग्रहणे क्षयादयः सन्ति नत्विहेति च वर्णयेदित्याह—पणमान‡ इति। युग्मपुरुषापचयः क्षयः। व्ययः सैन्यप्रवर्तने अर्थदानम्। प्रवासो दीर्घाध्वगमनम्। प्रत्यवायः संभूयावृत्तौ संविल्लङ्घनदोषः। वधादिर्वा। परोपकारः शत्रोरेव कार्यकरणं तत्सहकारितयानुप्रवेशादिति भावः। एतानि अनुवर्णयेत् पुनः +पुनर्भूयादित्यर्थः॥

---

* अत्र भूयः प्रमाणमित्यस्य प्रकरणानुसारी स्फुटोऽर्थः कश्चिन्नावगम्यते, 'संभूयप्रमाणम्' इति वा स्यात्।

† अत्र 'यास्य' इत्यस्य स्थाने 'योऽस्य' इति पाठोऽर्थानुसारी प्रतीयते।

‡ अस्य प्रतीकस्य मूलं 'पणमानः' इत्येतत् डा, जौली महोदयेन संस्कृते ऽर्थशास्त्रे नोपलभ्यते। 'प्रपणित' इति वा स्यात्।

+ 'भूयादित्यर्थ' इति मूल पुस्तके पाठः, 'भूयादिति' तु स्यात्।

प्रतिपन्नमिति[3]। अभ्युपगतवन्तं पणितार्थेन योजयेदित्यर्थः ॥

एवमादातुकामो वेति[4] पक्षमुक्त्वा विहन्तुकामो वेति पक्षमाह—वैरं वेति। परैः सामवायिकान्तरैः सह मिथः कलहोत्पादेन भेदयित्वा। विसंवादयेत् सन्धिं शिथिलयेदित्यर्थः ॥

एवं[5] यातव्यस्य सामवायिकेषु अन्यतमेन पणनमुक्त्वा सामवायिकानामेवान्योन्यतः पणनप्रकारमुक्ताशयमाह—दुरारब्धेत्यादि—॥

अत्र हि चत्वारः पक्षाः संभविनः। तत्र नित्यापिकार्यस्य* विश्वास्ये वा शत्रौ सन्धिच्छद्मनापि सर्वथापकर्तव्यम्। न च प्रभूतार्थग्रहणे पुनरपकारो युक्तः। अतः तदात्वे अल्पमादायायत्यां प्रभूतमेष्टव्यमित्याद्यपेक्षम्†। मित्रस्योपकारं वा शत्रोः पीडनं वा लाभान्तरानुबद्धं पश्यन् तादात्विकं प्रभूतमप्युपेक्ष्यायत्यां चाल्पमेवेच्छेदिति द्वितीयः। ‡[बलवताक्रान्तं बद्धमनेन सन्धिकारणादविघ्नितव्यापारं यं रक्षितुं वान्येन मित्रादिना रक्षितुं वा नेतयौ न संबन्धार्थी वा न किञ्चिदपीति तृतीयः] ॥ परेण स्वीकृतं सन्धिं विघटयितुकामो वा मित्राभ्यां लघ्वर्थदानेन कृतं सन्धिं विश्लेषयितुकामो वा पराभियोगं वाशङ्कमानः प्रभूतार्थप्रार्थनेन तद्विहतिं चिकीर्षुर्वा तदात्व एवाप्राप्तमधिकं वा लाभमिच्छेदिति चतुर्थः ॥

एवं चतुष्पक्षममिधाय+ आद्यं तावदाह। दुरारब्धेत्यादि—॥ दुरारब्धत्वमनुचितदेशकालाद्युपक्रमसन्देशकालाद्यनुचितकर्मप्रवृत्तं, भूयः

---

* यद्येष एव पाठः साधुस्तदेत्थं योज्यः—नित्यमाप्तुं शीलमस्य तन्नित्यापि, नित्यापि च तत्कार्यमिति नित्यापिकार्यं तस्य। सार्वदिकस्य कार्यस्येत्यर्थः।

† अत्र 'प्रभूतमेष्टव्यमित्याद्यपक्षः' इति पाठः प्रतिभाति।

‡[ ] एतत्कोष्ठकगतो व्याख्यांशो विभ्रष्टपदवर्णन्यास इव अस्फुटार्थः प्रतिभाति। अथवा इत्थं योज्यः—अन्येन बलवता क्रान्तं, अथान्येनैव वा बद्धं, सन्धिकारणाद्वाऽविघ्नितव्यापारं—न विघ्नितो व्यापारः स्वप्रसरो येन तम्, अथवा यं कमपि स्वयं रक्षितुमिच्छेत्; उत मित्रादिना स्वसहायीभूतेन रक्षितुमिच्छेत्; यो वा स्वेच्छया एतयोः स्वस्वामित्रयोरवश्यं सम्बन्धार्थी स्यात्, (नकारद्वयादवश्यार्थलाभः) तस्मान्न किञ्चिदप्येष्टव्यमित्यर्थः। अत्र यत्तदोरिच्छातिक्रियायाश्चाध्याहार इति।

+ अत्र 'अभिध्याय' इति पाठो भाति।

क्षयव्ययाभ्यां योक्तुकामो* वा, क्षेपो† युग्य(योग्य)पुरुषापचयः, व्यस्ये‡ न्यसत्काराद्यर्थं दानम्। क्षयव्ययादौ व्यर्थे जातेऽपि पुनस्तदनुवर्तनमनर्थायैवेति तद्योजनार्थं वेत्यर्थः ॥ स्वारब्धाया।मिति+—॥ सुष्ठु देशकालाद्यौचित्येन आरब्धायामपि यात्रायां तद्विघटनार्थं वेत्यर्थः । मूल इत्यादि—मूलं स्थानीयं यात्रा यातव्याभिधानं तयोः प्रहर्तुं वा । यातव्येत्यादि प्रथममल्पं लाभमादाय पुनर्यातव्येन सन्धिं कुर्यात् । बहु त्वां याचितुं लेवेत्यर्थम्§ । प्रत्युत्पन्नार्थकृच्छ्र इति सहसैवापतितार्थत्वयः । तस्मिन्नविश्वस्तो वेति तस्मिन्पण्यमाने विश्वासाभावात् बहुतरं दास्यामीत्युक्त्वा तद्प्रदानस्य शङ्कितत्वादिति । एवमेतेषु कारणेषु सत्सु तदा.........ल्पमायत्यां ¶प्रभूताश्चेच्छेदिति प्रथमः ॥

||आशाम्यापकारापेक्षणारूपं द्वितीयमाह–मित्रेत्यादिना–॥ ":स्वमित्रस्योपकारं स्वशत्रोः पीडनमपि पालान्तरानुबन्धमवश्यंO तदाप्रभूतमपि लाभमुपेक्ष्यायत्यामविकल्पमपि लाभमिच्छेदित्यर्थः । पूर्वं कृतमुपकारं तेनैव भूयःकारयितुकामो वेति । अस्मासु तदा......... किञ्चिदप्यनपेक्ष्यायत्यामल्पञ्चेच्छेत् । प्राग्वदुपकरिष्यतीति मत्वा वेति ॥

एवमप्रतिग्रहपक्षमाह—दूष्येत्यादि—॥ ✳राजा तमेव गृह्यवरमुख्या दूष्यः । अमित्रः शत्रुः, मूलहरोच्छेदकारी । दूष्यामित्राभ्यां वा मूलहरेण ज्यायसा वा विगृहीतं बन्धुः स्वयमेव वा त्रातुं वा

---

* अत्र 'योक्तुकामः' इति डा. जौली–मू. पाठः।

† 'क्षेपो' इत्येवादर्शपुस्तके पाठः 'क्षयो' इति तु अर्थानुविधायी।

‡ अत्र 'व्यस्ये' इत्यस्य स्थाने 'व्ययो' इति पाठः अर्थानुसारी।

+ अत्र 'स्वारब्धा' मिति डा. जौली मू. पाठः।

§ अत्र स्फुटः कश्चिदर्थो नावगम्यते।

¶ अत्र० 'ल्पमायत्यां प्रभूतञ्चेति' पाठः प्रतिभाति।

|| अत्र 'आगाम्युपकारापेक्षणरूपं' इति अर्थानुगतः पाठः।

O अत्र 'कालान्तरानुबन्धमिति' स्यात्।

✳ अत्र राजेत्यादि दूष्यः इत्यन्तस्य स्फुटोऽर्थः कश्चिन्नावगम्यते, अग्रे च रक्षयितुं वेच्छत्यौतत्सम्बन्धापेक्षि इत्यत्र कश्चिन्मात्रावर्णांशस्त्रुटित इव । एवं न किञ्चिदपि नेच्छेदित्यत्र एकोनञ् अधिकः प्रतिभाति।

मित्रादिना रक्षयितुं वेच्छत्यौतत्संबधापेक्षि वा न किञ्चिदपि नेच्छे-दित्यर्थः ॥

प्रभूतयाच्ञापेक्षं चतुर्थमाह—कृतसन्धिरित्यादिना—॥ प्रागेव कृतसन्धिस्तदतिक्रमार्थी वा। मम प्रभूतदानार्थं परस्वप्रकृतिं कामये दिति परप्रकृतिकर्शनार्थी वा।*[अनेन लब्धर्थदानेन कृतसन्धिं प्रभूतार्थं कृतमुत्संबन्धि दृष्ट्वा मित्राः शिथिली श्रयिष्यत इति संविशेषयितुं वा। परो मामभियोक्ष्यते मम प्रभूतार्थता नैतदशक्यकरणस्याद्यानेन सन्धि रेव नस्यादित्यभिसन्धाय वा। लाभप्राप्तं दानेनाधिकमिति] प्रभूतं वार्थमिच्छेदिति चतुर्थः पक्षः ॥

एवं प्रभूतयाच्ञाकरणे द्वितीयं कुर्यादित्यत्राह—तमितर इति। इतरः याच्यमानः तं क्रमं प्रकारमपेक्षेत निरूपयेत्। अस्य प्रभूतप्रार्थना-कारणादिदम्। अत्र दानमादानं वा युक्तमिति विचार्य तत्कुर्यादित्यर्थः॥

१० याच्यमानस्य चतुर्थपक्षोक्तं प्रकारं पूर्वेषु त्रिष्वप्यतिदिशति-तेनेति। तेनाप्राप्ताधिक्ययोर्याच्ञायां याच्यमानो यथा तत्कारणं विचार्य दानमदानं वा करोति तदाल्पप्रभूतयोः प्रार्थने अल्पमात्रस्य प्रार्थने च त्रिष्वपि पक्षेषु याच्यमाना अन्ये च तद्याच्ञायाच्ञयोः कारणानि विचार्य तदप्यदानं दानं वा कुर्यादित्यर्थः ॥

एवं द्वैधीभाविकसन्धिषु समहीनाधिकलाभनिमित्तस्समाधि-सन्धिभेद इत्युक्तम्। लाभाश्च मित्रहिरण्यभूमय एव। तत्र हिरण्य-भूम्योः सुज्ञानत्वात् पश्चाद्वक्ष्यमाणत्वाच्च, मित्रत्वस्य गुणसम्प-द्व्यवस्थाप्यत्वात् तद्व्यवस्थापनार्थं सूत्रम्—अनुग्राह्यमित्रविशेषा इति ॥

अथवा भूम्यनन्तराः सामन्ता इति तेषु सन्ध्यादय उक्ताः। भूम्येकान्तरं मित्र मित्री†चोक्तम्। तत्र सन्ध्याद्यनुपेक्षणादनु-ग्राह्यत्वमेव वाच्यमितिबुध्या कानि मित्राण्यनुग्राह्याणि कानि नेति विचारार्थं सूत्रं—अनुग्राह्यमित्रविशेषा इतीति। अनुग्राह्याणां तत्स-

---

* [ ] एतत्कोष्ठकगतो व्याख्यांशो विभ्रष्टपदवर्णन्यासः अस्फुटार्थः प्रतिभाति।

† अत्र 'मित्रमित्रं चोक्त'मिति पाठः प्रतिभाति। एवमग्रे सन्ध्याद्यननुपेक्षणा-दित्यस्य सन्ध्याद्यनपेक्षणादित्यर्थः।

हकार्येषु साहाय्यदानेन उपकार्याणां मित्राणां भूम्येकान्तराणां विशेषा उच्यन्त इत्यर्थः ॥

[११] तद्विशेषानेवाह—अरिविजिगीषोवारीत्यादिना*—॥ स्वस्वमिति--अरिविजिगीष्वो† वारेकमित्रस्येतरशत्रुत्वेन भिन्नत्वादिति भावः। शक्येत्यादि‡रशक्यारम्भी कल्यारम्भी भव्यारम्भी स्थिरकर्मानुरक्त +प्रकृति एभ्यः पञ्चभ्योऽनुग्राह्यत्वे विशेषः स्यादित्यर्थः ॥

[१२] स्वयमेवैषां अर्थं विवृण्वन् भेदमुन्मदति—शक्यारम्भीत्यादिना—॥ विषह्यमिति शक्यनिर्माणम्। [१३] कल्यारम्भी दोषरहितं कर्मारभत इति । [१५] स्थिरकर्मा प्रारब्धं समापयति। [१६] अल्पेनाप्यनुग्रहेणेति । साहाय्यार्थमल्पसैन्यदानेत्यर्थः§ ।

एते [१७] कृतार्था इति-अनुगृहीततया कृतकार्याः । सुखेनेति-अक्लेशेन। प्रभूतश्चेति—बहुफलश्चेत्यर्थः ।

[१८] अतः प्रतिलोमा¶ इति, एभ्यो विपरीतः अशक्यारम्भिप्रभृतयः ॥

[१९] एवमभिन्नयोः स्वस्वमित्रयोरनुग्रहे विशेषलाभमुक्त्वा यदैकमेव पुरुषमुभावप्यनुगृह्णीतः, तत्रापि विशेषलाभमाह—तयोरिति। विजिगीषोर्वा एतस्य पुरुषस्यानुग्रहे कार्ये यो मित्रं मित्रतरं वानुगृह्णाति सोऽतिसन्धत्ते विशेषं लभत इत्यर्थः । मित्रतरमिति अतिशयेनमित्रसंपद्युक्तमित्यर्थः । उभाभ्यामप्येकमित्रानुग्रहे अतिशयेन मित्रभूतमनुगृह्णन् विशेषं लभतइत्यर्थः ॥ विपरीत इति‖—अमित्रानुग्राही मित्रमात्रानुग्राही वेत्यर्थः ॥

[२०] अत्र हेतुमाह—मित्रादिति । अनुगृहीतादिति शेषः ॥

---

* अरिविजिगीष्वोस्तु इति डा. जौली. मू. पाठः।

† अत्र 'विजिगीष्वोरेकमित्रस्य' इति पाठः प्रतिभाति।

‡ अत्र 'शक्येत्यादिः—शक्यारम्भी' इत्यादिपाठः प्रकरणानुगतः।

+ अत्र 'अनुरक्तप्रकृतिः' इति पाठः स्यात्।

§ अत्र 'सैन्यदानेनेत्यर्थः' इति पाठः स्यात्।

¶ 'अतः प्रतिलोमेन' इति डा. जौली. मू. पाठः।

‖ 'विपरीत इति' इत्यस्य प्रतीकस्य मूलं डा. जौलीमहाशस्यार्थशास्त्रे नोपलभ्यते।

[२१]इतर इति–अमित्रः । तत्साहाय्यकरणे क्षयादयोऽन्ततः प्रकारश्च फलं स्युरित्यर्थः ॥

[२२]शत्रुरप्युपकृतो मित्रमेव स्यादित्यत्राह–कृतार्थ इति । कृतकार्यदशायां शत्रुर्वैगुण्यं अपकारकत्वमेव भजत इत्यर्थः ॥

[२३]एवं मित्रामित्रयोरनुग्रहमुक्त्वा मध्यमेऽप्याह—मध्यमं त्विति । मित्रं मित्रतरं वेत्यादि पूर्ववद्व्याख्येयम् ।

[२५]मध्यमानुग्रहे विशेषमाह—मध्यममन्वेति* । उभाभ्यामप्यनुगृहीतो मध्यमो यदि विगुणो विरुद्धः स्यात् तदा तस्यामित्रभूतोऽयं स तन्मित्रभूतमितरमतिसन्धत्ते ॥

[२६]तत्र हेतुमाह—कृतप्रयासं हीति । मध्यमेन सह क्लेशेन कृतमैत्रं तस्य यन्मित्रं तदिदानीं अमित्र एव, अरिमित्रन्यायेन तुल्ययोगक्षेमं लभत इत्यर्थः ॥ पूर्वं ह्येको मध्यमस्यामित्रम् । इदानीं तु †भावमपि तस्यामित्रौ । एवं चारिविजिगीष्वोरेको मध्यमामित्रात् प्रच्युतमन्यतस्तु अन्यतरं मित्रमेकार्थतया लब्धवानिति मित्रलाभालाभाभ्यां उभयोरन्यतरस्य विशेषलाभ इति हृदयम् ॥

[२७]मध्यमेऽनुग्रहमुक्त्वमुदासीनेऽप्यतिदिशति–तेनेति । उदासीनानुग्रहेऽपि मित्रामित्रकरानुग्राहकोऽतिसन्धत्ते । तद्वैगुण्ये चामित्रोऽतिसन्धत्त इत्यतिदेशार्थः ॥

[२८]तयोर्दण्डानुग्रहे विशेषान्तरमाह–मध्यमेत्यादिना—॥ मित्रानुग्रहे शौर्यादिमद्बलमपि देयमित्यभिप्रायेण मध्यमोदासीनग्रहणम् । सोतिसन्धीयत इति । आत्मवद्रक्षणीयस्य बलस्य बहिः प्रेक्षणमयुक्तमित्याशयः । (बलादेशान) बलांशदान इति साकल्यदानमयुक्तमित्याशयः ॥ विपरीतामिति‡ दूष्यादिप्रदम् ॥

[३०]शूरादिबलं क्वचिदपि न प्रदेयमेव नेत्याह—यत्र त्विति । तद्वदर्थे यातव्यौ जनमन्यांश्च जनपदलुण्टकाटविकमार्ग-

* अत्र 'मध्यमश्चेदनुगृहीत' इत्यादि डा. जौली. मू. पाठः । अत्रापि 'मध्यममन्विति' स्यात् ।

† अत्र 'इदानीं तूभावपि' इति पाठः प्रतिभाति ।

‡ 'विपरीतः' इति डा. जौली. मू. पाठः ।

प्रतिरोधकादीनपि साधयति,--तत्रान्तरं मौलादिबलानामन्यतमं न तु सकलम् । उपलब्धदेशकालमिति । यत्रारण्यादिदेशे शिशिरवर्षादिकाले वा योद्धव्यम् । तत्र प्रागपि परिचयवन्तमित्यर्थः ॥

३१ तत्रापवादमाह—अमित्राटवीति । अटवि--आटविकाः तद्बलम् । व्यवहितदेशकालमिति–व्यवहितौ निष्प्रकृष्टौ दूरदीर्घौ आयोधनदेशकालौ यस्य तत् तथा । दूरदेशचिरकालसाध्यायोधनमित्राटविकबलमेव दद्यादित्यर्थः ॥

३२ मध्यमोदासीनयोर्यः (यत्) कनीयः हृदयं तदर्ध (र्थं) दण्डं न प्रेषयेदित्यर्थ (मा)ह–यन्तु मन्येतेत्यादिना । एवं कुर्यादिति । यन्तु मन्येत एतन्नानुगृह्णीयादिति वाक्यार्थः । कृतार्थ इति मद्दण्डेन । शत्रून्निगृह्य पुनरेनमपि निगृह्णीयादिति वा । अपाश्रयबहुलां(लं)रतिमित्राटविकभूमिषु अनु-वर्षु········युद्धायोग्येषु प्रावृडादिकालेषु च दण्डं वासयेद्धा* । शत्रुभङ्गप्राप्तफलभाविनं कुर्यादित्यर्थः ॥ द्वैत्येवं यं मन्येत तं दण्डेनानुगृह्णीयादित्यर्थः । व्यासङ्गोपदेशेनेति†—प्रागेवान्यत्रव्यासक्तं तदवसाने प्रेषयिष्यामीति व्याजोक्त्येत्यर्थः ।

३३ अनुग्रहवश्यकार्यत्वेत्याह‡—अवश्यन्त्वित्यादि । तत्कालसहमिति–यस्तदानीमाकुर्वत्तत्रे (त्र) तदायोधनक्षममित्यर्थः ।

३४ एनमिति–दण्डं वासयेदित्यर्थः । कार्यभूमाविति शेषः । योधयेच्चेति–युद्धमपि कारयेच्चेत्यर्थः । बलव्यसनेभ्यश्चेति—क्षीणात्ययमपि सन्नाहादिभ्यः ।

३५ कृतार्थश्चेति–कृतकार्यश्च दण्ड········व सन्निधानादिव्याजेनापवाहयेदित्यर्थः ॥

३६ एवं रक्षणीयं दण्डदाने विधिमुक्त्वा स्वविनाशय एव दण्डो +वापादेय इत्याह–दूष्येत्यादि—॥

---

* विग्रहं नानुतिष्ठेदित्यर्थः । वासयेदिति निवासार्थकस्य वस धातोर्ण्यन्तस्य लिङि रूपम् ।

† 'व्यासङ्गापदेशेन' इति डा० जौली मू पाठः । एष एव पाठोऽर्थानुसारी ।

‡ अत्र 'अनुग्रहावश्यकार्यतेत्याह' इति पाठोऽर्थानुसारी भाति ।

+ अत्र कश्चिद्वर्णांशस्त्रुटित इव, 'दण्डो वा प्रदेय इत्याहेति' वा पाठः स्यात् ।

पक्षान्तरमाह-यातव्येनेति । अनुग्राह्यस्य यो यातव्यः तत्सहितः तमतिसन्दध्यात् तद्देयादधिकं लाभं गृह्णीयादित्यर्थः ॥

एवं सामवायिकानां लाभपणने तत्र सन्धिकरणे प्रभूता प्रार्थना । प्रार्थनातः दानादीनि दण्डदानप्रकारांश्चोक्त्वा सामान्यतः सन्धिविक्रमयोर्निदानं वा········साम्यवैषम्ये इत्याह—सामे ही* त्यादिना । दण्डादितः समे लाभे मित्रभूम्यादौ सति समहीनज्यायसां समवायिनां सन्धिः स्यात् । तस्मिंस्तु विषमे क्रमः स्यादिति । द्वैधीभाविकाः सन्धिविक्रमाः अशेषेण सामान्यत उक्ता इत्यर्थः ॥

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये सप्तमेऽधिकरणे अष्टमोऽध्यायः ॥

---

## (७ अधि, ९ अध्याय,) ११६ प्रक. ॥

### सू० मित्रसन्धिः हिरण्यसन्धिश्च ॥

यातव्यवृत्तिरनुग्राह्यमित्रविशेषाः । उत्तमादिलाभानां प्रार्थनप्रदानयोः कारणादिचिन्तां कृत्वा लाभानामेव उत्तमादित्वनिश्चयो न कृत इति तदर्थं सूत्रम्-मित्रहिरण्यभूमिकर्मसन्धय † इति ॥ तत्र मित्रं नित्यत्ववश्यत्वादिषड्गुणयुक्तमित्यग्रे वक्ष्यते । हिरण्यं हेमादि भूमिर्नित्यामित्रादिका । कर्म दुर्गादिकम् । एभिः सन्धयः पणबन्धाः वक्ष्यन्त इत्यर्थः ॥

लाभानामुत्तमादिभावमाह—संहितप्रयाण इत्यादिना-॥ मित्रादीनां प्रतिलोमक्रमेण श्रैष्ठ्यमित्यर्थः । इतरस्य तत्साध्यत्वं श्रेष्ठमित्याशयेनाह-मित्रहिरण्यभूमीति ॥

हिरण्यस्य मित्रैकसाधनत्वमित्याह--मित्रमिति ॥

मित्रे देशकालावस्थादिभिर्नायमेकान्त इत्याशयवान् प्रयोजकमाह-यो वा लाभ इति ॥

---

* अत्र 'समे हि' इति डॉ० जौली मू० पाठः ।

† 'मित्रसन्धिर्हिरण्यसंधिश्च' इति डा. जौली. मू. सूत्रपाठः ।

[४]एवं लाभानामुत्तमादित्वं व्यवस्थाप्य तन्निमित्तात् (न्) समविषमातिसन्धिभेदानाह-त्वञ्चाहञ्चेत्यादिना- ॥ हिरण्यं लभावहे भूमिं लभावह इत्यादिरेवमेव शब्दार्थः ॥

[५]विषमेत्यादि- ॥ त्वं मित्रमहं भूमिः*। त्वं हिरण्यमहं भूमि*रित्यादिः ॥

[६]तयोरिति-। समविषमसन्ध्योर्द्वयोरप्यतिसन्धिः स्यादेव विशेषलाभादित्यर्थः ॥

[७]तत्र समसन्धावतिसन्धिमाह-समसन्धौ त्विति। सम्पन्नमिति। मित्रत्वादिषड्गुणयुक्तम्। मित्रकृच्छ्रे वेति। विपदवस्थापन्ने मित्र इत्यर्थः। मित्रस्य गुणवत्ता दौर्गत्यञ्च विशेषलाभो ऽतिसन्धिनिमित्तमिति भावः ॥

[८]ननु मित्रकृच्छ्रं विशेषायेत्यत्राह-आपद्धीति। सा हि मिथः स्नेहं द्रढयतीत्यर्थः ॥

[९]कृच्छ्रेऽपि तुल्ये मित्रस्य विशेषान्तरं विमृशति-मित्रकृच्छ्रेऽपीत्यादि ॥

[१०]अवधारयति-नित्यमवश्यमिति। नित्य † श्चावश्यत्वञ्चाग्रे वदयत इत्याशयः ॥

[११]हेतुमाह-तद्धीति। अवश्यानुपकर्तृत्वे व्यभिचारित्वेनापकाराभावनिश्चयादिति भावः ॥

[१३]स्वमतमाह—वश्यमनित्यमिति। वश्यत्वं हि सर्वचित्रमहाभोगत्वं, तेनानित्यत्वे व्यवहारदशायां मित्रमेवेत्यर्थः‡ ॥

[१५]एवं नित्यत्ववश्यत्वयोर्वश्यत्वाख्यं महाभोगत्वमनित्यं श्रेय इति स्वमतमुक्तम्। वश्यत्वतारतम्यस्यानित्यत्वनित्यत्वाभ्यां योगे किं श्रेय इति विमृशति-वश्ययोरपीत्यादिना- ॥

[१६]अत्राचार्यदेश+·········वधारयति-महाभोगत्व§मनित्यं श्रेय

---

* 'भूमिरित्ये'वादर्शपुस्तके पाठः। भूमिमिति तु स्यात्।

† अत्र 'नित्यत्वञ्चेति पाठोऽर्थानुगतः।

‡ अयमेवार्थश्चतुर्दशसूत्रेण स्पष्टीकृतः-यावदुपकरोति तावन्मित्रं भवति, नातः परम्, उपकारलक्षणं हि नाम मित्रमितीति।

+ अत्र 'अत्राचार्यदेशीयोऽवधारयति' इति पाठः प्रतीयते ऽर्थानुगतत्वात्।

§ 'महाभोगमनित्यमि'ति डा. जौली. मू. पाठः।

इति। महाभोगमिति वश्यमुच्यते महोपकारजननात्* ॥

ननु व्याहतमेतत्। वश्यमनित्यं श्रेय इति स्वमततया प्रागुक्तम्। आचार्यैश्चान्यथोक्तस्त्वं † प्रति स्वमतमाचार्यैरुक्तमित्युच्यते। वश्यत्वं हि महाभोगत्वमेवेष्टमिति चेत्। नैवम्। पूर्वं हि नित्यादवश्याद्वा स्वमनित्यं श्रेय इत्युक्तम्। इदानीमत्रत्यान्महाभोगान्नित्यमल्पभोगमिति प्रतियोगिभेदादुभयोर्न्न व्याघातगन्धोपीति ग्राह्यम् ॥

४० आचार्यमते दोषमाह—महाभोगमनित्यादि‡। अपक्रामतीति। अपकारोऽवश्यकार्य इति भयान्मैत्राच्च्यवत इत्यर्थः ॥

४१ अपेक्षितजातं सर्वमपि हिरण्येन सुसाधमित्याह—हिरण्ये दण्डश्चेति+ ॥

४२ हिरण्यभूम्युपकारयोर्मित्रयोः श्रेयो विमृशति—हिरण्यभोगं भूमिभोगं वेति ॥

४३ आचार्यमतमाह—हिरण्यभोगमिति। हिरण्योपकारकं मित्रं श्रेयः। हिरण्यस्य गतिमत्त्वात्। गतिर्नयनानयनयोग्यत्वम्। तद्वत्त्वात् सर्वव्ययप्रतीकारकमिति। § सर्वे धर्मकामाद(द्य)र्था व्या(व्य)याः गुरुलघुव्यसनप्रतीकारांश्च हिरण्यवत् भूम्यः कर्तुं न शक्याः। हिरण्यस्यैवंभूतत्वात् मित्रमपि य(त)थोच्यत इति ग्राह्यम् ॥

४५ स्वमतमाह—मित्रहिरण्ये इति। लाभगुरुलघुत्वचिन्तायां भूमिलाभस्य शेषयोः करण¶त्वमुक्त्वेत्यर्थः ॥

---

* अमुमेवार्थं सप्तदशसूत्रे सुस्पष्टं प्रादर्शयन्मुनिः—तथाहि—महाभोगमनित्यं अल्पकालेन महदुपकुर्वन् महान्ति व्ययस्थानानि प्रतिकरोति, तस्मात्तदेव श्रेय इत्याचार्या इति।

† अत्र 'त्तस्त्वंप्रति' इत्यस्य स्थाने 'त्तम्, सम्प्रति' इति पाठोऽर्थानुगतो भाति।

‡ अत्र '०मनित्यमित्यादि' '०मनित्यमिति,' इति वा पाठः स्यात्।

+ यद्यप्यनयैवानुपूर्व्या, अस्य प्रतीकस्य मूलं डॉ० जौलीसम्पादिते ऽर्थशास्त्रे नोपलभ्यते, तथापि तत्रैकचत्वारिंशत्तमे (४१) सूत्रे 'दण्डश्च हिरण्येन' इति पाठो दृश्यते। तत्साम्यादेव त्वस्माभिस्तत्सूत्रनिर्दिष्टो ऽङ्कोऽत्रापि व्याख्यायां धृत इति।

§ एतद्वाक्यं विभ्रष्टपदवर्णमविस्पष्टार्थमिव प्रतिभाति।

¶ अत्र 'कारणत्वमुक्तमित्यर्थः' इति पाठो ऽर्थानुगतः।

[४६]उपसंहरति—तस्मादिति। भूमेर्मित्रादिकारणत्वाद्भूम्युपकारं श्रेय इत्यर्थः॥

[४७]एवं पुरुषहिरण्यभूमिभोगानां वैषम्यमुक्त्वा पुरुषभेदस्यैवावान्तरभेदे वैषम्यमाह—तुल्यपुरुषभोग*इति। विक्रमः शौर्यम्। क्लेशसहत्वमायाभिरुता†। अनुरागः स्नेहः। सर्वबललाभो—मौलभृतादिषड्विधबललाभ इत्येभिः गुणैः शेषात् पुरुषभोगामित्रकुलाद्विशेषः स्यात्। मित्रस्येति शेषः॥

[४८]हिरण्यभोगेपि अवान्तरतारतम्ये विशेषमाह—तुल्ये हिरण्यभोगे इति। प्रार्थितार्थतेति। यदा यदपेक्ष्यते तदा तद्दायित्वम्। प्राभूत्यमितिविभावयोगित्वम्। अल्पप्रयासतेति अक्लेशता, कार्यकरणत्वम्। सातत्यमिति पुनः पुनरुपकारकरणम्। एभिर्हिरण्यभोगान्तरेभ्यः मित्रस्य विशेषः। एवं त्वमित्रलाभसन्धौ ईदृशं मित्रं लभमानोऽतिसन्धत्ते इत्यर्थः। भूमेरवान्तरविशेषस्त्वग्रे वक्ष्यमाणत्वान्ते‡भोक्त इति ग्राह्यम्॥

[४९]एवं मित्रलाभे तज्जन्यो+रुपकारविशेषैः अतिसन्धानमुक्त्वा सम्प्रति गुणभेदैः तद्भेदनिरूपणमवतारयति—तत्रैतदिति। तत्र—मित्रलाभसन्धौ। एतत् वक्ष्यमाणम्। मित्र.........यंरूपणं भवतीत्यर्थः॥

[५०]तत्र मित्रगुणानाह—मित्र§मित्यादि—॥

[५१]तस्य मित्रत्वादीन् षड्गुणानुक्तानात् ||क्रमेण दर्शयति—ऋते यदर्थेत्यादि—। अर्थप्रमाणयोरर्थसंबन्धः,तस्मादृते रक्ष्यं रक्षकत्वं च ययोस्तयोर्मिथो मित्रमिति। किं निमित्तं तर्हि तदित्याह—पूर्वोपाचितेति। अर्थदानादानाभ्यां विना पूर्वपूर्वजनितयौवनादिसंबन्धितया यद्रक्ष्यं यच्च रक्षकं तन्मित्रं नित्यमित्युच्यत इत्यर्थः॥

[५२]वश्यं लक्षयति—सर्वचित्रेत्यादि—॥ उपकारो हि द्विविधः। अर्थप्राप्तिरनर्थपरिहारश्च। तत्रान्यवश्यस्यैवाद्यभेदनिमित्तान् संज्ञाभेदानाह—सर्वेत्यादि। सर्वभोगं चित्रभोगं महाभोगमिति वश्यं द्विवि-

---

* अत्र 'तुल्ये पुरुषभोगे' इति डा. जौली. मू. पाठः।

† अत्र 'आयाभिरुता' इत्यस्य स्फुटो ऽर्थो नावगम्यते। 'आयासाभीरुता' इति वा पाठः [स्यात्।

‡ अत्र '०त्वान्नेहोक्त' इति पाठो भाति।

\+ 'तज्जन्यै' रिति पाठो भवेत्।

§ अत्र 'नित्यं वश्य' मित्यादि डॉ० जौली मूल पाठः।

|| 'षड्गुणानुक्तान् क्रमेण' इति पाठो ऽत्र शोभनः।

धामिति*। द्वितीयप्रकारेणापि तस्य त्रैविध्यमाह—एकतोभोगीत्यादि—। एकतोभोगि उभयतोभोगि सर्वतोभोगीति च त्रिविधमित्यर्थः ॥ वक्ष्यन्ति तेषां वश्यपत्तनग्रामखनिसञ्जातेन रत्नसारफल्गुतुल्यद्रव्यहस्तिवनव्रजसमर्थेन यानवाहनेन यावद्बहुश उपकरोति तच्चित्रभोगम्। यद्दण्डेन कोशेन वा महदुपकरोति तन्महाभोगम्। यद्दण्डकोशभूमीरुपकरोति तत्सर्वभोगमिति ॥ अर्थप्राप्तिमुक्त्वा अनर्थपरिहारमाह—यदि मित्रमेकतः प्रतिकरोति तदेकतोभोगि। यदमित्रमासारञ्चोभयतः प्रतिकरोति तदुभयतोभोगि। यदमित्रासारप्रवेशाटविकान्, सर्वतः प्रतिकरोति तत्सर्वतोभोगीति ॥

५३एवं नित्यत्ववश्यत्वे लक्षयित्वा वश्यभेदांश्च प्रदर्श्य वश्यचरहित्यत्वरहितं† वश्यञ्च दर्शयति—आदातृ वेत्यादिना श्लोकद्वयेन। तत्रावश्यनित्य‡त्वमाह—आदातृ वेत्यादिना—। हिंसायाभाहविलोपा+दिद्वारा शत्रुष्वेव दानादानादिकं कुर्वद्यज्जीवति तद्विजिगीषोरनुपकारकं, अरिर्हिंसनेऽपि तदनुच्छेद्यञ्च। हेतुमाह—दुर्गाटव्यपसारव§दिति। अव(प)सारो हन्तस्यापसुरणस्थानम्||। दुर्गादिमत्वात् तदनुच्छेद्यमित्यर्थः ॥

---

* अत्र 'त्रिविधमिती' ति पाठोऽर्थतः प्रक्रियातश्च गम्यते।

† अत्र 'वश्यभेदांश्च प्रदर्श्य' इत्यतोऽग्रे 'वश्यत्वरहितं नित्यं, नित्यत्वरहितं वश्यञ्च दर्शयति' इति पाठोऽर्थानुसारी भाति।

‡ 'नित्यमाह' इति पाठोऽर्थानुगतः प्रतीयते।

+ अत्र 'हिंसया—अभयविलोपादिद्वारा' इति पाठो भाति। अयंभावः—'हिंसया' इति मूलश्लोकप्रतीकपदम्, तस्यैव विवृतिमाह—'अभयविलोपादिद्वारा' इति।

§ अत्र 'दुर्गाटव्यपसारि' इति डॉ० जौली सम्पादितेऽर्थशास्त्र मूलपाठः।

|| बहूनत्र पाठभेदान् कल्पयति। तथाहि—'अपसारो—हतस्यापसरणस्थानम्' हतस्य हन्यमानस्येत्यर्थः। यो हि परैर्हन्यते, आत्मविनाशमाशङ्कमानः स स्वापसरणस्थानं क्वचिदन्विष्य निश्चिनोति, तदेवापसार 'इत्युच्यते'। 'अथवा ह्यन्त्यस्यापसरणस्थानम्' इति पाठो भवेत्। तत्र अन्ते—मध्ये तिष्ठतीति अन्त्यः, तस्य मध्यस्थितस्यापसरणस्थानमित्यर्थः स्यात्। अथवा—'हन्तास्यापसरणस्थानम्' एवं पाठः स्यात्। हन्त इति भावप्रकाशे; अन्यः स्पष्टोऽर्थः। अथवा-'हन्तुरस्यापसरणस्थानं' इति स्यात्।

४४ वश्यमनित्यमाह–अन्यत इति । वश्यमुपकारमपि स शत्रुणा-श्यन्तु............यच्छायान्तु क्षुद्रव्यसनसंयुक्तं यदपि विजिगीषुणा सहोपकारार्थं स लभते तदुपकारनिमित्तं मित्रमित्यर्थः । अत्यु *पमिति अनित्यम् ॥

४५ एवं नित्यवश्यभेदान् प्रदर्श्य वयू †तथानपितृपैतामहत्वानां स्फुटत्वात्तल्लङ्घनेनाद्वै(वि?)ध्यं लक्षयति–एकार्थेनेत्यादि–। अर्थानर्थाभ्यां सम्बन्धः एक अभियानस्य तत्तथा । यत एवं तस्माद्वश्यत्वानित्यत्वयुक्तमापाद्य द्वै(वि?)ध्यत्वादेकत्वमित्रभाविसंज्ञमेकान्तमित्रमित्यर्थः ॥

४६ एवं समसुखदुःखत्वान्मित्रभाविसंज्ञमेकान्तमित्रमुक्त्वा तद्विपर्ययरूपमुभयभावित्वमाह–मित्रभावादित्यादि–। उभा......‡त्वं हि त्रिविधम् । उभयोरप्याकिञ्चित्करतया वा । उभयोरपि सम्यगनुग्राह्यतया वा । दौर्बल्येनोभयानुवर्तित्वाद्वेति । मित्राद्यमिदम् । मित्रभावादिति, असाधारणादिति शेषः । असाधारणान्मित्रभावाद्धि मित्रमनित्यं स्यात् । शत्रुसाधारणात्तु मित्र एव मित्रं चलमनित्यं स्यात् । विजिगीषोरसाधारणस्य शत्रुसाधारणस्य वोपकारस्य करणात् हि नित्यत्वे स्याताम् । उभयत्राकिञ्चित्करणत्वे चोदासीनत्वात् उभयभावि स्यादित्यर्थः ॥

४७ औदासीन्यादुभयोरनुपकारकमुभयभावीत्युक्त्वा यदशक्ततयानुपकारकं तदाह—विजिगीषोरित्यादि—। विजिगीषोरसाधारणस्य शत्रुसाधारणस्य वोपकारकस्य मित्रस्य यदाकिञ्चित्करं तदुदासीनतया उभयभावीत्यर्थः ॥

+ [औदासीन्यादुभयोरनुपकारकमपि उभयोर्विशिष्टत्वादुभयभावीत्युक्त्वा यदशक्ततयानुपकारकं तदाह–विजिगीषोरित्यादि—

* अत्र 'अध्रुवमिति' पाठो ऽर्थानुगतः ।

† अत्र 'लघूत्थान' इति पाठो ऽर्थानुगतः ।

‡ अत्र 'उभयभावित्वं हि त्रिविधम्' इति पाठो भवेत् ।

+[ ] एतत्कोष्ठकान्तर्गते पाठे पूर्वोक्तात्पाठात्, प्रथमपंक्तौ 'अपि उभयोर्विशिष्टत्वात्' इत्यधिकपाठरूपं, अग्रेच 'साधारणस्य' इति शब्दस्थाने 'साधारण्यस्य' इति पाठवैलक्षण्यरूपं विशेषं पश्यामः । अर्थभेदन्तु न कञ्चित्प्रतीमः । एष पाठो लेखकप्रमादवशादादर्शपुस्तके ऽसकृल्लिखित इति सम्भावयामः ।

विजिगीषोरसाधारण्यस्य शत्रुसाधारण्यस्य वा उपकारकस्य मित्रस्य यद्किञ्चित्करं तद्दुदासीनतया उभयभावीत्यर्थः ॥]

औदासीन्यादुभयोरनुपकारकमपि उभयोर्विशिष्टत्वादुभयभावीत्युक्त्वा यदशितो*नुपकारकं तदाह–विजिगीषोरित्यादिना–।विजिगीषोर्भूम्यानन्तर्येणामित्रभूतं शत्रोरन्तर्द्धितानि†वारतां प्राप्तम्। अत एव मित्रं सद्दौर्बल्यादुपकारासक्तं वास्तु सर्वथानुपकारकम् । न चोदासीनम्। अतोनुपकारकं मित्रमेवोच्यत इत्यर्थः ॥

[५८] उभयानुग्राहकमुभयभाव्याह–प्रियं परस्येत्यादि— । परस्य यदिष्टं यच्च रक्ष्यं स्वपूज्येन गुर्वादिना सम्बन्धवच्च यत्तच्छत्रुसाधारणं तदुभयभावीत्यर्थः ।

[५९] उभयोरुदासीनमुभयभावीत्युक्तम् । तत्रौदासीन्यस्य किं निमित्तमित्यपेक्षायां तद्भेदानाह–प्रकृष्टभौममित्यादि–। प्रकृष्टभौमं विप्रकृष्टदर्श‡सम्बन्धि। सन्तुष्टं प्राप्तांशेन सन्तुष्टम्। बलवन्महाबलतया सिंहहिरण्यन्यायेना+विद्वेषम्। अलसं, व्यसने अवमानितं उपेक्षितम् एतानि मित्राण्युदासीनानि स्युः ॥

[६०] दौर्बल्यादुभयानुवृत्त्योभयभाव्याह—अरेर्नेतुश्चेत्यादि-। अरेर्विजिगीषोश्च बुद्धिदौर्बल्याद्यदुभयाविद्विष्टत्वं§ भूत्वानुवर्तते तदुभयानुवृत्त्योभयभावीत्यर्थः ॥

[६१] एवं मित्रभेदानुक्त्वा चलबुद्धिरसन्धेय इति प्रागेवोक्तम्। तत्र तस्यासन्धेयत्वमर्थप्राप्त्यभावादनर्थापत्तिभयाद्वा, पूर्वत्रार्थप्राप्तिसन्देहेपि सन्धेयता स्यादिति मन्वानोऽनर्थप्राप्तिनिश्चयादित्याह–कारणाकारणध्वस्तमित्यादि–। कारणात्तद्दोषाद्वा । अकारणात्स्वदोषाद्वा । ध्वस्तमपगमितम् । कारणाकारणगतमिति–कारणात् परगतदोषाद्वा। अकारणात् स्वदोषाद्वा पुनरागतम् । एवंभूतं मित्रं यः स्वीकरोति स मृत्युं स्वयमाश्लिष्यतीत्यर्थः

* अत्र 'यदशक्तितोनुपकारकं' इति पाठः स्यात्।

† अत्र 'शत्रोरन्तर्द्धितां निवारणतां (निवार्यतां वा)' इति पाठः स्यात्।

‡ अत्र 'दर्श' इत्यस्य स्थाने 'देश' इति स्यात्।

+ अत्र 'सिंहहरिणन्यायेन' इति पाठः स्यात्।

§ अत्र 'उभयाविद्विष्टत्वं' इति पाठो ऽर्थानुसारी भाति।

६२ एवं मित्रलाभप्रसङ्गान् मित्रभेदानुक्त्वा सामान्यत एव लाभस्य कालस्वरूपभेदाद्वैषम्यं विमृशति–क्षिप्रमित्यादिना।

६३ अत्राचार्यमतमाह—क्षिप्रमिति। कार्यदेशकालसंपादक* इति–कार्यसिद्धयविषयदेशकालयोः सन्निकर्षविप्रकर्षादिविषयश्च निश्चयं यथासमर्थितमेव दर्शयन् अल्पोपि लाभः श्रेयानित्यर्थः॥

६५ स्वमतमाह–चिरादित्यादि—॥ अविनिपातीति। विनिपातः प्रतिबन्धः तद्रहिततया निश्चितः। ‡विजयसधर्मेति। यथा शाल्यादिः। निश्चिता..........रथफलगौरवं निश्चितावग्रहादिप्रतिबन्धाभावश्च तयेत्यर्थः। तत्किं नदीजलाद्यभावनिश्चये अवग्रहादिसंभावनायाञ्च शालिबीजान्यु §चयन्ते इत्यत्राह–विपर्यय इति। कार्यदेशकालसम्पादकाल्पलाभ इत्यर्थः॥

६६ उक्तं सर्वं संक्षिप्योपसंहरति–एवमित्यादिना––॥अयमर्थः। प्रथमत एव कार्यस्य लाभस्तावन्निश्चयः, ततो मित्रभूमिहिरण्यात्मनः तस्य गुणोदयो विशेषरूपो निश्चयः तेष्वन्यतमः श्रेय (श्रेयान्) इति। ततश्च मित्रादन्यतमेपि षड्गुणसंपन्नत्वादिरूपमविशेषं दृष्ट्वा निश्चित्य स्वार्थस्य सिद्धौ तत्परस्तदनुगुणसाधनानुष्ठानपरः सामवायिकैः कृतसन्धिः यातव्यं प्रति यायादित्यर्थः॥

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये नवमोऽध्यायः॥

# ७ अधि. १० अध्या.

## ११६ प्रक. ॥ भूमिसन्धिः॥

तदेवं मित्रहिरण्यभूमिकर्मसन्धय इति सूत्रे मित्रहिरण्यसन्ध्योर्विशेषान् प्रदर्श्य क्रमाद्भूमिसन्धिविशेषानाह–त्वञ्चाहञ्चेत्यादिना–॥

२ उभाभ्यामपि भूमेरेव लाभात् समसन्धिरित्याशयवान् छत्राद-

* अत्र 'संवादक' इति डॉ० जौलीमूलपाठः।

‡ 'बीजसधर्मा' इति डॉ० जौलीमूलपाठः।

§ अत्र 'उप्यन्ते' इति पाठोऽर्थानुगतः प्रतीयते।

तिसन्धिमाह—तयोरित्यादि—। तयोररिविजिगीष्वोः। प्रत्यवसित*ार्थ इति—सेतुबन्धादिकर्मव्ययेष्वविडम्बिन्येन सन्निहितार्थोऽस्येति। तथा गुणवत् भृत्यतादिर्वा ऽर्थशब्दार्थः। सम्पन्नामिति, या भूमेः संपदुक्ता अनित्यामित्रत्वादिका तद्व..........†मितीत्यर्थः।

३ सम्पन्नभूमिलाभे विशेषमाह—तुल्य इति। बलवन्तमाक्रम्येति भङ्क्त्वेत्यर्थः।

४ बलवत्या‡क्रान्ते कथमतिसन्धानमित्यत्राह—भूमिलाभमित्यादि। भूमिहरणाच्छत्रोः कर्शनमात्मनः प्रतापञ्चाप्नोति यत इत्यर्थः।

५ ननु दुर्बलाद्भूमिलाभेपि शत्रुकर्शनमस्त्येव सौकर्यन्त्वधिकमित्यत्रा×ह—दुर्बलादिति।

६ सत्यं दुर्बलाद्भूमिलाभे सौकर्यमस्त्येव, किन्तु भूमिलाभ एव दुर्बलः स्यात्। दौर्बल्यं हि नाम-लाभाद्धीनत्वम्। यथोक्तं पुरस्तात्—"मित्र§लाभानां उत्तरोत्तरो लाभः श्रेयान्" [प्रक. ११६, अधि. ७, अध्या. ९, सूत्र १] इत्युक्त्वा "यो वा लाभः सिद्धः शेषयोरन्यतरं साधयति" [प्रक. ११६, अधि. ७, अध्या. ९, सूत्र २] इति। तेनैव द्वयोर्वा लाभयोरन्यतरं भावयन्ति। स हीन इत्यपि लभ्यते। लाभस्य च दौर्बल्यं हीनत्वमेवेति। भूमिलाभो हीनः स्यात्, तथा च कथमतिसन्धानवार्त्तेत्यर्थः।

ननु कोऽसौ लाभः? यमयं भावयेदित्यत्राह—सा‖मन्तश्चेति। तस्य दुर्बलस्य राज्ञः सामन्तो भूम्यनन्तरः, सोऽपि विजिगीषोर्मित्रभूतः। तमेघ दुर्बलं मित्रं गच्छे¶त् अभिसरेदित्यर्थः। तेनैकीभावादित्यर्थः।

---

* 'प्रत्युपस्थितार्थः' इति डॉ० जौलीमूलपाठः।

† अत्र कदाचित् 'तद्वर्ती भूमिमितीत्यर्थः' इति पाठः स्यात्।

‡ 'बलवताक्रान्ते' इति वा पाठो भवेत्। बलवता परेणाक्रमणे कृते सतीत्यर्थः। यथाश्रुतपाठे तु बलवति—सुमहति—घोरे आक्रमणे सतीत्यर्थः स्यात्।

× '०मित्याह' इति पाठो ऽत्र शोभनः स्यात्।

§ डॉ० जौली सम्पादिते ऽर्थशास्त्रे 'मित्रहिरण्यभूमिलाभानां उत्तरोत्तरो लाभः श्रेयान्' इति मूलपाठो दृश्यते। युक्तश्चैष पाठः, तथार्था ऽनुगमात्।

‖ अत्र 'तत्सामन्तश्च' इति डॉ० जौलीमूलपाठः।

¶ 'गच्छति' इति डॉ. जौलीमूलपाठः।

अयमाशयः–दुर्बलस्य हि कर्शनमुच्छेदनं वा क्रियेत, उभयथापि तत्सामन्तो बिभ्येत्, एनमुच्छिद्य मामप्युच्छिन्द्यादिति। ततश्च तत्साहाय्यदानेनास्य सोऽप्यमित्र एव स्यात्। एवं तदुच्छेदने ऽपि स एव भूम्यनन्तरतया शत्रुः स्यात्। ततो हीनो भूमिलाभो नातिसन्धाय स्यात् सौकर्यमात्रेण; अपि तु मित्रभूतस्यैकस्यामित्रा*र्थापत्तौ तत आरभ्य मित्रपरम्पराया अपि तथात्वापत्त्या मण्डलप्रद्वेष एव स्यादितिहृदयम्। धार्मिकदुर्बलोच्छेदे वैतदिति द्रष्टव्यम्।

उभयोरपि बलवच्छत्रूत्सादनेन तद्भूमिलाभयोर्दुर्गादिमत्तया स्थिरमविचाल्यं शत्रुमुत्साद्य भूमिं लभेत, सोऽतिसन्धत्ते इत्याह- तुल्ये बलीयस्त्व इति।

कुत एवमित्यत्राह—दुर्गादिप्राप्तिर्हीति। तद्दुर्गलाभात् स्वभूमिं रक्षति, शत्रुनाटविकांश्च प्रतिहन्तीत्यर्थः।

दुर्गादिरहितात् भूमिलाभेऽप्यसन्धानमाह—तुल्ये‡ चलामित्रादिति। शक्य सामन्तत इति–दुर्बलात्सामन्तादनन्तराद्विशेष इति॥ दुर्बलसामन्तां भूमिं गृह्णा+त्, प्रबलसामन्तां गृह्णन्तमतिसन्धत्त इत्यर्थः।

तत्र हेतुमाह—दुर्बलेति। क्षिप्राप्यायनयोगक्षेमेति–अचिरेणाप्यायनौ वृद्धिकारणयोगक्षेमौ यस्यास्सा तथा। योगोऽपूर्वकर्मप्रवर्त्तनम्, क्षेमः पूर्वक (र्म) रक्षणम्। सद्यो वृद्धिकरयोगक्षेमः स्यादित्यर्थः।

विपरीतेति। चिराप्यायित योगक्षेमा। अत एव राज्ञो न कोशदण्डक्षयाय स्यादित्यर्थः।

---

* अत्र 'अमित्रत्वापत्तौ' इति पाठो ऽर्थानुसारी भाति। यथाश्रुतपाठे तु अमित्ररूपो योऽर्थः, तस्यापत्तौ–प्राप्तौ सत्यामिति तदनुगत एवार्थः स्यात्।

† अत्र 'दुर्गावाप्तिर्हि' इति इति डॉ० जौलीसम्पादितेऽर्थशास्त्रे मूलपाठः।

‡ 'तुल्ये' इत्यंशः डॉ० जौलीसम्पादितमूलपुस्तके नोपलभ्यते। अर्थानुगतश्चाप्ययं पाठः। क्वचिल्लेखकप्रमादवशात् पूर्वसूत्रादत्राप्यपतितमिदं पदमिति सम्भावयामः।

+ अत्र 'गृह्णीयादि' ति 'गृह्णाति' इति वा पाठः शोभो भाति।

[12] सम्पन्नेऽरिमित्रविरहस्य च द्वयोः कतरच्छ्रेय इति विमृशति-सम्पन्नेत्यादिना। नित्यमित्र*त्वाञ्चाग्रे वदयति।

[13] अत्राचार्यमतमाह—सम्पन्नेत्यादिना।

[14] अत्रैव युक्तिमाह—सम्पन्ना हीति। सम्पन्ना-कोशदण्डसम्पादनद्वारा शत्रुप्रतिघातिनीत्यर्थः।

[17] स्वमतमाह—नित्यामित्रेति। एकामित्रां भूमिमाप्नुवतो बहुमित्रापत्तिः स्यादित्यर्थः।

[18] [19] यतश्चानित्यशत्रोर्भूमिं लभते। सद्यापका†राभ्यां शाम्यति। न तु नित्याः शत्रवः, सा भूमिर्हेयेत्यर्थः।

[20] का पुनर्नित्यामित्रा नाम, या एवंभूता? इत्यत्राह-यस्या हि भूमेरित्यादि। यस्याः प्रत्यन्ता-विषयान्ताः, बहुभिः शैलवनदुर्गादिपङ्क्तैर्युक्ताश्चौरैः गूढचारिभिः लणकैः‡ म्लेच्छैः शबरपुलिन्दादिभिराटविकैश्चाक्रान्तौ,+ सा नित्यामित्रेत्यर्थः।

[21] भूमेः प्रत्यासन्नमहत्वयोः किं श्रेय इति विमृशति-अल्पेत्यादिना।

[22] अवतारयति§-अल्पेत्यादि।

[23] हेतुमाह-सुखा हीति। अयत्नसाध्यप्राप्त्यादिकेत्यर्थः। अभिसारयितुञ्चेति-पराभियोगादौ स्वदेशं नेतुमित्यर्थः।

[24] व्यवहिता दूरस्था, सा तु न सुखेत्याह-विपरीतेति।

[25] व्यवहिताव्यवहितयोरपि भूम्योः दण्डसाधारणत्वमात्मसा-

---

* 'नित्यामित्रत्वञ्च' इति पाठो ऽत्रार्थानुगतः प्रतीयते।

† अत्र 'सद्योपकारानपकाराभ्यां' इति पाठोऽर्थानुसारी, मूलसूत्रानुरोधीच। यदि 'सद्युपकारानपकाराभ्यां' इति पाठः स्यात्तदा ऽतीव शोभनः। एवं सति स हि—अनित्यशत्रुर्हि उपकारानपकाराभ्यां (कृतेन उपकारेण, अकृतेन वा ऽपकारेण, इत्यर्थः, ताभ्यां) शाम्यति इत्यनुगत एवार्थः स्यात्। अथवा 'सद्य एवोपकारानपकाराभ्यां' इति पाठोऽपि शोभनः। तदा सद्यएवेत्यस्य शाम्यतीत्यनेन योगं कृत्वा सद्यएव शाम्यतीत्यर्थः स्यात्। नित्यास्तु शत्रवो न शमतां यान्तीति शेषः। अतः सा भूमिर्हेया एवेत्यर्थः।

‡ अत्र 'लुब्धकैः' इति 'लोलुपैः' इति वा पाठः सम्भाव्यते।

+ 'आक्रान्ता' इति पाठः स्यात्।

§ 'अवधारयति' इति पाठोऽत्र शोभनो भाति।

धारणत्वं* वा श्रेय इति विमृशति–तयोरपीति† । भूमिरिति‡ ।

[२६] श्रेयसीत्यवधारयति–आत्मधारणेति ।

[२७] हेतुमाह–सा हीति । रक्षणपर्यायाभिधारणा कोशदण्डाभ्यां साध्या । तौ च स्वयमर्थौ । अतोऽन्यानपेक्षत्वात् सैव श्रेयसीत्यर्थः ।

[२८] विपरीतेति । न स्वसमुत्थकोशदण्डासाधा+रणेति । दण्डेनान्य समुत्थेन धारणं रक्षणं यस्याः सा तथा । दण्डस्थानमिति–अन्यतः समुत्थस्य दण्डस्य स्थानम् । स्वरक्षणार्थमन्योऽर्थदण्डसापेक्ष§ इत्यर्थः ।

[२९] शत्रोरप्रज्ञत्वप्राज्ञत्वयोः किं श्रेय इति विमृशति–बालिशादित्यादि ।

[३०] अवधारयति–बालिशादित्यादि ।

[३१] सुप्रापा||–सुखेनोच्छेत्तुं शक्येत्यर्थः । स्वनुपाला¶–सुखेनानुपाल्या । पुनः प्रत्यादानभयरहिता च भूमिः स्यादित्यर्थः ।

[३२] विपरीतेति । प्राज्ञाल्लब्धा भूमिः दुष्प्रापत्वादिमतीत्यर्थः । तत्र हेतुमाह–अनुरक्तेति-शत्रावनुरक्तत्वात् ।

[३३] पीडनीयेत्यादि । विजिगीषुणा मित्रेण चोभयतः पीडनीयो नियन्त्रणीयः । उच्छेदनीयः–स्थानीयात् भ्रंशयितव्यः । तयोर्मध्ये

---

* अत्र 'दण्डधारणात्मधारणा वा भूमिः' इति डॉ० जौली. मूलपाठः ।

† 'तयोरपि' इत्यस्य प्रतीकस्य मूलं डॉ० जौली सम्पादितेऽर्थशास्त्रे नोपलभ्यते । वस्तुतस्त्वत्र 'व्यवहिताव्यवहितयोरपीति' इति प्रतीकं सूत्रानुसारि स्यात् । लेखकप्रमादवशात्तु क्वचिद् 'व्यवहिताव्यवहि.' इत्यंशः प्रतीकस्य भ्रष्टः प्रतीयते ।

‡ 'भूमिरिति' पदं पञ्चविंशतितमसूत्रमध्यगतस्य प्रतीकं प्रतीयते । परमस्य कामपि विवृतिमत्र नोपलभामहे, तेन सन्दिह्यते–भूमिरिति प्रतीकं स्यात् ? षड्विंशतितम सूत्रस्यावतरणिकांशो वा ? तत्र विवृतेरसत्त्वेन प्रतीकप्रयोजनाभावान्न प्रतीकम्; अवतरणिकांशत्वे तु 'भूमिरिति श्रेयसीत्यवधारयति' इत्यानुपूर्वीकः पाठः स्यात् तस्य च, इति शब्दस्य स्वरूपपरत्वेन–भूम्योः दण्डधारणात्मधारणरूपयोर्मध्ये कतरा श्रेयसीत्यवधारयति, इत्यर्थो भवेत् । अथवा 'अवधारयति' एतावन्मात्रं प्रतीकम् । 'भूमिरिति' अस्याग्रे 'श्रेयसीति' योज्यम् ।

+ अत्र 'दण्डधारणा' इति पाठः स्यात् ।

§ अत्र 'अन्यार्थदण्डसापेक्षा' इति पाठो भाति । भूमिरिति शेषः ।

|| 'सुप्राप्या' इति डॉ जौली. मूलपाठः ।

¶ 'अनुपाल्या' इति डॉ० जौली. मूलपाठः ।

उच्छेदनीयाद् भूमिलाभः श्रेयानित्यर्थः। उच्छेदनीयत्वञ्च दुर्गमित्रादीत्यप्रति*स्तब्धत्वं तदधारितत्वम्।

[३४]तच्छेद्यस्त्वमुपपादयति—उच्छेदनीयो हीति। अपाश्रयो धारकः, तस्य दौर्बल्येन भावे वा दौर्बल्यादव(प)सरन् धारकाहितोऽयमिति बुद्ध्वा† प्रकृतिभिस्त्यज्यत इत्यर्थः।

[३५]प्रतिस्तब्ध‡ इति। गच्छतो धारणं प्रतिस्तम्भनम्। दुर्गमिति श.........त्राशितात् पीडनीयः। तेन प्रकृतिभिस्त्यज्यत इत्याह—पीडनीय इति।

[३६]द्वयोरपि दुर्गप्रतिस्तब्धके विशेषमाह—दुर्गेत्यादि। द्वयोरपि दुर्गवतोः स्थलनदीदुर्गीयाभ्यां भूमिलाभविमर्शे स्थलदुर्गीयात् लाभः श्रेयान् इत्यर्थः।

[३७]हेतुमाह—स्थालेयं हीति। स्थले भवं दुर्गं सुखेनायत्ते न साध्यम्। अवरोधो+ निरोधनम्। अवमर्दनं भञ्जनम्। अवस्कन्दः§ अविज्ञातैः प्रविश्य ग्रहणं यस्य तत्तथा। अनिस्राविशत्रु चेति—शत्रोरपसरापेक्षायामशक्यनिस्सरणं चेत्यर्थः।

[३८]एवं स्थलदुर्गोच्छेदादौ कार्यं प्रदर्श्य नदीदुर्गस्य दुश्छेद्यत्वमाह—नदीदुर्गन्त्विति। द्विगुणक्लेशकरमिति, स्थलदुर्गादिति शेषः। क्लेशकरत्वेहतुः दुर्गवतः शत्रोरशितवतनिष्पादकतया दुरुच्छेद्यत्वमित्याह—उदकञ्चेत्यादि। पातव्यं—पानयोग्यञ्च, फलवृद्ध्यौषध्यादिहेतुश्चेत्यर्थः। ततश्च नदीदुर्गीयाद् भूमिलाभो न श्रेयानित्यर्थः।

[३९]विशेषान्तरमाह—नदीपर्वतेत्यादि। नदीपर्वतदुर्गीयाभ्यां भूमिलाभविमर्शे सतीति योज्यम्।

---

* अत्र 'मित्राद्यप्रतिस्तब्धत्वं' इति पाठः स्यात्।

† अत्र 'बुद्ध्या' इति पाठो वा स्यात्।

‡ इदं सूत्रस्यादिप्रतीकं नास्ति, अपितु मध्यप्रतीकम्। डॉ० जौलीसम्पादितेऽर्थशास्त्रे मूलपाठस्तु 'न पीडनीयो दुर्गमित्रप्रतिस्तब्ध इति' एवं रूपो वर्त्तते।

+ अत्र 'सुरोध' इति डॉ० जौली. मूलपाठः।

§ 'आस्कन्द' इति डॉ० जौली. मूलपाठः।

४०........*त्वमाह—नदीदुर्गेश्चेति†। हस्तिभिश्च, स्तम्भः धारकः, धृतैः‡, संक्रमैश्च सेतुबन्धैश्च नौभिश्च सुतरम्। अनित्य+गाम्भीर्यमिति, जलपूरस्य कादाचित्कत्वादिति भावः। अव (प) स्राव्युदकश्चेति, तद्भेदादपसृतजलन्त्वस्यामित्यर्थः।

४१पर्वतदुर्गस्य दुस्साधत्वादाह—पावकन्त्विति§। स्वारक्षमितनक|| भेदनादिप्रवृत्ता (त्त) शिलावर्षादिना ...प्रतीकारमित्यर्थः। दुरुपरोधीति¶, अशक्योपरोधम्, शिखरस्थैरुपरोधकानां, ...छिद्रादि-रन्ध्रापेक्षणेन सुखावस्कन्दनत्वादिति भावः। कृच्छ्रारोहणमिति, कण्टकिगुल्मविषमशिलाभिरिति शेषः। शरादिभिः कतिपयघातेपि न सर्ववधः शक्य इत्याह—भग्ने चेति।

४२शिलेत्यादि। बद्धवैरतया प्राणनिरपेक्षाणामप्यारुरुक्षूणां महापकारिणां शत्रवादिक्षयन्ते तच्छिलावृक्षादिप्रमोक्षश्च प्रतीकारः शक्य इत्यर्थः।

४४निम्नयोधिन इति। नावादिभिरुदके स्थित्वा योद्धारः।

४५खनकादीनामवच्छिन्नदेशकालत्वं कथमित्यत्राह—खनकादीति✱। तेषां शस्त्रवत् खातस्यापि उपकरणतयाऽपेक्षितत्वात् तस्य च सर्वत्राभावात् ते सुसाधाः। आकाशयोधिनस्तु सर्वदेशकालयोधित्वाद्दुस्साधाः। तथा च खनकेभ्यो लाभः श्रेयानित्यर्थः।

४६एवमुक्तप्रकारेभ्यो भूमिलाभे विजिगीषुः सर्वतो विशेषभागी स्यादित्याह—एवंविधेभ्य इत्यादिना। एवंविधेभ्य इति—ये बलवदुप-

* अत्र 'नदीदुर्गस्य सुसाध्यत्वमाह' इति पाठः सम्भाव्यते।

† 'नदीदुर्गं हि' इति डॉ० जौली. मूलपाठः।

‡ धारकैः स्तम्भैरित्यर्थः।

+ अत्र 'अनित्यगाम्भीर्यम् इति डॉ० जौली. मूलपाठः।

§ 'पार्वतन्त्विति' इति पाठो भवेत्।

|| अत्र 'स्वारक्षमित्यनेक.' इति पाठः सम्भाव्यते। 'स्वारक्षमिति' मूलसूत्र प्रतीकम्, तदनु 'अनेकभेदनादि.' इति तदर्थनिरूपणम्।

¶ अत्र 'दुरवरोधि' इति डॉ० जौली. मूलपाठः।

✱ 'खनका हि' इति डॉ० जौली. मूलपाठः।

क्रमेण खनकान्ता उक्तास्तेभ्यः, भूमिलाभैः, संहितेभ्यः सामवायिकेभ्यः, यातव्यादिभिश्च विजिगीषुरतिशयं गच्छेदित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वविरचितायां कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये दशमोऽध्यायः ।

## ७ अधि. ११ अध्या. ११६ प्रक.

सू.—अनवसितसन्धिः ।

मित्रहिरण्यभूमिकर्मसन्धौ भूमिसन्धिः, तदेवं 'मित्राहिरण्यभूमिकर्मसन्धय' इतिसूत्रेण सामवायिकैः सह सन्धिभूमिविशेषानुक्त्वा भूमेः शून्यनिवेशने कर्मविशेषे अनवसितसन्धीनाह—त्वश्चाहश्च शून्यमित्यादिना । अनवसितसन्धिरिति, जनपदखनिद्रव्यहस्तिनखान*नानां शून्यनिवेशनस्य फलसिद्ध्याऽत्रापि निश्चयाभावात् कालनियमाभावाच्च नावसितसन्धित्वमस्येति केचिद् व्याचक्षते । तदसत् । सर्वेषामपि दुष्कर्मणां फलसन्देहस्याविशिष्टत्वात्तदन्तरा प्रतिबन्धादिसम्भवात् ।

ननु भूमिसन्ध्यनन्तरं कर्मसन्धौ वक्तव्ये कोयमन्तराऽनवसितसन्धि†मत्रवाच्यं शून्यनिवेशनस्य कर्मत्वात् कर्मसन्धावेवास्यान्तर्भाव इति । "उक्ताः कर्मसन्धय" (७ अधि., १२ अध्या., ४२ सूत्र) इति उत्तरार्धतया कर्मसन्धीनामुपसंहारात् एषामपि कर्मत्वे वा तत्रैवाभिधेयत्वाच्चेत्‡; सत्यम् । शून्यनिवेशनं तावत् कर्मैवेत्यभिहितम् । तत्र सामान्यतो निवेश्यमानोऽध्यवसायवत्, यथा तत्र सामान्यतो वृक्षविशेषसंज्ञा स्फुरणेऽपि धवखदिरादिरूपेणानुल्लेखः; तथा सामान्यतो निवेशनीयानां शून्यानां स्फुरणेऽपि धान्यवापद्रव्यहस्तिवनादिरूपेणानुल्लेख एवेत्यनवसितत्वं शून्यनिवेशनकर्मणामिति भावः ।

---

* अत्र 'हस्तिकाननानाम्' इति वा पाठो भवेत् ।

† अत्र 'अनवसित सन्धिः ? न वाच्यं, शून्यनिवेशनस्य' इत्येवंरूपः पाठोऽर्थानुगतो भाति ।

‡ 'अभिधेयत्वाच्चेति चेत्' इति पाठोऽत्र शोभनो भाति ।

[2]शून्यनिवेशनस्य चोभयोस्तुल्यत्वात् समसन्धिरयम्। अत्रैवातिसन्धिमाह—तयोर्य इत्यादि। प्रत्युपस्थितार्थ इति-प्रत्यक्षसन्निहिततत्सामग्रीक इत्यर्थः। यथोक्तगुण(णा)मिति-जनपदनिवेशोक्तगुणवतीम्। अतिसन्धत्त इति-विशेषं न लभते।

[3]यथोक्तगुणभूमावपि तद्विशेषद्वारा विमृशति-तत्रापीत्यादि। स्थलमिति-वर्षमात्रलभ्योदकम्। औदकमिति-अधोजलखननदीमातृकञ्च।

[4]अवधारयति-महत इत्यादि। हेतुमाह-सातत्यादिति। औदकभावानां धान्यादीनां सार्वकालिकत्वादनपायितया निश्चितत्वाच्चेत्यर्थः।

[5]स्थलत्वेऽपि विशेषमाह-स्थलयोरपीति। अरि विजिगीषुप्राप्ययोरिति शेषः। प्रभूतपूर्वापरसस्यमिति, पूर्वं शारदं अपरं ग्रैष्मिकं ते प्रभूते अक्षुद्रफले यस्य तत्तथा। अल्पवर्षेणैव पाको यस्येति तथा। असक्तारम्भमिति, निम्नोन्नतशिलाभूयिष्ठत्वा*दिरशक्यकर्षणमित्यर्थः।

[6]औदकत्वेपि विशेषमाह-औदकयोरपीति। अत्रापि अरिविजिगीषुप्राप्ययोरिति ग्राह्यम्।

[7]तयोरल्पबहुत्वे इति। धान्यकान्ताधान्यकान्तयोरल्पबहुत्वा†मविमर्श इत्यर्थः।

[8]महतः श्रेयस्त्वे युक्तिमाह-महतीत्यादि। तुल्या‡इति-स्थलभवाः। आनूप्या इति, जल प्रायत्वदेश भा(भ)वाः षष्टिकादयः।

[9]महति देशे दुर्गादिक्रियापि शक्येत्याह-प्राभूत्येनेति। महत्वेत्यर्थः।

[10]तथापि धान्यकान्तत्वं नान्यत्रेत्याह-कृत्रिमा हीति। उदकेकर्वाद्यगुणैवेत्यर्थः।

---

* 'अत्र भूयिष्ठत्वादेः' इति वा पाठः स्यात्।

† 'अत्र 'बहुत्वविमर्श इत्यर्थः' इत्येव पाठो ऽर्थानुगतो भाति। वस्तुतस्तु 'इत्यर्थं' इति विहाय अल्पबहुत्वविमर्शे प्रस्तुते सतीति शेषो योज्यः, तथैव सूत्रार्थाऽनुगमात्।

‡ 'तुल्या' इत्यस्यस्थाने 'स्थाल्या' इति डॉ. जौलीमूलपुस्तके पाठो दृश्यते।

[११] खनिभोगाद्धान्यभोगस्य श्रेयस्त्वमाह–खनीत्यादि । कोशकर इति, कोशमात्रकर इत्यर्थः ।

[१२] कोष्ठागारं–धान्यादिनिधानस्थानम् । उभयकरत्वात्तस्य श्रेयस्त्वमित्यर्थः ।

[१३] सर्वकर्मोपयोगमप्याह–धान्येत्यादि । दुर्गादीनामिति, यानि दुर्गसेतुवणिक्पथशून्यनिवेशनादिकर्माणि तदारम्भा इत्यर्थः ।

[१४] एतदपवादं विकल्पेनाह–महाविषयो* वेति । महान्तो ऽनेकक्रेतारो विक्रयविषयोऽस्येति तथा । यथा लवणमिति भावः ।

[१५] आचार्यमतमाह–द्रव्यहस्तिवनयो†रिति । द्रव्यं–सारदार्वादि, तद्वनभोगो हस्तिवनभोगाद्धस्तिलाभरूपाच्छ्रेयानित्यर्थः । सर्वकर्मणां–दुर्गादीनां ‡सर्वापेक्षत्वादित्यर्थः । प्रभूतनिधानक्षमश्चेति, संहतानां गुरुतरगोपुरखरादिधारणक्षमत्वादिति भावः ।

[१८] स्वमते शक्तिमाह–शक्यं द्रव्यवनमिति । न हा(ह)स्तिवनमिति, सर्वत्र हस्त्यनुवादादिति भावः ।

[१९] तथापि दारुवनहस्तिना(मुपयोग इत्यत्राह–+ । हस्तिप्रधान इत्यर्थः ।

[२०] वारिपथभोगः,–नौयानादिसाध्यः । स्थलपथभोगो.......... गर्भादिसाध्यः । अनित्य इति–कादाचित्कः ।

[२१] निवासपुरुषभेदात् श्रेयस्त्वं भूमेर्विमृशति–भग्न§मनुष्येत्यादि । मिथोऽसंहता मनुष्या यस्यां सा तथा । श्रेणीमनुष्येति–श्रेणीत्वेन संहतमनुष्येत्यर्थः ।

---

* डॉ.जौलीसम्पादितमूलपुस्तके त्वत्र 'महाविषयविक्रयो वा' इति पाठो दृश्यते ।

† 'द्रव्यहस्तिवनभोगयोः' इति डॉ. जौली. मूलपाठः । युक्तश्चैष पाठः, आदर्शपुस्तके तु लेखकप्रमादवशाद् भ्रष्ट इति प्रतीयते ।

‡ अत्र 'दार्वपेक्षत्वात्' इति 'सारदार्वपेक्षत्वात्' इति वा पाठः शोभनो भवेत् । तथार्थानुगमात्, दुर्गादीनां सारदार्वपेक्षत्वात् द्रव्यवनभोगस्तद्योनिः–कारणमित्यर्थः । यथाश्रुतपाठे तु–सर्वैरपेक्षत्वादत्यावश्यकानां दुर्गादीनां कर्मणां द्रव्यवनभोगो योनिः कारणमित्यर्थो बोध्यः ।

+ अत्र 'हस्तिप्रधानो हीति' इति प्रतीकं ज्ञेयम् ।

§ 'भिन्नमनुष्या' इति डॉ.जौली. मूलपाठः ।

[22]अवधारयति--*मनुष्येति ।

[23]भोग्येति–स्वविधेयेत्यर्थः। अन्येषामनुपजाप्या-अभेद्या चेत्यर्थः।

[24]तत्र दोषांशमप्याह–अनापत्सहेति। मिथः सङ्घातभावात् एकस्य धारकस्याभावात् परावस्कन्दादिभयेषु सीदतीत्यर्थः। विपरीतेति, पूर्वोक्तगुणदोषरहितेत्यर्थः। दोषान्तरमप्याह–कोपे इति। महादोषे†ति, राज्ञोऽपि विनाशकरीत्यर्थः।

[25]तस्या(1) भूमेश्चातुर्वर्ण्यनिवेशनाविमर्शे शूद्रप्रायमनुष्या श्रेयसी, तत्र भोगः; सर्वभोगसहत्वादिति। भोगः–कर्षणभारवहनदुर्गकरणादिविनियोगः, तद्योग्यत्वादित्यर्थः। कृषि(2)गोरक्ष्य (क्ष) वाणिज्यवतीति क्रमेण सयुक्तिकमाह–‡बाहुल्यादित्यादि। बाहुल्यादिति, कृषिरहिता प्रायः क्वचिदपि नास्तीति भावः। ध्रुवत्वादिति–निश्चितफलत्वादित्यर्थः। अतः कर्ष(ण)वती श्रेयसीत्यर्थः।

---

* 'भिन्नमनुष्या' इति डॉ० जौली. मूलपाठः।

† डॉ० जौली. मूलपुस्तके तु 'महादोषः' इत्येव पाठः। तथासति 'महादोषेति' इति प्रतीकं न स्यात्। अतएव टीकासम्मतः 'महादोषा' इत्येव पाठः। अर्थानुगतश्चायं प्रतीयते।

‡ इत आरभ्य त्रयाणां सूत्राणां क्रमनिर्देशस्तत्तत्सूत्रप्रतीकनिर्देशश्च व्याख्यामूलपुस्तकयोर्मिथो व्याकुल इवाभाति। तथाहि–मूलपुस्तकानुरोधादेष पाठक्रमः–"तस्यां चातु......श्रेयसी बाहुल्याद् ध्रुवत्वाच्च[25]। कृष्याः कर्षणवतीः कृष्या चान्येषां चारम्भाणां प्रयोजकत्वात्[26]। गोरक्षवती पण्यनिचयर्णानुग्रहादाढ्यवणिग्वती भूमिगुणानामपाश्रयः श्रेयान्[27]।" इति। व्याख्यानुरोधात्त्वेतत्सूत्रत्रयस्थाने पञ्चसूत्राणि प्रतीमः। तथाहि–"तस्यां चातु......श्रेयसी[1]। बाहुल्याद् ध्रुवत्वाच्च कृष्याः कर्षणवतीः[2]। कृष्या चा (श्चा) न्येषां चारम्भाणां प्रयोजकत्वाद् गोरक्षवती[3]। पण्यनिचयर्णानुग्रहादाढ्यवणिग्वती[4]। भूमिगुणानामपाश्रयः श्रेयान्[5]" इति। अत्र सत्यामपि तुल्यायां शब्दानुपूर्व्यां सूत्रभेदकृत एव भेदो मिथः साम्यमाकुलयति। अर्थानुगमात्तु मूलपाठापेक्षया व्याख्यासम्मतः पाठः साधीयान् भाति। अर्थानुगमस्तु सुकुमारमतीनामपि ललाटन्तपो मा भूदिति तदवगमाय तत्तत्सूत्रावतरणिकामुख एवास्माभिरित्थंभूत ( ) कोष्टकान्तर्निविष्टैकत्वादिसंख्यानिर्देशो व्यधायि। मुख्यसंख्यानिर्देशस्तु मूलपाठानुकूल एवेति बोध्यम्।

[२६]गोरक्ष्य(³)(क्ष)श्रेयस्त्वमाह—कृष्या*श्चेत्यादि। कृष्याश्च† फलकर्मणोऽन्येषां भारवहनादीनाञ्च कर्मणां तदधीनत्वाद्गोरक्ष्य (क्ष) वती श्रेयसीत्यर्थः।

[२७]वाणि(⁴)ज्यवृत्तिमाह—पण्येत्यादि। पण्यानि—पणनार्हद्रव्याणि। निचयः—धान्यादिसञ्चयः। ऋणानि, वृद्ध्यर्थं हिरण्यादीनाम्। एभिरनुग्रहात् वाणिज्यवती श्रेयसीत्यर्थः। एव(⁵)मुदकस्यानिवासिपुरुषकर्मविशेषैः भूमेः श्रेयस्त्वं प्रदर्श्य भूमिगुणेषु रक्षावत्त्वं प्रधानमित्याशयः पा‡नवाश्रयवती श्रेयसीत्याह—भूमिगुणानामित्यादि। अनित्यामित्रसंपन्नत्यादीनामुक्तगुणानां सर्वेषां मध्ये रक्षावत्ता श्रेयसीत्यर्थः।

[२८]एवमनपाश्रयाया भूमेः अपाश्रयवती श्रेयसीत्युक्त्वाऽपाश्रयत्वेऽपि तद्विशेषश्रेयस्त्वे विमृशति—दुर्गापाश्रया पुरुषापाश्रया वेत्यादि।

[२९]अवधारयति—पुरुषेत्यादि।

[३०]हेतुमाह—पुरुषर्द्धीति+। पुरुषवत्त्वं राज्यस्य प्रधानाङ्गमित्यर्थः।

§[३१]अपुरुषा गौर्भूमिर्वन्ध्यैवानुपजीव्यैव वन्ध्या गौरिवेत्यर्थः।

[३२]अरिविजिगीष्वोर्भूमिनिवेशनेऽतिसन्ध्यन्तरमाह—महाक्षयव्ययेत्यादि। महाक्षयव्ययो निवेशोऽस्या इति तथा महता क्षयेण व्ययेन च निवेशनीयां भूमिमवाप्तुकामो विजिगीषुः प्राप्तेः प्रागेव क्रेतारं पणेत। ताम.........हि भूमिं दुर्बलादिभिः क्षयव्ययादिभिः प्रयत्नेन निवेशिता(तां)पुनरप्यचिरेणात्मन्येव सङ्क्रामेदिति हृदयम्।

[३३]के ते क्रेतारो ये पणनीया इत्यत्राह—दुर्बलमराजबीजिनमित्यादि। अत्र शत्रोः क्रेतरि प्रबले विजिगीषुर्दुर्बलं, शत्रोर्दुर्बले विजि-

---

* अत्र 'कृष्या च' इति डॉ० जौली. मूलपाठः।

† अयमर्थः—कृष्याः—कृषिकर्मणः—फलकर्मणः, (फलपदमत्र लोहमयहलमुखपरम्, भाषायां—'फाली' 'कुश' इति वा प्रसिद्धम्) तदधीनत्वाद्—गोरक्षाधीनत्वादित्यर्थः।

‡ वाक्यभेदं कृत्वा 'पा···वा' इत्येतयोः स्थानव्यतिक्रमः समजनि। वस्तुतस्तु 'प्रधानमित्याशयवानपाश्रयवती श्रेयसीत्याह' इति पाठोऽर्थानुगतो भाति।

+ अत्र 'पुरुषवद्धी'ति डॉ० जौली० मूलपाठः। स एव साधीयान्। अत्र तु लेखकप्रमादवशात्पाठो भ्रष्ट इति प्रतीयते।

§ अत्र 'अपुरुषा गौरिति' इति प्रतीकं स्यात्।

गीषुरराजविजनमिति, एवं शत्रोः पूर्वपूर्वक्रेतृषु विजिगीषुरुत्तरोत्तरान् क्रेतृन् कुर्यादिति व्याचक्षते ऽतिसन्धिसिद्ध्यर्थम् । तदसत्, अन्यथैवातिसन्धिसिद्धेः । उक्तादिशातिसन्ध्यसिद्धेश्च । तथाहि, यथा महार्थव्ययनिवेशां भूमिं शत्रुर्युक्त(क्ति)तो निवेश्य भुङ्क्ते तदा विजिगीषोर्महाव्ययादिनाऽन्यैर्निवेशितां भूमिं तेभ्योऽचिरेणैव प्राप्नुवतो ऽतिसन्धिः सिद्ध्यत्येव । पक्षान्तरे च दुर्बलादिषु क्रेतृषु सर्वेषु च भूमेः प्रत्यादानाविशेषात् कथं विशेषलाभरूपोऽतिसन्धिः स्यात् । किञ्च तेषामलाभे पार्ष्णिग्रहोपग्रहोक्तविधिनाऽन्यत्र भूमिमवस्थापयेदित्युक्तम् ।

ननु शत्रुणाप्येवं कृत इति शत्रूणामपि पार्ष्णिग्राहोक्तविध्याचरणे विजिगीषोः कथमतिसन्धिः स्यात् । तस्माच्छत्रोः भूमिनिवेशने महान् क्लेशः । विजिगीषोस्तु तदा निमेष......मुख्यलाभ......
(इतः परमियं व्याख्या पञ्चदशाध्यायस्यैकोनत्रिंशत्तमसूत्रस्य)

२९ *निवेशक्लेशविधानेनाचिरात् भूमिपा† परेषामत्रपरिचितानां, अतिव्याधिप्रायः सर्वत्र महारोगजनकः । सैन्यस्य व्यायामायु...... व्यापाराः, तेषामलब्धयोग्यभूमिश्च, तमेनमापद्गतः परः प्रवेदयति । प्रवेशं विना कार्यनिर्वहणमेवापद्गतः प्रवेदयति ततो न भविष्यति चेत्यभिप्रायाद्वेत्यर्थः । एभिः कारणैर्दुर्गमाश्रयेतेति सम्बन्धः ।

* अत्र 'मुख्यलाभ' इत्यन्ता 'निवेशक्लेशविधानेनाचिरात्' इत्यन्ता वा व्याख्या सप्तमाधिकरणान्तर्गतैकादशाध्यायनिविष्टत्रयस्त्रिंशत्तमसूत्रस्य 'दुर्बलमराजबीजिनमित्यादेरस्ति, इतःपरमवशिष्टस्यैकादशाध्यायस्य सम्पूर्णस्या चतुर्दशमध्यायत्रयस्य पञ्चदशाध्यायस्य प्रथमसन्निविष्टानामष्टाविंशतिसूत्राणाञ्च व्याख्या नोपलभ्यते । अत एव निवेशक्लेशेत्यादिव्याख्यायां ततः परसूत्राणां 'परेषांव्याधी' त्यादीनामेव प्रतीकान्यन्वेष्टव्यानि । व्याख्याग्रन्थभागस्त्वयं क्वचिल्लेखकप्रमादवशात्, तावद्ग्रन्थलोपादेव वा भ्रष्ट इति प्रतीयते ।

† भूमिं पातीति, रक्षणार्थकात्पाधातोः 'आतोऽनुपसर्गे' इति कं बाधित्वा 'आतोमनिन्' इति चकारेण 'अन्येभ्योऽपिदृश्यते' इत्यनेन वा विच् । 'भूमिपः' इति वा पाठे तु स्पष्टमेवेति ।

[३१]उक्तकारणाभावे परस्य महाबलत्वे च दुर्गमविमुक्त्वा*वगच्छेदित्याचार्यमतमाह–कारणाभाव इति ।

[३२][३३]आचार्यमतेनैव पक्षान्तरमाह—अग्निपतङ्गवदिति । पतङ्गः शलभः, तस्मिन् प्रदीपं प्रविष्टे प्रदीपोऽपि निर्वाणः स्यात् । स्वयं वा ······दित्यन्यतरासिद्धिनियमस्येदमुदाहरणम् ।

[३५]स्वमतमाह–सन्धेयतामिति । उभयोः सन्धानयोग्यतां तप्ततालक्षणामुपलभ्य सन्दध्यात् ।

[३६]विपर्यय इति । परस्य तापाभावे इत्यर्थः । विक्रमेण परं भङ्क्त्वा सन्धिं कुर्यात्; तथापि परस्यासन्धित्सायां दुर्गा(द्)पसारमिच्छेत् ।

[३७]एवं बलवता विगृह्योपरोधहेतव इति प्रकरणमुक्त्वा सन्ध्यन्तरानभ्युपगमे आत्मार्पणेन सन्ध्यभिधानार्थं सूत्रं दण्डेनोपनतवृत्तमिति दण्डोपनतवृत्तमुच्यत इत्यर्थः । तत्र······माह–सन्धेयस्य वेति ।

तेन[३८] वा प्रेषितमिति । दूतमित्येवमुपचारः ।

[३९]वचनप्रकारमाह–इदं राज्ञ इत्यादि । पण्यागारं प्राभृतं राज्ञः संज्ञं यस्येति भावः । देवीकुमाराणामिदं प्रणुतमिति । अत्र विजिगीषुणा स्वयमेव देवी † परस्य देवीकुमाराणां प्राभृतप्रेषणं शङ्काजनकत्वादनुचितमित्यत आह–देवीकुमारवचनादिति । विजिगीषोः देवीकुमाराणां वचनादिति, तैः प्रेषितमिति वाच्यमित्यर्थः । तदर्पण‡मिति, त्वय्यर्पणं यस्य तत्तथा, त्वदायत्तं द्वयमित्यर्थः । एवं तस्मिन् वक्तव्यं ब्रूयादिति योज्यम् ।

[४०]लब्धसंश्रय इति । लब्धत्वं श्रयणाभ्युपगमः । समयाचारिकवदिति, समयाः (यः) सेवकधर्मव्यवस्था तमाचरतीति यथोक्तः । भर्त्तरि–स्वामिनि सेवकवद्वर्त्तेतेत्यर्थः ।

---

* 'दुर्गमुन्मुच्यापगच्छेत्' इत्येवार्थानुगतः पाठो भाति, सूत्रानुसारी च ।

† अत्र 'देवी' इति पाठोऽधिको भाति ।

‡ 'तदर्पण इति' इति डॉ॰ जौली॰ मूलपाठः ।

[४१] अनुक्तान् धर्मविशेषानाह—दुर्गादीनि चेत्यादि । दुर्गादीनि कर्माणि प्रागुक्तानि । आवाह……,……* कन्यादानम्, अत्र †…भिषेको यौवराज्यदानम्, ‡अश्वपण्यं-अश्वक्रयः, हस्तिग्रहणं हस्तिबन्धनम्, हस्तिबन्धनस्य दुर्गाद्यन्तर्गतत्वेपि पुनर्वचनमादरार्थं ग्राह्यम् । + सूत्रं-विचारसाध्यो योगः, यात्रा-परानभियोक्तुं गमनम्, देवोत्सवगमनं वा, विहारश्चिरमुद्यानादिक्रीडा, एतान्यनुज्ञातः कुर्यादित्यर्थः ।

[४२] एवं सन्धेयविषयस्य विधिमुक्त्वा स्वभूमावेव तदाश्रयेण स्थितस्य विधिमाह—§ स्वामीत्यादि । यदा स्वभूमावेव न वर्त्तेत तदा स्वप्रकृतिभूतैरमात्यादिभिर्विशिष्टैः सह सन्धिम्, एवमव (प) सृतेषु तेषु पुनरागतेषु ||उपागतमुपांशुवधादिकं वानुज्ञातः कुर्वीतेत्यर्थः ।

[४३] यदा त्वात्मनो न्यायवृत्तित्वेपि पौरादयो दुष्टतया विहन्यते तदा कुलक्रमागतामपि स्वभूमिमुपेत्य अन्यां याचेतेत्याह—दुष्टेत्यादि ।

[४४] भूम्यन्तरयाच्ञां विनैवोपायान्तरमाह—दूष्यवदिति ।

[४५] स्वमित्रेण दीयमानां योग्यामपि भूमिं नाददीतेत्याह—उचितां वेति ।

[४६] स्वमन्त्र्यादीनामन्यतमं भर्त्तुस्सन्निधौ न पश्येदित्याह—मन्त्रीत्यादि ।

दैवतेत्यादि [४७] । दैवतेषु गम्यमानेषु स्वस्तिव (वा) चनेषु क्रियमाणेषु चेत्यर्थः । भर्त्तुरिति सन्धेयः ।

* अत्र 'विवाहः' इति पाठः स्यात् । कन्यादानमित्यत्र च कन्याया दानमादानञ्चेत्युभययपि युज्यते, तेन पुत्रविवाहस्यापि संग्रहः ।

† अत्र हि 'पुत्राभिषेको' इति पाठः स्यात् । अर्थानुगमात्सूत्रानुसाराच्च ।

‡ अत्र डॉ० जौलीसम्पादिते मूलपुस्तके 'दुर्गादीनि ……०भिषेकांश्च पण्यहस्तिग्रहण०' इत्यादिसूत्रपाठः । व्याख्यानुरोधात्तु 'दुर्गादीनि……०भिषेकाश्व' इत्यादिपाठः प्रतीयते ।

+ अत्र 'सत्र' इति डॉ० जौली० मूलपाठः ।

§ इदं प्रतीकं डॉ० जौलीसम्पादिते मूलपुस्तके नोपलभ्यते, वस्तुतस्तत्रैव 'स्वभूमीत्यादि' इति पाठो भवेत् ।

|| अत्र 'उपघातम्' इति पाठो भाति, सूत्रानुसारित्वात् ।

⁸⁶सर्वत्र चेति । सर्वत्र पुरुषेषु भर्त्तुः स्वामिनि (नः) स्नेहं तस्य *सौजन्यादीनाञ्च प्रकार (श) येदित्यर्थः ।

⁸⁷शङ्कितत्वे द्वेषादिसंसर्गञ्च परिहरेदित्युपसंहरति—संयुक्तेत्यादि । येऽस्य संश्लिष्टा बलवन्तश्च महामात्राः† तैः संसृष्टः, येऽस्य संसर्गतया शङ्किताः तैर्विरुद्धनियमेन संसृष्टः, दण्डेन-बलेन, उपनतः संश्रितः, भर्त्तर्येवं वर्त्तेत । अवास्थितः-नियतो वा ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
कौटिलीयटीकायां नयचन्द्रिकायां पाड्गुण्ये
पञ्चदशोऽध्यायः समाप्तः

---

## ७ अधि., १६ अध्या., १२१ प्रक.

### सू—दण्डोपनायिवृत्तम् ।

एवं दण्डोपनतावस्थस्य विजिगीषोर्वृत्तमुक्त्वा दण्डोपनाय्यवस्थस्याभिधातुं सूत्रं–दण्डोपनायिवृत्तमिति । दण्डेन बलेनात्मनः समीपं नयन्तीति श्रुतस्य‡वृत्तमुच्यत इत्यर्थः ।

यद्यप्यत्र दण्डोपनायीति वाच्यः (च्यम्), तथा चाग्रे वक्ष्यति-"सामदानाभ्यां दुर्बलानुपनमयेत्" (७ अधि., १६ अध्या., ३ सूत्रं) 'भेददण्डाभ्यां बलवतः" (७ अधि., १६ अध्या., ४ सूत्रं) इति । तथाप्युपग (न) मनस्याप्यर्थः स्वसमीपनयनमिति दण्डोपनायीत्युक्तमिति+ग्राह्यम्, तथैव पाठो ऽस्त्विवति ।

¹अस्त्रंदण्डेन बलवादान्युपगमनस्य अभियोगसाध्यत्वादभियोगप्रकारमाह—अननुज्ञाते§त्यादि । अननुज्ञातसन्धिपण्ये.द्वेगकरामति

---

* 'सौजन्यादींश्च' इति पाठो भाति । सौजन्यादींश्च गुणान् प्रकाशयेदित्यर्थः ।

† 'महामात्याः' इति वा पाठः स्यात् ।

‡ अत्र 'नयतीति तस्य वृत्तमुच्यत इत्यर्थः' इति पाठः शोभनो भाति ।

+ अत्र पूर्वोत्तरपक्षयोः पाठे न कश्चिद्भेदं पश्यामः । अयुक्तश्च भेदादर्शनम् । तस्मात् पूर्वापरपर्यालोचनेन पूर्वपक्ष एव 'यद्यप्यत्र दण्डोपनामीति वाच्यम्' इति पाठः सम्भाव्यते । लेखकस्य तु कस्यापि मकारस्थाने यकारभ्रमः समजनीति तथा पाठो लिपिकृतः ।

§ 'अनुज्ञातः' इति डॉ॰ जौली॰ मूलपाठः ।

पाठः। अनभ्युपगतं सन्धौ पण्यं पणनीयं भूमिहिरण्यादि येन स तथा। अत एव वा जनपददाहविलोपादेवोद्वेगकरममर्षकरम्, विजिगीषमाणो–विजिगीषुः, तत्र यायादिति वाक्यार्थः। अननुज्ञातस्तद्धिरण्योद्वेगकरमिति* त्वपपाठः। तद्व्याख्यातारस्तु अनुकम्पनीया इत्यलम्। कुत्र यायादित्यत आह–यत इत्यादि। (†मुखातस्थलाकाशप्रकाशतमादियोगिधिष्ठरथगजादिषु चान्यतमभूयिष्ठानां स्वबलानां यत्र तत्तद्विधानुगुणा स्व‡भूमिः तत्तदनुगुणश्च) तथा वृत्तिभङ्गादि च, शत्रुश्चादुर्गापसारः–दुर्गं पार्वतादि, अपसारो भयोवापहृत्यवापसरणमार्गः तद्रहितः। एवमपार्ष्णिः–पार्ष्णिविरुद्धलक्षणया पार्ष्णिग्रहणप्रतीकारः तद्रहितः। अनासारः+ मित्रबलरहितश्च तयोर्यायादित्यर्थः§।

||[2]विपर्यये-स्वबलानां स्व(सु)भूम्याद्यलाभे शत्रोः दुर्गादिसत्त्वे च तत्तत् प्रतीकारं कृत्वैव यायादित्यर्थः।

[3]दण्डोपनायीत्यत्र दण्डोप......¶मुपायमात्रोपलक्षणमित्याशयवान् विषयभेदेन उपायान् व्यवस्थापयति—सामदानाभ्यामित्यादि। दुर्बलानिति अनुद्धतानिति यावत्।

[4]बलवत इति। उद्धतानाम्।

[5]एवं विषयनियममुक्त्वा उपायानां प्रयोगप्रकारमाह—नियोगेत्यादि। साम्नैव दानेनैवेत्यादिर्नियोगः, साम्ना वा दानेन वेत्यादि विकल्पः, साम्ना च दानेन चेत्यादिः समुच्चयः, इत्येवं प्रयुक्तैरुपायैरमित्ररूपां प्रकृतिं विधेयीकुर्यादित्यर्थः। अनन्तरैकान्तरा इति, भूम्यनन्तरा शत्रुमित्रप्रकृतिरित्यर्थः।

---

* डॉ० जौलीसम्पादिते मूलपुस्तकेऽप्येष एव पाठः। केवलं 'अननुज्ञात' इति स्थाने 'अनुज्ञात' इति वर्त्तते। स्वाभिमतस्तु पाठष्टीकाकृता पुरस्तादेव निर्दिष्टः।

† एष कोष्ठकान्तर्गतः पाठोऽस्फुटार्थो विभ्रष्टवर्णमात्र इवाभाति।

‡ 'सुभूमिः' इति डॉ० जौलीसम्पादितमूलानुसारी पाठः।

\+ अत्र 'अनपसारः' इति डॉ० जौली० मूलपाठः।

§ अत्र 'ततो यायात्' इति मूलानुसारी पाठो भाति।

|| अत्र 'विपर्यय इति।' इति प्रतीकं स्यात्।

¶ अत्र 'दण्डोपनयनमुपाय०' इति पाठः स्यात्।

दुर्बलेषु सामप्रकारं दर्शयति–ग्रामारण्येत्यादि । प्रयोगा महिष्यादि, वणिक्पथो वारिस्थलपथो वा तेषामनुपालनम्, उज्झितपरचक्रादि भयात् त्यक्त (म ?) गोमहिषादि, अपसृ(स्रु)तं स्वयमेव प्रणष्टं दासदास्यादि, अपकारिणो दुर्बलस्य राज्ञो ऽपकृत्यागताः, एषाञ्च प्रदानमित्येवं साम कुर्यादित्यर्थः ।

दुर्बलस्यैव दानमाह—भूमीत्यादि । भूमिः कृष्यादिका, द्रव्यं हिरण्यादिका(कम्), कन्या (न्या) दद्याः*........एषाञ्च राजान्तराद् भयशङ्कायामभयस्य चेत्येवं प्रकारं दानं कुर्यादित्यर्थः ।

बलवत्सु भेदमाह—सामन्तेत्यादि । सामन्ता भूम्यनन्तराः, आटविका राजसधर्माणः, तत्कुलीनाः शत्रुकुलीनाः, अवरुद्धा नियन्त्रिताः, तस्य अत्रादयः, तेषां शत्रूणामन्यतममाक्षिकारेण† क्रमात् कोशाभि (दि) याचनं, सामन्ताय कोशमाटविकाय बलं तत्कुलीनाय भूमिमवरुद्धाय दायमंशमित्यर्थः ।

बलवत्स्वेव दण्डमाह–प्रकाशेत्यादि । निर्दिष्टदेशकालं प्रकाशयुद्धं विपरीतं कृतं तूष्णीं युद्धं........दिभिर्घातनं, दुर्गालम्भोपायः संवननादिव्याजेन महिष्यादिना राज्ञि रसदानादि, शत्रोः प्रग्रहणं प्रतिबन्धनमित्येवं दण्डमित्यर्थः ।

एषामुपनतानां शक्त्यनुरूपं स्वकार्येषु प्रयोगमाह—एवमित्यादि । एवमिति, दुर्बलादौ सामादिनियमनवच्छक्ति(क्ते)रप्येषां स्वकार्येषु नियमं कुर्यादित्यर्थः । उत्साहवत इति, विक्रमशीलान् स्वसैन्यसहायतयोपयुञ्जीतेत्यर्थः ।

प्रभाववत‡ इति । कोशादिसम्पन्नान् कोशापकारिणः+ कोशक्षयादौ तत्कस्याप्यपकारितयोपयुञ्जीतेत्यर्थः । प्रज्ञावत इति, मन्त्र-

---

* अत्रादर्शपुस्तके त्रुटितः खण्डितश्च कियानपि पाठः । सम्भाव्यते 'कन्यादानं' इति सूत्रपदस्य तद्व्याख्यानं स्यात् ।

† डॉ. जौलीसम्पादिते मूलपुस्तके तु 'अन्यतमोपग्रहेण' इति पाठः ।

‡ अत्र 'स्वप्रभाववत' इति डॉ. जौली. मूलपाठः ।

\+ डॉ. जौलीसम्पादिते मूलपुस्तके तु 'कोशोपकारिणः' इति पाठः समुपलभ्यते ।

शक्तिमतः। भूम्युपकारिण इति, भूमेः सगुणत्वनिर्गुणत्वादिनिश्चये शून्यनिवेशनादौ चोपयुञ्जीतेति।

[१२]उपनतानां मित्रभूतानां राज्ञामात्मनोऽर्थप्राप्तावनर्थपरिहारे च प्रकारभेदेनोपयोगमाह–तेषां पण्यपत्तनेत्र*त्यादि। तेषां मित्राणां पण्यपत्तनं पणनीयद्रव्याणां क्रयविक्रयादिस्थानं पण्यद्वतामित्यर्थ-जातेन, रत्नं वज्रादि, सारं चन्दनादि, फल्गु† शङ्खादि, कुप्यं वस्त्रा-स्तरणादि, एभिश्च द्रव्यवनहस्तिवनाभ्यां प्रजा चोत्पन्नेन यानेन रथशिबिकादिना वाहनेनाश्वादिना च यन्मन्त्रं बहुश उपकुर्यात् चित्रभोगाख्यमित्यर्थः।

[१३]महदिति–प्रभूतम्।

[१४]दण्डादिभिर्भोगैः सर्वे (र्वो) भोगोऽस्येति सर्वभोगमित्याह–दण्डेत्यादि।

[१५]अनर्थप्रतीकारोपयोगभेदानाह—यदमित्रमिति। एकत इति, अमित्रमेकमेवेत्यर्थः।

[१७]यदमित्रासारेत्यादि। अमित्रमसारं ‡तन्मित्रं, प्रतिवेशौ पार्श्व-योर्भूम्यनन्तराः +पटव्यधिपतिश्चेत्यर्थः।

[२०]प्रतिबद्धयेति§। व्यवहितयेत्यर्थः। दुर्गस्थस्य बहिर्विप्रकृष्टोप-जीवनानुपपत्तिरत्र प्रयोजनमिति भावः।

[२१]निरुपजीव्ययेति। सस्य वापेति……रिक्तोपजीव्यरहित-याटविकं ततश्च तद्वृद्धिः स्यादिति भावः।

[२२]प्रत्यादेययेति। तत्कार्यावसाने ग्रहीतुं शक्यया, ||तुल्यमुपग्रा-हयेत् सतुल्यस्य भूमौ, प्रतिष्ठापनायोगादिति भावः।

---

* अत्र डॉ० जौलीसम्पादिते मूलपुस्तके 'तेषां पण्यपत्तनग्राम.' इत्यादिपाठः। व्याख्यासम्मतो ऽर्थानुगतश्चाप्ययं पाठः।

† 'फल्गु' इति पाठो डॉ० जौली सम्पादिते मूलपुस्तके नोपलभ्यते।

‡ इत्थं योज्यः–अमित्रम् शत्रुरित्यर्थः, असारं–तन्मित्रं अमित्रमित्रमित्यर्थः।

+ अत्र 'प्रतिवेशाटविकौ पार्श्वयोर्भूम्यनन्तरोऽटव्यधिपतिश्चेत्यर्थः' इति पाठः समीचीन इव भाति।

§ 'अप्रतिसंबद्धया' इति डॉ० जौली. मूलपाठः। चिन्त्य इवायं पाठो भाति।

|| अत्र 'तत्कुलीनं' इति डॉ० जौली. मूलपाठः। तथासतीत्थं व्याख्यापाठः स्यात्–'तत्कुलीनमुपग्राहयेत, तत्कुलीनस्य भूमौ प्रतिष्ठापनायोगादिति भावः' इति।

*[23]अवच्छिन्नयेत्यादि (भिः ?)। शत्रोः सकाशादवच्छिन्नया बलात् स्वीकृतया, †अवरुद्धं पुत्रादिकम्।

[24]नित्यामित्रयेति। सङ्घातजीवितश्रेणि तद्बलम् नित्यामित्रया चोरगणम्लेच्छाटविकादिनित्योपप्लुतया भूम्येत्यर्थः। एवं हि सति श्रेणीबलस्य चोरादिभिर्वा, तेन चोरादीनां वा विनाशः स्यात्, उभयमपीष्टमिति भावः।

[25]बलवत्सामन्तयेति। बलवान् भूम्यनन्तरः स्यादिति, तथा ‡सङ्घाबलमुपग्राहयेत्। मिथः संहतः समप्रधानतोजन श्रेणी, एकाप्रधानः सङ्घ इत्यनयोर्भेदः।

[26]उभाभ्यामित्यादि। (न ?) युद्धे प्रतिलोमं प्राबल्याद् भञ्जक-मिति, अमित्राय+ बलवत्सामन्ता§वा च भूम्येत्यर्थः

[27]अलब्धव्यायामयेति। उत्सादनं‖ व्यापारशीलम्, व्यापारविषयभूतया असाध्य इत्यर्थः।

[28]शून्ययेति। अनिष्टजनकत्वेन फलसंभवहीनयेत्यर्थः।

[29]कर्शितयेत्यादि। अपवाहितम्, प्रथमं संहितं पश्चात् संधेर्भ्रंशितं दण्डपरकरपरचक्राटविकादिभिः, कर्शितया, पूर्वदत्ताया एव दानेऽपि फलभा (भो) गार्थं कर्शितयेत्युक्तम्।

[30]महाक्षयव्ययनिवेशितयेति¶। प्रभूतौ क्षयव्ययौ ऽस्या निवेशये तया गतप्रत्यागतं यथास्य भाविभवक्षयः स्यादिति भावः।

[31]अनपाश्रययेति। प्रत्यपसृतम् शत्रुभयेन स्थानाच्च्युतम्, अनपाश्रयया दुर्गरहितयेत्यर्थः।

---

* अत्र 'उपच्छिन्नया' इति डॉ॰ जौली. मूलपाठः।

† डॉ॰ जौलीसम्पादिते मूलपुस्तके 'उपरुद्धं' इति पाठः।

‡ अत्र 'संहतबलमुपग्राहयेत्' इति पाठो जौलीसम्पादितमूलपुस्तकानुगतो ऽर्थानुसारी च भाति।

+ 'अमित्रया' इति पाठो ऽर्थानुसारी भाति।

§ 'बलवत्सामन्तया च' इति पाठोऽत्र भवेत्।

‖ अत्र 'उत्साहिनं' इति युक्तः पाठो भवेत्।

¶ डॉ॰ जौलीसम्पादिते मूलपुस्तके तु 'महाक्षयव्ययनिवेशया' इत्येव पाठः।

[३२]परेणानधिवास्येयति । स्वयमेव भर्त्तारं-पूर्वस्वामिनमेव, परेण ततोऽन्येन, अधिवास्यया-अनिर्वर्ण्यया, पूर्वस्वामिनोऽन्येन केनाचिदपि-दुर्निर्वाह्यया भूम्या तमेवोपग्राहयेत् विधेयतामापादयेदित्यर्थः ।

[३३]तेषामित्यादि । भूमिदानविषयभूतानां दुर्गस्थादीनां मध्ये यो महोपकारं दण्डकोशाभ्यां महदुपकरोति, यन्निर्विकारं, एकरूपमेवानुधावति तं न विच्छेदयेदित्यर्थः ।

*[३४]प्रातिलोमं-प्रतिकूलकारिणम्, उपांशुदण्डेन साधयेत्, अन्येषामनुद्वेगार्थमिति भावः ।

[३५]उपकारशक्त्येति, यावत्युपकारशक्तिस्तावत्या............तेनोपकारेण तोषयेदित्यर्थः ।

[३६]न केवलं फलमात्रानुगुणो किन्तु................बाहुल्याद्यपेक्षितविभवसत्कारौ कुर्यादित्याह-प्रयासतश्चेति ।

[३७]अत्र मरणादिषु.........................सनादिना भूतानामपि स्वयमेवागतानां स्वदर्शनन्तु व्यसनपरिहारञ्च दद्यादित्याह-स्वयमित्यादि† ।

[३८]परिभवेत्यादि । परिभवस्तुल्येभ्यो हीनदानसत्कारादिः, उपपातो‡-दोषख्यापनं, कुत्सा-तदाचारादिनिन्दा, अतिवादः-तद्वृत्तीनामतिस्तुतिः, एतानिच, एषु न कुर्यादित्यर्थः ।

[३९]सर्वतोऽप्यभयमेभ्यो दत्वा पितृवदनुगृह्णीयादित्याह-दत्त्वा चेत्यादि ।

[४०]यश्चास्येति । अस्य विजिगीषोरपराधमेषु यत्कुरुते तद (त्) प्रकाशयेदित्यर्थः । एतद्वधादन्येषामागतानां शंका मा भूदिति दाण्डकर्मिच्छ+वदुपांशुवधं वा कुर्यादित्यर्थः ।

[४१]दाण्डकर्मिकेष्वुपांशुदण्डवधप्रकार उक्ता............ ।

---

* कदाचिदत्र 'प्रतिलोममिति' इति प्रतीकमपि स्यात् ।

† इदमादिप्रतीकं नास्ति, अपि तु मध्यगतम् । सूत्रं तु 'व्यसनेषु चानुग्रहं स्वयमागतानां' इत्यादि वर्त्तते ।

‡ 'अपघात' इति डॉ० जौली. मूलपाठः । 'उपघात' इति वा पाठो भवेत् ।

+ अत्र 'दाण्डकर्मिकवत्' इति पाठो ऽर्थानुगतो भाति ।

[४२]............*तस्येत्यादि । प्रकाशमुपांशु वा हतस्य भूम्यादना† अभिमन्येत, तेषु ममकारं न कुर्यात्, न स्वीकुर्यादिति भावः। यावदत्र‡पदं कन्यानामप्युपलक्षणं ग्राह्यम्।

[४३]कुल्यानपीत्यादि । अस्येति, मृतकुल्यानपि स्वेष्वधिकारेषु स्थापयेत्, किन्तु तेषु पात्रेषु सत्सु, यथापूर्वं स्वस्वाधिकारेषु विभवेषु चास्य कुल्यानपि स्थापयेत् यदि ते योगा (ग्या) इत्यर्थः।

[४४]कर्मणीत्यादि । विजिगीषोरर्थे युद्धादौ मृतस्योपन (र) तस्य पुत्रं तद्राज्ये स्थापयेदित्यर्थ उक्तः।

[४५]प्रकारान्तरेण फलमाह-एवमिति । अस्य विजिगीषोः पुत्रपौत्रानप्यनुवर्त्तते दण्डोपनतम्, अनुरक्ता भवन्तीत्यर्थः।

[४६]विपर्यये तु नानुरागाभावमात्रमपितु विनाशायैव स्यादित्याह-यस्त्विति । सर्वता(था)स्वेच्छयाऽतिक्रमन् मण्डलातिक्रमणं शक्यं तथा च मण्डलमेवास्य कुपितमभावायैव स्यात्, (न) सहेतेत्यर्थः+।

[४७]न केवलं मण्डलस्यैव कोपः, अपि तु स्वामात्या अपि स्वभूमिष्वसिना अप्येनमाहार्यादिकमण्डलमाश्रयेरन्, अस्मिन्नविश्वासादित्यर्थः। अस्योद्विस्ता(ग्ना) इत्यत्र अस्येति पञ्चम्यर्थे षष्ठी, अस्य ......मिमण्डलमिति......नीयम्।

[४८]स्वयंवे§त्यादि । एनं बद्ध्वा स्वयमेव राज्यं निर्वहेयुर्विघातयेयुर्वैनमित्यर्थः।

[४९]उक्तमेवार्थमुपसंहरति—स्वभू(मि)षु चेति । न केवलमागता एव किन्तु स्वस्वभूमिस्थिता अपि राजानः साम्नैवानुपालिता यावत्पुत्रपौ-

---

* अत्र 'न च हतस्येत्यादि' इति पाठः स्यात्।

† 'भूम्यादीन् नाभिमन्येत' इति पाठोऽत्रार्थानुगतो भाति ।

‡ 'यावदिति पदं' इति पाठः स्यात् । डॉ० जौली सम्पादिमूलसूत्रे तु 'यावत्' इति पदं न दृश्यते ।

+ दण्डोपनतान्हत्वा बद्ध्वा वा तद्भूम्यादीनभिमन्तुः स्वैरमतिक्रमणं न सहेतेत्यर्थः। मण्डलमिति शेषः ।

§ अत्र 'स्वयं राज्यं' इत्यादि डॉ० जौली- मूलपाठः । तत्र मध्ये 'वा' इति नास्तीत्यर्थः ।

त्रमस्यानुगुणाः स्युः। अन्यो* दण्डादीन् विहाय साम्नैवानुपाल(न) मित्यर्थः।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वविरचितायां कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये षोडशो ऽध्यायः।

---

## ७ अधि. १७ अध्या. १२२–१२३ प्रक.

### सू.—सन्धिकर्म सन्धिमोक्षश्च।

भिन्नयोर्घटनमेव हि सन्धिर्नाम, तस्य द्रव्यदेशकालादिनियमरूपं पणबन्धं कारणमप्युपचारात् सन्धिरुक्तः, तस्य च प्रकाराः सामवायिकादीनां दण्डोपनतपर्यन्तादीनां† दर्शिताः, इदानीं तस्य तात्त्विकत्व ‡श्चयं विना वस्तुतोऽपि असङ्कल्पत्वात् तदभिधानार्थं सूत्रं सन्धिकर्मेति। सन्धेः पणबन्धस्य यद्विश्वासोप······+नं कर्म तत्क्रिया तदुच्यत इत्यर्थः।

तदेवावतारयति—समसन्धिरित्यादिना§। समः सन्धिकरीत्येषां‖ त्रयाणां शब्दानामप्येक एवार्थ इति ग्राह्यम्। शास्त्रप्रदेशेष्वभिव्यवहारेषु एक एवार्थो बोद्धव्य इति भावः।

कस्तेषामेकार्थ इत्यत्राह—राज्ञां विश्वासोपगम इत्यादि। अत्र राज्ञामित्युपलक्षणं प्रकृतपणबन्धात्मकसन्धेः निश्चयहेतुर्विश्वासोपगम(मः)प्रत्यक्षोऽर्थ इतिवन्निश्चेयस्यापि निश्चायके सामानाधिकरण्यं तत्प्राधान्यविवक्षयेत्याशयवता उक्तविश्वासोपगमः सन्धिः समाधिरिति, विश्वासोपगमक्रिया युक्तः पणबन्धः शमादित्रयवाच्य इत्यर्थः।

---

* अत्र 'अतो दण्डादीन्' इति 'अन्यान् दण्डादीन्' इति वा पाठः समीचीनो भाति।

† अत्र 'दी' इत्यधिकमिवाभाति। 'पर्यन्तानां' इत्येव पाठो भवेत्।

‡ अत्र हि 'तात्विकत्वनिश्चयं विना' इति पाठः सम्भाव्यते।

+ अत्र 'विश्वासोपगमनं कर्म' इति पाठो भवेत्।

§ डॉ० जौलीसम्पादिते मूलपुस्तके तु 'शमः सन्धिः समाधिः' इत्येवंरूपः पाठ उपलभ्यते। युक्तश्चैष एव पाठः।

‖ मूलपुस्तकानुरोधात्तु 'शमः सन्धिः समाधिरित्येषां त्रयाणां' इति पाठोऽत्र भवेत्। त्रयोऽप्येते पर्याया इति समस्तार्थः।

[3]विश्वासोपगमस्य कारणभेदात् सन्धिभेदमाचार्यमतेन तावदाह—सत्यमित्यादिना। सत्यमिति, सत्यमिदमित्यर्थकथनम्। शपथ इति, स्वर्णादिस्पर्शनार्थकथनम्। आभ्यां कृतःसन्धिश्चलः अव्यवस्थितः अविश्वनीय इत्यर्थः।

[4]प्रभुरिति*। प्रमाणीकृतः मुख्यादिकृतः। प्रतिग्रहः, अनतिक्रमणार्थमर्पितः पुत्रादिः। आभ्यां कृतः स्थावरो विश्वास्य इत्यर्थः।

[6]आचार्योक्तिविचरितं† युक्तिगर्भं स्वमतमाह—सत्यमित्यादि। सत्यादयश्चत्वारोऽपि स्थावरा एव। किञ्च दीर्घदर्शितया पारलौकिकैहिकयोरनर्थयोः प्रत्यवेक्षणात् पूर्वपूर्वातिक्रमे सत्युत्तरापेक्षा सत्यशपथयोरतिक्रमे परलोकभयं तावदङ्गादिकम्, इहचासत्यश्चादैष्टिकश्चेत्यविश्वास्यता, इत्युभयतो भयं सत्यशपथयोरतिक्रमे। प्रतिभूप्रतिग्रहयोस्तु दृष्टभयमेव, तदपि बलापेक्षम्, बलाभावेऽभिबल(व)ताऽवध्यतिक्रमे दुर्बलः प्रतिभूः किं कुर्यात्। एवं सन्ध्यर्थमर्पितो मत्पुत्रो मुच्यतामिति बलवतोक्तेर्दुर्बलस्य तन्मोचनमेव कार्यमिति व्यवस्थितेरित्याशयः। परत्रेह चेति, उभयत्रानर्थभयादिति शेषः।

[6]इहार्थ इति। इहलोकभयार्थावेव प्रतिभूप्रतिग्रहौ बलापेक्षौ चेत्यर्थः।

[7]कालदोषादिना पूर्वपूर्वातिक्रमात् उत्तरोत्तरापेक्षां दर्शयति—संहिताः स्म इत्यादिना। सत्यसन्धा इति, अपिमथा‡ सन्धा प्रतिज्ञा येषान्ते य (त) था।

+ [8]यदा तु सत्यमेवैवं कुर्यादित्युक्त्वापि तथा नाचरन्ति तथा (दा)शपथेन अग्न्यादि स्पृशन्ति। अत्राग्निरिति तेजोमात्रोपलक्षणम्। सीतेति लाङ्गलपद्धत्या भूमिर्लक्ष्यते। रसः सर्पिरादि। सुवर्णं काञ्चनं हिरण्यम्, आलेभिरे अस्पृशन्। अग्निमुदकं सितां प्रकारलोष्टं हस्तिस्कन्धं अश्वपृष्ठं रथोपस्थं शस्त्रत्नं शाल्यादिबीजं गन्धद्रव्यं चन्दना-

* 'प्रतिभूः' इति डॉ० जौली. मूलपाठः।

† विचरितं—विरुद्धं चरितं गतमस्येति तथा। आचार्योक्तिप्रतिकूलमित्यर्थः।

‡ अत्र 'अवितथा' इति पाठो ऽर्थानुगतो भाति।

+ अत्र 'तस्यातिक्रम इति।' इति नवमसूत्रस्य प्रतीकं स्यात्।

दिकं रसं सुवर्णं हिरण्यञ्च शपथेन स्पृष्टवन्त इत्यर्थः । ... येषां स्पर्शने*........

[१८] अपत्यसमाधाविति । अपत्य प्रग्रहणबन्धावित्यर्थः ।

[१९] कथमित्यत्राह–कन्या हीति । कन्यायाभ्यु (अभ्यु) पघातन(नं) सर्वदा पुत्रोदयात् प्रच्यावनं वा स्वयमेव वरेण भार्यात्वेन स्वीकरणं वा कशाप्रहारादिभिः क्लेशनं वा ? तत्राद्ये तावदाह–आ(अ) दायादेति । कन्याया दायाभोगित्वादेव दायाच्च्यवनं नानिष्टमित्याशयः । द्वितीयेत्वाह–परेषामेवार्था † येति । कन्यायाः परेणैव केनचिदवश्यं स्वीकार्यत्वात् तत्स्वीकारोऽपि नानिष्ट इति भावः । तृतीयेप्याह–अक्लेश्या‡ चेति । स्त्रियो हि कदाचिदपराधवत्योऽप्यक्लेश्या इति स्थितेरिति हृदयम् । विपरीतः पुत्र इति । तस्मिन् दायादत्वादेः सत्वादिति भावः ।

[२०] द्वयोरपि राज्ञोः सन्ध्यर्थमन्योन्यपुत्रार्पणे विशेषमाह–पुत्रयोरपीति । जात्यत्वादिषु पञ्चस्वेकैकरहितं पुत्रं तत्तद्विपरीतमतिसन्धत्त इत्यर्थः ।

[२२] एतदेव क्रमाद्दर्शयति–जात्यादित्यादि । जात्यो राजबीजी, अजात्यो विपरीतः । लुप्तदायादसन्तानत्वादिति, दायादो दायभागी सन्तानो लुप्तो यस्य तथा तस्य भावः तत्वम्, आधातुं श्रेयानिति–विश्वासार्थमाधीयमान आधातुः शुभावह इत्यर्थः ।

[२३] प्राज्ञादप्राज्ञ इति । आधातुः श्रेयानिति । अत्र हेतुमाह–मन्त्र शक्तिलोपादिति, ततश्च मन्त्रशक्तिरहितस्य त्यागे तत्सहितस्यागवत्र हानिरित्यर्थः ।

[२४] उत्साहशक्तिलोपादिति, विक्रमणादिव्यापारविरहादित्यर्थः ।

[२५] कृतास्त्रादिति । शिक्षितास्त्रादित्यर्थः । प्रहर्त्तव्यसंपल्लोपादिति, प्रहरणमेव प्रहर्त्तव्यं तत्संपदस्तत्प्रकर्षस्याभावादित्यर्थः ।

---

* 'येषां स्पर्शने' इत्यस्याग्रे भूयान् खण्डितः पाठः, अत्रेदं निश्चेतुं न शक्यते यदिदं पदद्वयं पूर्वसूत्रव्याख्यायामेव योज्यम्, उतापत्येत्याद्यष्टादशसूत्रावतरणिकायाम्, अस्माभिः पूर्वव्याख्यायामेव धृतम्, विद्वद्भिस्तु यथामति विवेचनीयम् ।

† 'परेषामेवानर्थाय' इति डॉ. जौली. मूलपाठः । परमेष पाठो न युक्त इव भाति ।

‡ 'क्लेशाय च' इति डॉ. जौली. मूलपाठः ।

[२६] निरपेक्षत्वादिति, अत्रान्तरसत्त्वेन स्वविषयपित्रपेक्षारहितत्वादित्यर्थः। पितुस्तदपेक्षारहितत्वादितित्वर्थो न युक्तः; आधातुं श्रेयानित्यनेनानन्वयात्।

[२७] एवं जात्यादीनां प्रत्येकं स्वस्वभावैस्सह सम्बन्धविशेषमुक्त्वा तेषामेव पूर्वपूर्वमुत्तरोत्तरतः प्रकृष्टमित्याह-जात्यप्राज्ञयोरपीत्यादिना। ऐश्वर्यप्रकृतिरिति, प्रभुत्वं स्वराज्ययोग्यतेति यावत्।

[२८] मन्त्राधिकारमिति*, मन्त्रशक्तिरित्यर्थः।

[२९] तत्र जात्ये विशेषमाह-मन्त्राधिकारेऽपीति। राज्य †प्राज्ञयोरन्योन्यगुणराहितत्वेपि राज्ययोग्यता दुस्संपादा, मन्त्रशक्तिर्व्याधिसंयोगात् शक्यसम्पादनेति सारम्।

[३०] जात्यमुक्त्वा तदुत्तरयोर्गुणद्वयं तावद्दर्शयति—प्राज्ञशूरयोरित्यादिना।

[३२] प्राज्ञे विशेषमाह—विक्रमाधिकारेऽपीति। बलवत्तरं हस्तिनं व्याधो बुद्धियोगादेवाक्रमतीति तथेत्यर्थः।

[३३] जात्यप्राज्ञौमु‡क्त्वा तदुत्तरयोर्गुणमाह—शूरकृतास्त्रयोरिति। विक्रमव्यवसायो विक्रमोद्योगः।

[३४] लक्षलम्भाधिकारो लक्षघातित्वापादनशक्तिः।

[३५] कृतास्त्रस्यास्त्रशिक्षागुणेऽपि स्थैर्यादिभिर्गुणैः शूरो विशिष्यत इत्याह—लक्षलम्भाधिकारेऽपीति। स्थैर्यान्निर्भयतयानालत्वम्+, प्रतिपत्तिः—संशयेषु तदुत्तरक्रियाशैघ्र्यम्, असम्मोहः—स्वरक्षणावधानम्, एभिः शूरः कृतास्त्रमतिशेत इत्यर्थः।

[३६] बह्वेकपुत्रयोरित्यादि। न कृतास्त्रैकपुत्रयोः, विपुत्रत्वमवका(धा)र्थ विचारोऽसङ्गतः एकपुत्रत्वानेकपुत्रत्वयोः प्रागेव विचारितत्वेन पौनरुक्त्यं चेति चेत्, सत्यम्, एकपुत्रस्य उत्तरत्वेपि पूर्वस्मादपि कृतास्त्रत्वात् प्रकर्षस्येष्टतया पूर्वपूर्वप्रकर्षनियमस्य भानत्वेन तयोर्विशे-

* 'मन्त्राधिकारः' इति डॉ. जौली. मूलपाठः। युक्तश्चैष पाठः प्रतीयते।

† अत्र कदाचित् 'जात्यप्राज्ञयो' रिति वा पाठो भवेत्।

‡ अत्र 'जात्यप्राज्ञावुक्त्वा' इति पाठो युक्तः।

+ 'स्थैर्यं निर्भयतयाना (?) लम्भत्वम्' इति पाठोऽत्र समीचीनो भाति।

षाविचारणात् एतदेव द्वैभावः(द्विभावे) चतुःसद्भावे चैकाभाव इति त्रयश्चेति संकल्प्य त्रयोविंशतिभेदाः, तत्रोक्तादिशैवानुक्ता अपि विशेषाः स्वयमूह्या इत्यभिप्राय इति*।

यत्तु पूर्वोक्तस्यैव एकपुत्रस्य पुनर्वचनात् पौनरुक्त्यमिति, तत्र पूर्वं ह्यनेकः पुत्र आधातुं श्रेयान् न विकुर्वन्नात्यपेक्षितत्वादित्युक्तम्। इदानीन्तु बहुपुत्रो राजैकपुत्रमतिसन्धत्ते इत्युच्यते इति त्वपौनरुक्त्यगन्धोऽपि तुल्यम्।

शेषप्रतिस्तब्ध इति†। बहुपुत्रेणैकस्यादानेऽपि विशेषपुत्रैरवलम्बितः सन्धिमतिक्रामतीत्यत्रापि बहुपुत्रस्य पूर्वत्वात्प्रकर्ष उत्तरत एकपुत्रादी(दि)ति न प्रकारभेदोपीति ग्राह्यम्।

[३७]द्वयोरप्येकपुत्रस्यैवान्योन्यदानेपि विशेषमाह—पुत्रसर्वस्वदान इति। एकोहि पुत्रः पुत्रसर्वस्वं तद्दाने पुत्रफलत (तो) स्येत्यपीत्यादिना साहाय्यदानाद्विशेष इत्यर्थः।

[३८]उभयोरप्येकयोग्यपुत्रत्वे तुल्ये विशेषमाह-शक्तप्रजननत इति। अलुप्तप्रजननशक्तिबलात्, विशेष इति पुनः पुत्रान्तरोत्पादसम्भवादिति भावः।

[३९]उपस्थितप्रजननत इति। पुनरासन्नपुत्रप्रसूतित्वादित्यर्थः।

[४०]राज्यनिर्वहणशक्त्येकपुत्रे सति लुप्तपुनःप्रजननशक्तिश्चेत् राजा स्वात्मानमेवादध्यात् नत्वेकपुत्रमित्याह-शक्तिमतीति।

इति सन्धिप्रकरणम्।

[४१]एवं सन्धौ विश्वासोपगमार्थं स्वपुत्रादिप्रतिग्रहेऽभिहिते तन्मोचनविसंवादे सति तदुपधायनार्थं‡ सूत्रं समाधिमोक्ष+ इति। सम्भूयोभयसंवादेनाधीयते विश्वासार्थमाप्यत इति समाधिः पुत्रादिरर्पितः, तस्य मोक्षोमोचनोपायः स उच्यत इत्यर्थस्तमापादयति-

* एतदेवेत्यादिः स्वयमूह्या इत्यभिप्राय इत्यन्तः पाठो ऽस्फुटार्थः क्वचिद् विकृतवर्णत्वादिवेति प्रतीयते। अस्यार्थविवेके विद्वांस एव प्रमाणम्।

† षट्त्रिंशत्तमसूत्रस्य मध्यप्रतीकमिदम्, नत्वादि प्रतीकम्।

‡ अत्र 'तदुपपादनार्थं' इति वा पाठो भवेत्।

+ अध्यायादौ तु 'सन्धिमोक्षः' इत्येवसूत्रं दृश्यते, नतु 'समाधिमोक्ष' इति।

अभ्युच्चीयमान इति । अभ्युच्चयः शक्तिसिद्ध्युपचयः, तद्वदन्यथानुष्ठानाशङ्केरिति भावः ।

[43] अहितपुत्राद्यपारपायमाह*—कुमारासन्ना इत्यादि । सत्रिणः गूढपुरुषा उक्तलक्षणाः, कारवः स्थूलकर्मकृतस्तुषा†दयः, शिल्पिनः सूक्ष्मकर्मकृतः स्वर्णकारादयः, एतद्व्यञ्जना भूत्वा कुमारस्य शिबिकाभरणादिनिर्वाणः सुरु(र)ङ्गया रात्रौ तमपहरेयुः, उपखानयित्वा-कुमारगृहसमीपं यावत् सुरु(र)ङ्गां खानयित्वेत्यर्थः ।

[43] अपहरणे तस्योपायान्तरमाह—नटेत्यादि । नटा–अभिनयज्ञाः, नर्त्तकाः–शोभार्थं भा(व)विक्षेपविदः, गायनाः–गीतिविदः, वादकाः–वाद्यविदः, वाग्जीविनः–सूतादयः, कुशीलवाः–काव्यादिपाठकाः, प्लवकाः‡–परत्राकृतः, सौभिकाः, क्वचित् सौभिकशब्दो न दृश्यते, एते विजिगीषुणा प्रणिहिताः परं सेवेरन् ।

+[44] ततो महामात्रान् § ततः क्रमात् कुमारम्, परप्रयुक्तशङ्का निवृत्त्यर्थमित्याशयः ।

[45] तेषामित्यादि । नगा(टा)दीनां विशेषविचारे क्रमप्राप्ते शक्ये चे(दि?)ति क्रमेणाप्रस्तुतं बहुवशं ‖ स्थाननिर्गमनञ्च स्वेच्छाधीनानि व्यवस्थापयेदित्यर्थः ।

[46] क्रमत इत्यत्राह–तत इत्यादि । तद्व्यञ्जन इति, नटाद्यन्यतमवेशः ।

[47] उक्तप्रकारं गणिकादिव्यञ्जनासु स्त्रीष्वप्यतिदिशति—तेनेति । नटादिना व्याख्यातानुपतिष्ठेदित्यर्थः ।

[48] नटादिव्यञ्जनतया कुमारस्य निर्गमनमुक्त्वा तेषामुपकारग्राहकतया तैः सह निर्गमनं वा स्यादित्याह—तेषामित्यादि । तूर्ण

---

* अत्र 'आहितपुत्रादेरपरमुपायमाह' इति पाठः शोभन इवाभाति ।

† अत्र 'तुन्नवायादयः' इति पाठो युक्तः । तुन्नवायः–सौचिकः ।

‡ प्लवश्चाण्डाल उच्यते, ततः स्वार्थे कनि प्लवकाश्चाण्डाला इत्यर्थः ।

+ अत्र कश्चन व्याख्याभागस्त्रुटित इति प्रतीयते ।

§ 'महामात्यान्' इति पाठो ऽर्थानुसारी स्यात् ।

‖ अत्र 'क्रमेणाप्रस्तुतप्रवेशस्थानं' इति 'क्रमेणाप्रस्तुतप्रवेशं' इति वा पाठः शोभनो भाति, अर्थानुगतत्वात् ।

भाण्डं*-तूर्यसंस्थानं तस्य..............पात्रीम्, केचिद् भाण्डवे† प्रसाधन पे..............मित्याहुः ।

[४६]प्रकारमाह—सूदेत्यादि । सूदः सूपकारः, आरालिको भक्ष्यकारः, स्नापकः मज्जनादि‡......,प्रवाहकोऽङ्गमर्दकः, आस्तरकः शय्याधिकृतः, कल्पकः चण्डिलः, प्रसाधकः परिकर्मकृत्, उदकपरिचारकः पानीयाधिकृतः, एभिर्दिव्या+दिभिः सह कुमारो निर्हियेतेति वाक्यार्थः। तत्र द्रव्यं निहतच्छागादिः,............भरणसमुद्गः, शयनं शय्या, आसनं मसूरकादिः, येषां सम्भोगैः प्लवभङ्गादिसमभुक्तैरेभिः सह रजकार्पण्याद्यर्थं नियामनैः (कैः) सह कुमारो निर्हियेतेत्यर्थः।

[५०]प्रकारान्तरमाह-परिचारकेत्यादि। अरूपवेलायामिति, रूपम(व)न्मिथो व्यावृत्तं स्वरूपं यस्यां न ज्ञायते तस्याम्, अन्धकारे हि निरूपयेयुः, अतस्तस्यां वेलायां यत्किञ्चिद् द्रव्यमादाय कुमारो निर्गच्छेदित्यर्थः।

[५१]निशायां भूतबलिदानव्याजेन विजनीकृत्य सुरु (र) ङ्गामुखेन वा निर्गच्छेदित्याह-सुरु (र) ङ्गामुखेनेति । प्रकारान्तरमाह-तोयाशयेत्यादि, वारुणं योगमिति, वक्ष्यति दुर्गलम्भोपाये वस्तिना जरायुणा वा सशिरोवगूढनासापृषता कुलनि(र)नक्रशिशुमारवसाभिर्वेत्याद्युक्त्वा केन रात्रिर्गणश्चरतीति तज्जलान्तश्चारोपायं कुर्याद्वेत्यर्थः।

[५२]प्रकारान्तरमाह-वैदेहकव्यञ्जना वेत्यादि । गूढकुमारगृहतः फलवत्वा§न्नादि भक्ष्यविक्रयवृत्तयो विश्वास्यतामागता आरक्षिणः पुरुषान् विषयुक्तान्नफलाद्युपचारयेयुः|| खादयेयुः । ततः कुमारोऽपयायादित्यर्थः ।

[५३]प्रकारान्तरमाह-देवते¶त्यादि । दुर्गादिदेवताबल्यर्थं वा श्राद्धकर्मणि यद् भोजनं प्रवहणं निमित्तं वा ऽन्नपानशेषं व्याजीकृत्या-

* अत्र 'तूर्यभाण्ड' इति डॉ० जौली. मूलपाठः ।

† कदाचिदत्र 'भाण्डेन' इति पाठः स्यात्, तथार्थानुगमात् ।

‡ अत्र 'मज्जनादिकारः' इति पाठो भवेत् ।

+ 'एभिर्द्रव्यादिभिः' इति पाठो ऽर्थानुगतत्वाद्युक्तः ।

§ अत्र 'फलपक्वान्नादि' इति पाठो मूलानुसारी भाति ।

|| 'समवचारयेयुः' इति डॉ० जौली. मूलपाठः ।

¶ अत्र 'दैवत' इति डॉ० जौली. मूलपाठः ।

रक्षिषु उन्मादकेनामारकेण द्रव्येण वा युक्तमन्नपानमुपयोग(गं)प्रयुज्यापगच्छेद्वेत्यर्थः ।

४४ उपायान्तरमाह—आरक्षकेति । प्रोत्साहनेन वा, अत्र यः* क्षुद्रो लाभः, मदपनयने तु सर्वस्वं दास्यामीति विश्वासकारणेन वेत्यर्थः । उपायान्तरमाह—नागरकेति, पुरे रात्रावप्यनिषिद्धसञ्चारनागारिकव्यञ्जनादयः समृद्धानां महामात्रा(त्या)दीनां गृहाणि दहेयुः, तत्सङ्कुलादपगच्छेदित्यर्थः ।

४५ प्रकारान्तरमाह—वैदेहकेत्यादि †। पण्यसंस्थां-पणनीयद्रव्यशालायां‡ तद्विधिं वा दहेयुः, तत्सङ्कुले वा ऽपगच्छेत् ।

४६ प्रकारान्तरमाह—अन्यद्वेति । स्वगृहमेवान्तः शवं निक्षिप्य दहेत् । शवनिक्षेपोपयोगमाह—अनुपातभयादिति, अनुपतन्तीत्यनुपाता अद्वेष्टारः, गृहान्तस्थकुमारो दग्ध इति नापतेयुः, ततो निर्भयमपगमनं स्यादिति भावः । स्वगृहे दह्यमाने कथमात्मनोऽपगमनमित्यत्राह—ततः सन्धिच्छेदेति, सन्धिच्छेदेन कपाटार्गलादिभञ्जनादिना वा निखा(खा)तेन निषूदपुष्करिण्या भूमेरन्तरं कृतया सुरङ्गया वा गच्छेदित्यर्थः ।

४७ काचेत्यादि । काचहराश्च··········काष्ठादिवाहिनः, कुम्भहरा जलवाहिनः, तैः समं वा प्रतिष्ठेतेत्यर्थः ।

४८ मुण्डजटिलप्रवासादिति+ । (प्रवासतो मुण्डजटिलप्रवासादिति ।§) प्रवसतो मुण्डजटिला··········‖ननुप्राविष्टः, तैः समं वा

---

* 'अत्रत्यः' इति पाठोऽत्र समीचीनः स्यात्, तथार्थानुगमात् ।

† डा० जौली. सम्पादितमूलपुस्तके तु 'आरक्षिणां वैदेहक.' इत्यादिपाठः । तत्र 'वैदेहक' इत्यस्मात् पूर्वं 'आरक्षिणां' इत्यपि वर्त्तत इत्यर्थः। तथासति 'वैदेहकेत्यादि' इति मध्यप्रतीकं स्यात् ।

‡ अत्र 'पणनीयद्रव्यशालां' इत्येव युक्तः पाठः ।

+ डॉ० जौली. सम्पादितमूलपुस्तके तु 'मुण्डजटिलानां प्रवासनानि.' इत्यादि पाठो वर्त्तते ।

§ अयं कोष्ठान्तर्गतः पाठोऽसकृल्लिपिकृतो लेखकेनादर्शपुस्तक इति प्रतीयते ।

‖ अत्र 'प्रवसतां मुण्डजटिलानामनुवासनान्यनुप्रविष्टः' इत्यानुपूर्वीकः पाठो भवेत् ।

रात्रौ यायात्।

५९ प्रकारान्तरमाह—विरूपेत्यादि । स्वाभाविकाद् रूपाद्वैरूप्यमेव विरूपं तत्करणेन वा, व्य(व्या)धिकरणेन, व्याधितवेषकरणेन, अरण्यचराणां व्याधादीनां छद्म व्याजं तेन वा प्रतिष्ठेतेत्यर्थः । उपायान्तरमाह—प्रेतव्यञ्जनो वेति, शववेषं कृत्वा शिविकागतो गूढैर्निर्हार्यो वेत्यर्थः ।

६० प्रेतं वेत्यादि । सत्यशवं वा नीयमानं स्त्रीवेषो भूत्वाऽनुगच्छेद्वेत्यर्थः ।

६१ गच्छन्तं त्वेनमनुपातयेत्(यु:)अनुगच्छेयुः, त्वं(क)गच्छसीति पृच्छेयुश्च, तत्राप्युपायमाह—वनचरेति । वनचरव्यञ्जना गूढा येन पथाऽयं गतस्ततोऽन्यद् व्यपदिशयुः ।

६२ ततो व्यपदिष्टादन्यतोऽन्येन पथा गच्छेदित्यर्थः ।

६३ उपायान्तरमाह—चक्रचराणामित्यादि । चक्रैः शकटाद्यैश्चरन्तीति चक्रचराः शाकटिकास्तेषाम् , शकटसंघातैः सहापगत्वेत्यर्थः* ।

६४ आसन्नेऽन्वेष्टृगणे प्रतिविधानमाह—आसन्न इति । अनुपात इति, अन्वेष्टृवर्गे । सत्रं †गृह्णीयादिति, निग्रहणस्थानं गृह्णीयादित्यर्थः ।

६५ सत्राभावे विधिमाह—सत्राभाव इति । हिरण्यं पणादिकम् । उभयतः पन्थानमिति मार्गपार्श्वयोः । पणादिकं वा रसविद्धमपूपादिकं वा विसृजेत् ।

६६ तद्ग्रहणपरेष्वेतेषु मार्गान्तरेण गच्छेदित्याह—ततोऽन्यत इति ।

६७ ग्रहणे सति कृत्यमाह—गृहीतो वेति । अनुपातमिति अन्वेष्टृगणम्, सामादिभिरतिसन्दध्यात्, उपायैस्तद्वशीकृत्य कथमप्यु(प्य)पसरेदित्यर्थः ।

६८ उपायान्तरमाह—पात्र्यादि‡ । रात्रौ दुर्गगृहीतशस्त्रकुमारो

---

* 'सहापगच्छेदित्यर्थः' इति पाठोऽत्र युक्ततरो भाति ।

† अत्र 'सत्रं वा गृह्णीयात्' इति डॉ० जौली. मूलपाठः ।

‡ इदं प्रतीकं डॉ० जौलीसम्पादिते मूलपुस्तके सर्वथा नोपलभ्यते । वस्तुतस्त्वयुक्तमेवेदमत्र प्रतीकं भाति । इतः परं रात्रौ दुर्गेत्यादिपाठोऽप्यत्रासंगत एव प्रतीयते।

निश्शङ्केषु सर*स्विद्धेन वेति विषमिश्रेण पाथेयेन वेति। अतिसन्द-ध्यादित्येव† शवं कञ्चिन्निक्षिप्य स्वगृहदाहेन वाग्भिर‡ (?) पुष्क-रिण्यादिप्रवेशेन वारुणयोगेन वा कुमारे कचिन्निलीने स्थिते ग्रहणभयादपसरणे वा शक्ये विजिगीषोर्विधिमाह—वारुणेत्यादि, एवञ्च कुमारमरणनिश्चयाद् विश्वस्तेषु निश्शङ्कुमारस्यापसरणम-सुकरं+ स्यादित्याशयः। .

६६अपसरणोपायान्तरमाह—उपात्तेत्यादि। रात्रौ गूढगृहीतशस्त्रो निश्शङ्केषु रक्षिषु विक्रयान्निहतेषु वेगवद्भिरश्वैरपसरेत्, प्रागेव प्रणिहितैर्गूढैस्तीक्ष्णादिभिः सहायवानित्यर्थः॥

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां कौटिलीयटीकायां नयचन्द्रिकायां षाड्गुण्ये सप्तदशोऽध्यायः॥

---

## ७ अधि. १८ अध्या. १२४—१२६ प्रक.

### सू.—मध्यमोदासीनमण्डलचरितानि।

एवं शत्रोऽमित्रे च विजिगीषोर्वृत्तिर्बहुप्रकारोक्ता, इदानीं मध्यमोदासीनयोर्मण्डले च वृत्तिर्वाच्या। अत्र मध्यमे वृत्तिमभिधातुं

---

* वस्तुस्थित्याऽत्र 'रसविद्धेन वेति' इति मूलसूत्रप्रतीकं स्यात्। इतः पूर्वं पठितः पात्रेत्यादिर्निश्शङ्केष्वित्यन्तः पाठस्त्वेकोनसप्ततितसूत्रस्य व्याख्याभागो विभ्र-ष्टविपर्यस्तपदवर्णः संल्लेखकप्रमादवशादत्रापतित इति प्रतीयते। तथाहि—तत्र 'उपात्ते-त्यादि' प्रतीकम्, अत्रोकारं निरस्य 'त्ते' स्थाने 'त्रे' इति विपर्यस्य 'पात्रेत्यादि' प्रतीकं धृत्वा 'रात्रौ गूढे, त्यादिपाठो वर्णादिव्यत्यासेन सन्निवेशितः। एवञ्च सति द्व्यूनसप्ततितम-सूत्रव्याख्या 'उपायान्तरमाह—रसविद्धेन वेति।' विषमिश्रेण पाथेयेनवेति' इत्याद्यानु-पूर्वीका स्यात्। एकोनसप्ततितमसूत्रव्याख्यायां तु उपात्तेत्यादि प्रतीकानन्तरं 'रात्रौ दृगगृहीतशस्त्रकुमारो निश्शङ्केषु' इति 'रात्रौ गूढगृहीतशस्त्रो निश्शङ्केषु' इति वा पाठः स्यात्, उभयथापि साधुरिति सर्वं सुस्थम्॥

† अत्र—'अतिसन्दध्यादिति, एवं शवं' इति पाठो भवेत्।

‡ अत्र 'स्वगृहदाहेन वाग्निना' इति पाठः समीचीनो भाति।

+ 'निश्शङ्कं कुमारस्यापसरणं सुकरं स्यात्' इति वा पाठो भवेत्।

§ अत्र 'शत्रौ मित्रे च' इत्यर्थानुसारी पाठो भाति।

सूत्रं—मध्यमचरितमिति, मध्यमे विजिगीषोश्चरितं वृत्तिरुच्यत इत्यर्थः ।

[1]मध्यमे वृत्तिप्रदर्शनार्थं तत्प्रकृत्यादिकं तावद्दर्शयति—मध्यमस्येत्यादिना । आत्मेति, * एका प्रकृतिरिति शेषः । तृतीया पञ्चमी च प्रकृति†रिति, मित्रं ‡मित्रश्चेति प्रकृती द्वे इत्यर्थः । प्रकृतय इति, तिस्र इति बहुवचनार्थः । अत्र प्रकृष्टकरणादेषां प्रकृतित्वं, विरुद्धकरणाद्विकृतित्वम् । अथवा स्वाभाविकानुग्रहविषयत्वं विकृतित्वमिति ग्राह्यम्, तदुभयमनुगृह्णीयादित्यभिधानात् ।

[2]एवं प्रकृतित्रिकमुक्त्वा विकृतित्रिकमाह—द्वितीयेत्यादि । अरिररिमित्रं अरिमित्रश्चेति+ विकृतय इत्यर्थः ।

[3-4]एवं स्थिते यद्येतदनुकूलः स्यात् विजिगीषुरपि मध्यमानुकूलः स्यात्, अन्यथा तत्प्रकृतिविकृत्यनुकूलः स्यादित्याह—तच्चे§त्यादिना । तदिति त्रिकद्वयमित्यर्थः ।

[4]विजिगीषोर्मित्रं मध्यमो यद्यादातुमिच्छेत् तदा विजिगीषो(षु)र्मध्यमेन विगृह्य मित्रं त्रायेतेत्याह—मध्यमश्चेदिति । मित्रभाविमित्रमिति||, यथोक्तं प्राक् :—

एकार्था¶नर्थसम्बन्धमुपकार्यविकारि च ।
मित्रभावि भवत्येतन्मित्रद्वैविध्यमापदि ॥ इति ।

[अधि. ७, अध्या. ६, सू. ५५]

---

* डॉ० जौलीसम्पादितमूलपुस्तके 'आत्मतृतीया' इति समस्तःपाठो वर्त्तते । व्याख्यानुरोधात्तु 'आत्मा' इति पृथगेव स्यात् ।

† डॉ० जौलीसम्पादितमूलपुस्तके 'प्रकृती' इति द्विवचनान्तः पाठः । युक्तश्च स एव ।

‡ अत्र 'मित्रं मित्रमित्रञ्चेति' इति पाठो ऽर्थानुगतो भाति ।

+ अत्रापि 'अरिमित्रमित्रञ्चेति' इति पाठो ऽर्थानुसारी भाति ।

§ अत्र 'तच्चदित्यादिना' इति वा पाठः शोभनो भवेत्

|| 'मित्रं मित्रभावि' इति डॉ० जौली. मूलपाठः ।

¶ सप्तमाधिकरणान्तर्गतनवमाध्याये तु 'एकार्थेनार्थसम्बन्धम्' इति पाठो दृश्यते । एवं चतुर्थचरणेऽपि 'मित्रमद्वैध्यमापदि' इति पाठो वर्त्तते । अनयोः कतरः साधुरिति सुधिय एव विवेचयन्तु ।

मित्रमिति, भूम्येकान्तरम्। मित्रस्यात्मनश्चेति, स्वमित्रस्यात्मनश्च यानि मित्राणि तानि सर्वाण्युपस्थाप्य मध्यममित्राणि च मध्यमाद् भेदयित्वा तदनुगृहीतं स्वमित्रं त्रायेतेत्यर्थः।

[६]मण्डलं वेति। प्रकृतिमण्डलमपि मध्यमकर्शनादौ प्रोत्साह्ये-दुद्योजयेत्।

[७]प्रोत्साहनप्रकारमाह–अतिप्रवृद्धोयमिति। अभ्युत्थित इति, विनाशं कर्त्तुमुत्साहवान्।

[८]तच्चेन्मण्डलमिति। प्रोत्साहितं तन्मण्डलं यदि विजिगीषो-स्सहकुर्यात्, तथा(दा)मध्यममवगाह्य* कर्शयित्वा आत्मानं वर्धये-दित्यर्थः।

[९]यदि मण्डलं मध्यमकर्शनादौ विजिगीषोर्न सहकुर्यात् तदा विधिमाह–न चे†त्यादिना। स्वमित्रत्राणार्थं मध्यममवजिघृक्षोर्विजि-गीषोर्मण्डलं यदि न सहकुर्यात् तदा मध्यमादिभिर्युक्तस्य स्वमित्रस्य कोशेन वा दण्डेन वा साहाय्यं कृत्वा मध्यमद्वेषिणां राज्ञामन्यतमं स्वीकुर्यादिति वाक्यार्थः। परस्परानुगृहीता चेति‡, बहवोऽन्योन्य-सहकारिणो वा स्युः, एकस्योपग्रहे सर्वेऽप्युपगृह्णीरन्। अथवा मद्वेषे+ सक्तोप्यन्योन्यस्वभेदशङ्कया मध्यमावग्रहार्थं नोत्सहेरन्, सर्वथा तेषां प्रधानं वा निर्वाणकं स्वभूमेरासन्नं लघुसमुत्थमेकं वा साम्ना दानेन वा स्वकीयं कुर्यात्।

[१०]तस्मिन्नात्मनो द्वितीये स्वीकृते पूर्वतो द्विगुणबलः स्यात्, ततस्तृतीयस्वीकारे त्रिगुणबलः स्यादिति।

[११]एवं शक्त्यधिको भूत्वा विजिगीषुः पश्चान्मध्यमं कर्शयेदि-त्यर्थः।

---

* 'मध्यमावग्रहेण' इति डॉ० जौली. मूलपाठः। तदनुकूलतयाऽत्र 'अवग्राह्य' इति पाठो भवेत्। उत्तरत्राप्येवंभूत एव पाठो दृश्यते।

† अत्र 'न चेदित्यादिना' इति वा पाठः समीचनो भाति।

‡ 'परस्परानुगृहीता वा' इति डॉ० जौली. मूलपाठः। अर्थानुसारी चैष पाठः।

+ अत्र 'अथवा मध्यमद्वेषे सक्ता अपि यद्यन्योन्यस्वभेदशङ्कया' इत्यानुपूर्वीकः पाठः शोभनो भाति, तथैवार्थानुगमादिति।

[12] अस्य महतः संविधानस्य करणात् प्रागेव स्वमित्रं मध्यमश्चे-द्वगृह्णीयात् तदा विधिमाह–देशकालेत्यादि। मध्यमेन सह स्वयं सन्धाय स्वमित्रस्य गूढं कोशदण्डाभ्यां साहाय्यं कुर्यादित्यर्थः।

पक्षान्तरमाह–दूष्येषु वेति। ये मध्यं* द्विष्टा मुख्यास्तैर्दूष्यैः सममहत् (हं) पुरस्ताद् योत्स्यामि युष्माभिर्वीवधप्रतिबन्धो जनपद-विलोपादिकं वा कार्यमित्यादिरूपं कर्मसन्धिं वा कुर्यादित्यर्थः। एव-मनुकूलानां मित्राणां मध्यमात् त्राणमुक्त्वा भूम्येकान्तरत्वेऽपि विरुद्धकरणाद्यः कर्शनीयः स्यात् उच्छेद्यो वा तयोर्मध्यमेन लिप्सायां विधानमाह–कर्शनीयमित्यादि, अस्य विजिगीषोः कर्शनीयं यन्मित्रं ·········† मध्यश्चेत् लिप्सेत तदा तत्प्रतिस्तम्भयेत् निर्भयीकुर्यात् ‡कस्य दर्शनीयत्वात् यावत् कर्शनं स्यात् तावत् त्रायेयेत्याश्वासयेत्।

[14] अथ जाते कर्शने पश्चात् क्रि (त्रा) येतेति कर्शनीयं मित्रं वक्ष्यतिः–

"प्रसाध्यं+ शत्रुं यन्मित्रं वृद्धं गच्छेदवश्यताम्" इत्यारभ्य "यथा वानुग्रहापेक्षं पश्यन् तिष्ठेत्तथा चरेत्" इति।

( अधि० ७, अध्या० १८, सू० ३६–३७ )

[15] मध्यमेन विजिगीषोरुच्छेदनीयमित्रलिप्सायामाह—उच्छेद-नीयं वेति।

[16] उच्छेद्यमपि कर्शयित्वा पुनस्त्रायेतेत्यर्थः। उच्छेदनीयस्य त्राण-मयुक्तमित्यत्राह—मध्यमवृत्ति§भयादिति, मध्यमादभियुक्तो||सुखो-

* अत्र 'मध्यमद्विष्टा' इति पाठो ऽर्थानुसारी भाति। एवमग्रेपि 'दूष्यैः सममहं पुरस्ताद्' इति युक्तः पाठः।

† अत्र कदाचित् 'यन्मित्रं तन्मध्यमश्चेत्' इत्यानुपूर्वीकः पाठो भवेत्।

‡ अत्र '–कुर्यादस्य कर्शनीयत्वात्' इति पाठो भाति, तथाऽर्थानुगमात्। 'द' क'योर्विपर्यासात्तु तथा पाठो जातः।

+ डॉ० जौलीसम्पादितमूलपुस्तके तु 'प्रसाध्य' इत्येव पाठः। एवमग्रेऽपि सप्तत्रिंशत्तमसूत्रस्य चतुर्थचरणे 'पश्यन्' इत्यस्य स्थाने 'वश्यं' इति पाठो वर्त्तते।

§ 'मध्यमवृद्धिभयादिति' डॉ. जौली. मूलपाठः।

|| अत्रैवंभूत एवादर्शपुस्तके पाठो दृश्यते, वस्तुतस्त्वर्थानुसारित्वात् 'मध्यमादभि-युक्ते सुखोच्छेद्ये विजिगीषुर्यदि' इत्यादिपाठो भवेत्।

च्छेद्यो विजिगीषुर्यदि नानुग्रहं कुर्यात् मध्यमः स्यात्, तेनोच्छेद्यस्यापि त्राणमित्यर्थः। वक्ष्यति वो (चो) च्छेद्यामित्रम्:—

"अतिसाधारणं मित्रं तिष्ठेद्यदरितः शठम् *।
भेदयेद्भिन्नमुच्छिन्द्यात्ततः शुत्रुमनन्तरम्॥" इति।

(अधि० ७, अध्या० १८, सू० ४०)

बलवता मध्यमेन तास्मिन्नुच्छिन्ने विधिमाह—उच्छिन्नं वेति, मध्यमोच्छिन्नं त्व (तं) स्वविषये भूमिदानेनानुगृह्य स्वहस्तगतं कुर्यात्। किमर्थमित्यत्राह—अन्यत्रेति, अन्यत्र शत्रावपसारः तदेकीभावः तद्भयादित्यर्थः।

†कर्शनीयोच्छेदनीययोः स्वमित्रयोर्यानि मित्राणि तान्यपि यदि मध्यमस्य तदभियोक्तुः साहाय्यं कुर्युः तदा विजिगीषुरपि तस्य साहाय्यं कुर्यात्। कथमित्यत्राह—पुरुषान्तरेणेति, स्वयन्तेन सहायस्तु तत्सान्धि‡ कुर्यात् विशिष्टबलसमागमस्य भयहेतुत्वात्, अपितु सेनापत्यादिपुरुषान्तरप्रेरणेन। उक्तं हि प्राक्:—

'सेनापतिकुमाराभ्यामुपस्थातव्यमित्ययम्।
पुरुषान्तरसन्धिः स्यान्नात्मनेत्यात्मरक्षणम् +॥" इति।

(अधि० ७, अध्या० ३, सू० २५)

[१८]अथ विजिगीषोः (ष्वोः) कर्शनीयादित्वेन विरुद्धयोर्मित्राण्यपि विजिगीषो (ष्वो) रवग्रहसमर्थानि यदि न स्युः तानि विजिगीषु (षू) कर्शनादौ मध्यम (मं) विप्रोत्साह्य..............तत्र यदि चेष्टरन् तत्राह—विजिगीषो (ष्वो) र्वेति§। तयोरिति, कर्शनी-

---

* डा. जौलीसम्पादितमूलपुस्तके तु 'अरिसाधारणं यद्वा तिष्ठेत्तदरितः शठम्' इत्येव पाठो दृश्यते।

† अत्र कदाचित् 'कर्शनीयेति।' इति प्रतीकं भवेत्।

‡ पूर्वापरपर्यालोचनेन अत्र कदाचित् 'न' कारः स्यादिति सम्भाव्यते।

+ अत्र 'आत्मरक्षणः' इति डॉ. जौलीमूलपाठः।

§ 'विजिगीष्वोस्तयो'रित्येव डॉ. जौलीसम्पादितमूलपुस्तके पाठो दृश्यते। तत्र 'वा' नास्तीत्यर्थः।

योच्छेदनीययोः। सन्धिमुपेयादिति, मध्यमेनेति शेषः। तैरेव सन्धिमिति केचित्, तत्र मध्यमचरितस्य प्रकृतत्वादसङ्गतिदोषः।

[१९] एवं विजिगीषोरनुकूलप्रतिकूलरूपाणां मित्राणामभियोगोद्यते मध्यमे वाऽस्य वृत्तिमुक्त्वा तदमित्राभियोगेप्याह—अमित्रं...*स्येति। विजिगीषोरमित्रं यदि लिप्सेत, मित्रं यद्यादातुमिच्छेदित्यर्थः। सन्धिमुपेयादिति, अत्रापि मध्यमेनेति शेषः।

[२०] तत्सन्धिकरणे फलं द्वैगुण्यमाह—†स्वार्थश्चेति।

[२१] एवं विजिगीषोर्मित्राणाममित्राणाञ्च मध्यमेनाभियोगे विधिमुक्त्वा मध्यमस्यैव यानि मित्राण्यमित्राणि च तदादित्सायां विजिगीषोर्विधानमाह—मध्यमश्चेदिति। मित्राभावमिति,‡ अनुकूलमपि भूम्येकान्तरं तद्भूमिजिघृक्षयेत्याशयः। तदभियोक्तुं मध्यमसाहाय्यं सेनापत्यादिप्रेषण+ सन्धिकरणेन कुर्यादित्यर्थः।

[२२] पक्षान्तरमाह—सापेक्षं वेति। अनुच्छेदरुचिं मध्यममभियोगाद् वारयेदित्यर्थः। मित्रविशेषणत्वे अनुकूलं मित्रमुच्छेत्तुं नार्हसीत्यर्थमाहुः। परशब्दान्तरितत्वं तत्र दोषः। पक्षान्तरमाह—उपेक्षेत वेति।

[२४] कोशेति। कोशेन वा दण्डेन वा यथा मध्यमो न जानीयात् तथा गूढमनुगृह्णीयादित्यर्थः।

[२५] उदासीनलिप्सायामाह—उदासीनं वेति।

[२६] अस्मै (इति?) मध्यमायासहायादानं तदनुग्रहेण, किन्तु तस्योदासीनाद् भेदोऽस्त्वित्याह—§उदासीनादिति।

---

* अत्र 'अमित्रं वास्येति' इति पाठो भवेत्। मूलसूत्रानुसारात्।

† डॉ. जौलीसम्पादितमूलपुस्तके त्वत्र 'एवं स्वार्थश्च' इति पाठो दृश्यते।

‡ अत्र 'मित्रभावि' इति डॉ. जौली. मूलपाठः।

+ 'सेनापत्यादिप्रेषणेन' इति 'सेनापत्यादिप्रेरणेन' इति वा पाठोऽत्र भवेत्।

§ अयंभावः—अस्मै मध्यमायोदासीनानुग्रहेणावश्यं साहाय्यदानं भवेत्, परं विजिगीषुस्तस्य मध्यमस्योदासीनादवश्यं भेदं कारयेत्। 'तदनुग्रहेण' इत्यस्य विजिगीष्वनुग्रहेण इति वार्थो भवेत्, तथासति विजिगीषुर्मध्यमे काममप्यनुग्रहमात्रां विधाय तमुदासीनाद् भेदयेदित्यर्थः स्यात्।

[२७] तर्हि किं मध्यमाश्रयणमेव कार्यं, नेत्याह–मध्यमोदासीनयोरिति। मण्डलस्य बलवत्त्वेन तदनुगुणमाश्रयीतेत्यर्थः।

[२८] मध्यमानन्तरं क्रमादुदासीने वृत्तिमभिधातुं सूत्रम्–उदासीनचरितमिति, उदासीने विजिगीषोर्वृत्तिरुच्यतइत्यर्थः। विजिगीषोर्मध्यमे ऽभिहितां वृत्तिमुदासीनेप्यातिदिशति–मध्यमचरितेनेति। व्याख्यातयोर्विजिगीषो (ष्वो) रिति, यथा मध्यमः स्यात्......*मा तृतीया पञ्चमी चेति प्रकृत्यादिकं विजिगीषोस्तत्र वृत्तिश्चोक्ता, नित्या†न्युदासीनेपि तुल्यादित्यर्थः।

[२९] विशेषमाह—यत इत्यादि‡। यदि विजिगीषोः शत्रुं (त्रुः) मध्यमेन पूर्व (र्वं) संहितः तदा स विजिगीषोरपि सन्धावसत्कल्पः स्यात् (तदा संहितः?) तदा मध्यमसहायो विजिगीषुः शत्रुमुच्छिन्द्यात्, एवन्त्व (ञ्च) विजिगीषुमित्रस्याप्ययमुपकारानुस्तु+ल्यः स्यात्। अथोदासीनः सर्वाधिकबलस्तदा तस्यापि प्रकृष्टतया विजिगीषोर्दण्डे तत्साहाय्यदानमेवोपकार इत्याशयवानाह-उदासीनं वेति। दण्डोपकारिणमिति, दण्डेन बलेनोपकर्त्तारं लभेतेत्यर्थः। ततः परिणमेदिति§, अस्मिन्नेव पक्षे क्रमेण प्रविशेदित्यर्थः।

[३०] एवमुदासीने वृत्तिमुक्त्वा मण्डले वृत्तिमभिधातुं सूत्रं–मण्डलचरितमिति। अरिमित्ररूपं मण्डलं तस्मिन् वृत्तिरुच्यत इत्यर्थः। ननु षाड्गुण्ये शत्रुमित्रादौ विजिगीषोश्चरितमेवेति चेत्, सत्यम्, शत्रुमित्रादिभेदास्तारतम्यादिकं तद्वृत्ति (वि) शेषाश्चोक्ता इति तदर्थम् नह्यरिभाविभृत्यभावित्वा.................विजिगीषोस्तत्रोक्ता इत्याशयः। मण्डलचिन्तामुपक्षिपति–एवमुपगृह्येति ||। मध्यमोदा-

---

* अत्र 'मध्यमस्यात्मा तृतीया' इत्यादि पाठोऽर्थानुसारी भवेत्।

† 'तान्युदासीनेऽपि तुल्यानीत्यर्थः' इतिपाठोऽत्र शोभनो भाति, तथार्थानुगमात्।

‡ इदं मध्यप्रतीकं नत्वादिप्रतीकम्।

+ 'उपकारस्तुल्यः स्यात्' इति पाठोऽत्र युक्तो भाति। 'अनु' इत्यधिकमत्रापतितमिति प्रतीयते।

§ अत्र 'परिणमेत' इति डॉ. जौली. मूलपाठः।

|| अत्र 'उपबृह्य' इति डा. जौली. मूलपाठः।

सीनावग्रहेणात्मानमुपबृंहयेदिति प्रोक्तं तत्कृत्वेत्यर्थः । अरिकर्शनं मित्रोपग्रहश्च कुर्यादित्याह-रिपुकृतमि*त्यादिना। कर्शयेदिति, सिद्धिभिर्वियोजयेत्। उपगृह्णीयादिति, स्वीकुर्यादित्यर्थः । सामन्ता अरयो भूम्येकान्तराणि मित्राणीति प्रागुक्तम्, तत (त्र) सामन्तास्त्रिविधा अरिमित्रभृत्यभावित्वेनेति विभागमभिसन्धायारिभाविनस्तावदाह-सत्यप्यमित्रभाव इत्यादि† ।

‡तस्य विजिगीषोरेषाममित्रभावे साधारणेऽपि विशेषा अनात्मवत्त्वादय इत्यर्थः । तत्रा [ना] त्मवान्-अजितेन्द्रियः, नित्यापकारी-कलहशीलः, शत्रुः-अनिमित्तद्वेषी, +शत्रुणा कृतसन्धिः, पार्ष्णिग्राहो-यातस्य पश्चात्कोपकरः, व्यसनी-मृगयादि......मृगयासक्तकस्या§त्मवत्त्वेनैव सिद्धत्वात्, मित्रमरणादिव्यसनपातीति केचित्, यातव्यः--अभियोज्यः, व्यसने विजिगीषोरभियोक्तेति, व्यसनं बलादिव्यसनं तत्राभियोक्तेत्यष्टाप (व)रिभाविन इत्यर्थः ।

अनात्मवानिति च यातव्य इति च पदाभ्यामेव व्यसनित्वं सिद्ध्यत्येव, अनात्मवत्वानान्तरीयत्वात्, व्यसनित्वान्यरिसंप्रयुक्तः|| शत्रुः व्यसनी यातव्य इति चाभिधानात् तथापि प्राधान्यख्यापनार्थं तस्य पृथग्ग्रहणमिति ग्राह्यम् ।

---

* अत्र 'अरिप्रकृतिं' इति मूलानुसारी पाठः । युक्तश्चैष पाठः, अस्यैव भ्रष्टविपर्यस्तवर्णादित्वेन 'रिपुकृतं' इति पाठान्तरमजनि ।

† 'सत्यप्यमित्रभावे' इति सूत्रांशस्त्रिंशत्तमसूत्रस्य एवमुपबृंहयेत्यादेरवयवो व्याख्यानुरोधान्न प्रतीयते, तथासति 'सामन्ता अरय' इत्यारभ्यैकत्रिंशत्तमसूत्रस्यैव व्याख्याभागः सर्वोऽपीति बोध्यम् । अस्माभिस्तु मूलसूत्रानुरोधात्तथा प्रतीकनिर्देशो व्यधायि इति ।

‡ अत्र कदाचित् 'तस्येति' इति प्रतीकमपि स्यात् ।

+ अत्र व्याख्येयं 'शत्रुसंहितः' इति पदमवश्यं भवेत् ।

§ 'मृगयासक्तस्यानात्मवत्त्वेनैव' इत्याद्यानुपूर्वीकः पाठोऽत्र समीचीनो भाति ।

|| अत्र कश्चिद् व्याख्याभागस्त्रुटितो विपर्यासं वा गत इत्यस्पष्टार्थं इव सर्वोऽप्ययं पाठः ।

[32]अथ मित्रभाविनोऽरिभेदानाह—एकार्थाभिप्राय* इत्यादिना । विजिगीषुणा सहैकं प्रयोजनमुद्दिश्य याता(तः), यथा विजिगीषुः भूमिमुद्दिश्य (वेद्यः?), अरिः भूमिमुद्दिश्य यातः, दिगादिभेदेनेति भावः । पृथगर्थाभिप्रायत† इति, विजिगीषुः भूमिश्चेत्युद्दिश्य, अयन्तु हिरण्यमित्यर्थः । सम्भूययात्रिक इति, लाभं बलादिमात्रया समं विभज्य सामवायिकतयैवोक्तं(क्त)शिबिरनिवेशेन यात इत्यर्थः । संहितप्रयाणादिक‡ इति, येन पार्ष्णिग्राहेण सन्धाय विजिगीषुर्यातव्यमभियाति स पार्ष्णिग्राहस्तथोक्तः संहितप्रयाणविषयभूत इत्यर्थः । स्वार्थाभियात+ इति, स्वशब्देन विजिगीषुरुच्यते, विजिगीषोः प्रयोजनोद्देशेनैव यातो न तु स्वार्थोद्देशेनत्यर्थः । सामुत्थायिक इति, समुत्थानं कर्मानुष्ठानं तत्र कृतसन्धिः, यथा त्वञ्चाहञ्च शून्यं निवेशयावह इत्यादिरूपेणेत्यर्थः । कोशदण्डयोरन्यतरस्य क्रेता विक्रेता वे§ति, सामवायिकतयैव कोशेन दण्डं दण्डेन कोशं वा यः क्रीणाति विक्रीणाति वा स इत्यर्थः । द्वैधीभाविक इति, द्वैधीभावगुणविषयभूतः पार्ष्णिग्राहेण सन्धानं यातव्येन विग्रहश्चेति हि द्वैधीभावोऽपि हि मतः, तत्रैव संहितः पार्ष्णिग्राह इत्यर्थः । एते मित्रभाविनोऽष्टावेवेति भावः ।

[33]भृत्यभाविनन्त्वाह—सामन्त इत्यादि । यद्यपि सामन्ता इति सर्वार्थतया समासौ वक्ष्यति तथाप्यस्य सामन्तस्य ग्रहणमर्थभेदस्य विवक्षित्वात्, समासिगतसाम(न्त)पदस्य विजिगीषोर्भूम्यानन्तर्यमर्थः, अत्र बहु(ब)लवतो राजान्तरस्येत्यर्थभेदः । बलवतो राजान्तरस्य प्रतिहन्ता दुर्बला भूम्यनन्तरोऽन्तर्द्धिरिति । केचित्तु प्रतिघातोऽन्तर्द्धिर्द्वावर्पास्याहुः, प्रतिघातो बलवतो दुर्गाटव्यपसारपातीति, पूर्वत्राप्यन्तर्द्धिप्रतिघातौ द्वाविति, तत्र युक्तिमाह—निर्भूमिकोऽन्तर्द्धिः, अरेर्नेतुश्च मध्यस्थो दुर्बलोऽन्तर्द्धिरुच्यत इत्यस्वतन्त्रतयैवाभिधानात्,

* 'एकार्थाभिप्रयातः' इति डॉ. जौली. मूलपाठः ।

† अत्र 'पृथगर्थाभिप्रयात' इति डॉ. जौली. मूलपाठः ।

‡ अत्रापि 'संहितप्रयाणिकः' इति डॉ. जौली. मूलपाठः ।

+ डा. जौलीसम्पादितमूलपुस्तके तु 'स्वार्थाभिप्रयातः' इति पाठो दृश्यते ।

§ डा. जौलीसम्पादिते मूलपुस्तकेऽत्र 'वा' इति नास्ति ।

अत्र सामन्तो बलवतः प्रतिघात इति वचनादिति। तदसत्। अन्तर्द्धिरिति वचनेऽपि सामन्तप्रकरणे वचनात् सामन्तत्वापातो दुर्वार एवेति। प्रतिवेशो वा बलवतः पार्ष्णिग्राह इति, पार्श्वयोर्भूम्य(न)न्तरो हि प्रतिवेशः स च यातव्याभिसारी मूलबाधकश्चे(श्चे)त्युभयधा (था)बाधकतयोक्तः, स च विजिगीषोर्भृत्यभावी, बलवतो ऽन्यस्य राज्ञो भूम्यनन्तरतया पार्ष्णिग्राहो * न विरोधः। स्वयमित्यादि, स्वयमेव वा संश्रयणार्थं प्रतापतश्चलाक्रान्तत्वेन वेत्युभयप्रकारोऽपि दण्डोपनत इत्येते भूम्यनन्तरा अपि भृत्यभाविन इत्याशयः। एते ऽपि त्रय इति केचिद् सामन्ता अप्युक्तास्त्रिविधा अप्येते भूम्यनन्तरा इत्यर्थः।

[34] सत्यप्यमित्रभाव इति सामन्त इति चामित्रेषूक्तं त्रैविध्यमेष्वप्यतिदिशति—तैर्भूम्येकान्तरा इति। सत्यप्यमित्र इत्यारभ्य विशेषा द्रष्टव्या इत्यर्थः।

[35] अरिषु विकृतेषु तत्प्रकाराः प्रागेवोक्ता मित्रेषु नोक्तास्ते चावश्यं वक्तव्यास्तेषामप्यपरिभावित्वं (त्व) सम्भवादित्याशयवानाह—तेषामित्यादिना। तत्र मित्रस्य शत्रुणाभिभवे तत्साहाय्यदानं तावदाह—तेषामिति। तेषां मित्राणां मध्ये शत्रुणा विरोधे ऽभिभवे सति यन्मित्रमेकार्थतां विजिगीषुणा सहैकत्र प्रयोजनतां गच्छेत्, तुल्ययोगक्षेमः स्यादित्याशङ्क्याह-शक्त्येति, कोशदण्डादिरूपयानुगृह्णीयात् सहायीभवेत् यथाशक्त्या(क्ति)शत्रुमाक्रामेदित्यर्थः।

[36] यत्तु शत्रुः स्वयमभिभूय वृद्धं सद्विजिगीषोरविधेयं स्यात् तत्र विधानमाह-प्रसाध्येत्यादि। शत्रुः स्वयमेवाक्रम्य वृद्धं यद्विजिगीषोरविधेयतां गच्छेत् तन्मित्रं तद्भूम्यनन्त राः तन्मित्राश्च(णि च)तदा

---

* अत्र 'पार्ष्णिग्राह इति न विरोधः' इत्यानुपूर्वीकः पाठोऽर्थानुसारित्वात्समीचीनो भाति।

तदमात्यादिभिश्च भेदनेन विरोधयेदित्यर्थः । प्रकृतिभ्य* इत्यत्र चकारोऽध्याहार्यः, ततश्च प्रकृतिभेदात्सापेक्षमेव तत्स्यादिति भावः ।

[37] तस्यैव वश्यत्वापादने प्रकारान्तरमाह—तत्कुलीनेत्यादि । तत्कुलीनः कुल्योऽवरुद्धो नियन्त्रितः पुत्रादिस्ताभ्यां भूमिं वा तस्य हारयेत्, स्वावष्टम्भगृहीताभ्यामित्यर्थः । आत्मनः सहकारापेक्षया आत्मनो वश्यं यथा वर्त्तेत तथा कुर्यादित्यर्थः ।

[38] यद् वृद्धौ विजिगीषोर्नोपकुर्यादिति हानौ च तदभिसरेत् तन्मित्रमहीनं वृद्धं च स्थापयेदित्याह--नोपकुर्यादिति । अर्थविदिति, स्वप्रयोजनोपायाविदित्यर्थः ।

[39] ............निश्चलीकरणोपायमाह—अर्थयुक्त्यादि । अर्थयुक्तीति, प्रयोजनसिद्ध्यनुगुणत्वं यदप्यवस्थितं कदाचित्सन्धि‡-र्विजिगीषुणा करोति तदैवास्य चलनहेतुमर्थलिप्सादिकं स्वयं प्रदानादिनापि हन्यात्, यथा पुनर्न चलेदित्यर्थः । अचलनमपि सिद्धि-स्वरूपे निवेश्येति+ हृदयम् ।

[40] यस्तु अरिविजिगीष्वोर्द्वयोरपि साधारणीभूतैवातिशठमश्व...... तदरिस्तावद्भेद§......भिन्नश्चोच्छिन्द्यात्, स ह्यसभूते|| तास्मिन्नुच्छिन्ने पुनः शत्रुमुपच्छिन्द्यादित्याह--अरिसाधारणमित्यादिना ।

[41] आत्मनि परे च यदुदासीनं तत्र विधिमाह—उदासीनश्चेति । यत्स्वपरयोरुदासीनं तद्भूम्यनन्तरैर्विरुद्धं कुर्यात्, ततस्तद्विग्रहेणो-(णा)पकारेण पीडितमुपकारेण स्वजन्ये निवेशयेत् सापेक्षं कुर्यादित्यर्थः ।

---

* 'प्रकृतिभ्यां' इति डॉ. जौली. मूलपाठः । व्याख्यानुरोधात्तु पूर्वत्रापि 'सामन्तैकान्तरेभ्यस्तत्' इत्यादि बहुवचनान्तः पाठो भवेत् । परं मूलपाठः स्वारसिको भाति ।

† 'अर्थयुक्त्या' इति डा. जौली. मूलपाठः ।

‡ अत्र 'यदप्यनवस्थितं कदाचित्सन्धि विजिगीषुणा' इति पाठो युक्तो भाति ।

+ 'निवेश्यमिति हृदयम्' इति वाऽत्र पाठो भवेत् ।

§ अत्र कदाचित् 'तदरितस्तावद् भेदयेत् भिन्नश्च' इत्याद्यानुपूर्वीकः पाठो भवेत् ।

|| 'स ह्यसम्भूते' इति पाठोऽत्र भाति ।

४२ पूर्वमुभयानपेक्षतया उभयसाधारणे विधिरुक्तः, इदानीन्तु दुर्बलतयोभयसापेक्षत्वे विधिमाह—अमित्रमित्यादिना । यद्दौर्बल्या-(द्)बलार्थमुभावालम्बेते तद्दण्डेन बलेनानुगृह्णीयात्, यथा विमुखं न स्यादित्यर्थः ।

४३ उभयापेक्षस्य दुर्बलस्यैव प्रकारान्तरविकल्पानाह—अपनीये-त्यादि । पूर्वस्या भूमेरपनीय भूम्य(न ?)न्तरे पार्श्वत्वापयेत्* येन परापेक्षा न स्यात् । किं कृते ( त्वे ) त्याह-निवेश्येत्यादि, पूर्वम-यन्त्र† भूमौ स्थितः, तत्रान्यं स्थापयित्वा । किमत्रान्यत् स्थापनमि-त्यत्राह-दण्डानुग्रहहेतुनेति, दण्डेन साहाय्यकरणार्थमेको दण्डेन साहाय्यदायितया तत्रान्यः प्रथममेव स्थापनीय इत्यर्थः ।

‡४४ यत्तु समर्थं सत् विजिगीषोरपकुर्यात् तस्यापदि न वोप-कुर्यात् परिहारार्थं न चेष्टेत, तन्मित्रं प्रथमं विश्वस्तं कृत्वा उच्छेद-सौकर्यदशायामुच्छिन्द्यादेव न विचारयेदित्येवकारार्थः । अङ्कमुपा-गतम्+ -स्वगोचरतापन्नमित्यर्थः ।

४५ विजिगीषुः स्वमित्रस्य प्रकृत्यादिव्यसनेन कर्मसु व्यापृतः स्वशत्रुं स्वयं च (?) साधयेदपि कुत §तत्साहाय्यार्थं गूढप्रतिहतदण्डः पराविज्ञेयबलादिव्यसनेन मित्रेणैवेत्यर्थः । उपग्रह|| इति निष्प्रति-बन्धः ।

४६ मित्रेऽभिह (हि)तो न्यायः शत्रावपि तुल्य इत्याह-अमित्रव्य-सनादित्यादि । अरेर्बलादिव्यसनस्य दैवतसिद्ध्या यन्मित्रममित्रा ( त्र ) व्यसनादुत्थित ( तं ) व्यसनं विसृज्य स्वकर्मसिद्धियुक्तं विजि-

---

* अत्र कदाचित् 'पार्श्वं स्थापयेत्' इति पाठो भवेत् ।

† अत्र 'पूर्वमन्यत्र भूमौ' इत्यादिपाठः शोभनो भाति ।

‡ अत्र 'अपकुर्यादित्यादि' इति सूत्रप्रतीकं भवेत् ।

+ अत्र हि 'अङ्कमुपस्थितम्' इति डा. जौली. मूलपाठः ।

§ अत्र 'स्वयं न साधयेदपितु तत्साहाय्यार्थं ( स्वमित्रसाहाय्यार्थमित्यर्थः ) गूढप्रहितदण्डः' इत्यादिपाठो भवेत् । गूढप्रहितदण्डइत्यस्य गूढं शत्रुणाऽविज्ञातं यथा स्यात्तथा प्रहितः प्रेषितो दण्डः सेनादिबलं येन एवंभूतो विजिगीषुरित्यर्थः ।

|| अत्र 'अनवग्रहः' इति डॉ. जौली. मूलपाठः । युक्तश्चैष एव पाठः ।

गीषावनपेक्षं भवति तच्छत्रुणैव साधनीयं न तु स्वयमिति, स्वस्यानृशंस्यार्थं, शत्रुणैव प्रसिध्यतीति, शत्रुणैव साधितं भवतीत्यर्थः ।

[४७] एवं षाड्गुण्यप्रयोगं प्रपञ्चेनोक्त्वा तदर्थं समासेनोपसंहरति-वृद्धिः* क्षयश्चेत्यादि । अरिविजिगीषुता† बुद्ध्य व्यवस्था षाड्गुण्यस्य-निमित्ततया ऽनुसन्धेयाः, अरिषु कर्शनोच्छेदने कार्यतया, सामादयः सर्वेऽप्युपायाः साधनतया वेत्यर्थः । एतानिति, अनुक्रान्तानुपायान् समादध्यात् । तत्राधिकारिविशेषमाह-यश्चार्थशास्त्रविदिति । शास्त्र शिक्षित एवाधिकारी नान्य इत्याशयः ।

[४८] सम्यक् प्रयुक्तस्यास्य फलमाह—एवमित्यादिना । अन्योन्यसञ्चारमिति, षडपि गुणानन्योन्यस्मिन् सञ्चार्य बन्धेन तया‡तद्विचार्यते तत्र विग्रहादीन् यच्च विग्रहादौ स्थानतया विचार्यते तत्र सन्धिमपि सञ्चार्य; अत्र विग्रहादौ कृते किं स्यादितीति वा, अत्र सन्ध्यादिकरणे किं स्यादिति........................+र्यं योऽनुप (दि ?) श्यति अनुबन्धेन कार्यतयाऽध्यवस्यति । स बुद्धीति गलै§ बुध्यत (न्त) इति बुद्धयः उपायाः त एव निगलाः अशक्यमोचनत्वात् तैर्बन्धैः (द्धैः) परतन्त्रीकृतैः पार्थिवैरिष्टैः (ष्टं) यथेच्छं वृद्धानां हीनतां हीनानां वृद्धताञ्चापादयत् (न्) क्रीडति विनोदमिव करोतीत्यर्थः ।

इति श्रीवादिकविचूडामणिमहोपाध्यायश्रीमन्माधवमिश्रयज्वविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां षाड्गुण्ये सप्तमेऽधिकरणे अष्टादशोऽध्यायः समाप्तः ।

## समाप्तश्च षाड्गुण्यमधिकरणम् ।

---

* 'वृद्धिं' इति डॉ. जौली. मूलपाठः । युक्तश्च ।

† अत्र कदाचित् 'अरिविजिगीषूणां वृद्धयाद्यवस्थाः' इत्येवंभूतो ऽर्थानुसारी पाठो भवेत् ।

‡ अत्र 'बन्धनतया, तद्यत्संध्यादौ स्थानतया विचार्यते तत्र विग्रहादीन्, यच्च विग्रहादौ' इत्यादिपाठः कदाचित् भवेत् । पूर्वापरपर्य्यालोचनेनैवमेवार्थानुगमात् ।

+ अत्र कदाचिद् 'किं स्यादिति इति वा, एवं षडपि गुणानन्योन्यत्र सञ्चार्य यो ऽनुपश्यति' इत्यानुपूर्वीकः पाठो भवेत् ।

§ अत्र 'स बुद्धीति' इत्येतावन्मात्रं यदि प्रतीकं स्यात्, तदा 'गलैः' इतिपदमत्र सर्वथापि व्यर्थम् । अथ 'गलैः' इति पदमप्यत्र प्रतीकांशत्वेनेष्यते, तदा तु 'स बुद्धिनिगलैरिति' इत्यानुपूर्वीकं मूलानुसारि प्रतीकं भवेत् ॥

# व्यसनाधिकारिकम् ।

## ८ अधि. १ अध्या. १२७ प्रक.

### सू. प्रकृतिव्यसनवर्गः ।

अरिसम्प्रयुक्तः शत्रु (त्रुः) व्यसनी यातव्यः अभ्युच्चीयमानो विगृह्णीयादिति यातव्यस्य अरेर्यातुश्च विजिगीषोर्व्यसनभावौ याव-ङ्गतयोक्तौ, तत्र व्यसनस्य कारणस्वरूपाश्रयगौरवलाघवादिकं नोक्तम् अतस्तद्वचनार्थं व्यसनाधिकरणेनं प्रवृत्तं व्यसनाधिकारिकं प्रकरण-मारम्भणीयमिति प्राप्ते तस्याश्रयाद्यभिधानार्थं सूत्रं-प्रकृतिव्यसनवर्ग इति । स्वाम्यादिप्रकृतिसप्त*काश्रयः कामक्रोधादिकारणभेदजन्यो व्यसनवर्गश्चिन्त्यत इत्यर्थः ।

तत्राचार्य एवाधिकरणसङ्गतिं दर्शयति—व्यसनेत्यादिना । अरेर्व्यसने सति आत्मनश्चासति यातव्यमित्युक्तम्, तदुच्छेदसौकर्या-र्थम्, तत्रोभयोस्तुल्ये व्यसने कथं कर्त्तव्यः (व्यम्), यथा ह्यरेर्व्यसनि-त्वाद्यानं सुकरं तथात्मनो व्यसनित्वेप्यात्मरक्षणं यानात्सुकरमेवेति उभयतः सौकर्यमपि तुल्यम्, अतो व्यसनस्यारेर्विजिगीषोश्च युगप-द्भावे सौकर्यस्य च यानरक्षणयोर्द्वयोरपि तुल्यत्वे यानं वा कार्यं रक्षणं वेति चिन्ता क्रियत इत्यर्थः । अत्र यानमेव यातव्यं रक्षणमेव रक्षितव्यमिति शब्दमा†गाति । व्यसनचिन्ता-व्यसनस्य गौरवलाघ-वादिचिन्ता, यदा शास्त्रा....................तत्र व्यसनं स्वयं लघु व्यसनः तदा यानम्, विपर्यये तु स्वरक्षणमेव कार्यमित्याशयः ।

तत्र व्यसनस्य विभागपूर्वकं कारणमाह-दैवमित्यादिना । दैव-मिति सामान्यतः प्राक्तनकर्मजम्, मानुषमिति सामान्यतः पुरुष-बुद्धिजम् । ( अनयोश्शू दैव भवश्यरुदकादिभयं अपनय सन्ध्यादी-नामयथोद्देशावस्थापनवन प्रभवं परचक्रादि पीडितं अत्र दैवम-

---

* इदं स्वाम्यादिप्रकृतिसप्तकं पञ्चमसूत्रे ऽनुपदमेव वक्ष्यते ।

† अत्र 'शब्दभागिति' इत्यर्थानुसारी पाठो भाति ।

नय.........सम्भवतीत्यादौ सामान्यस्य विशेषावच्छेद्याक्रान्तात्माश्रयत्वदोषः* )· शेषस्य सामान्यकारणकत्वाच्चेति ।

कारणमभिधाय विभागमाह–गुणप्रातिलोम्यमित्यादि । गुणानां महाकुलीनत्वादीनां दैवप्रतिबन्धादिना स्वकार्यकरणं प्रातिलोम्यं तच्चैनं हितप्राप्तेरहितपरिहाराद्वा श्रेयसोऽप्यस्याति†व्यसनमित्यर्थः । अभाव इति, तेषामेव गुणानामसत्वम्, वक्ष्यति–अन्धश्चलितशास्त्रो वेत्यादि (८ अधि., २ अध्या., १२ सू.) । अथवा गुणप्रातिलोम्यं परगुणेभ्यो·····नाम सन्ध्यादीनां गुणानामसम्यक्करणं वा, यथा परो विशेषभागी तथैनमतिसन्दध्यात् तथाकरणम् ‡ । अभावस्तु सन्ध्यादीनामन्यतमे कार्ये तदकरणम् । अन्धश्चलित शास्त्र इत्यत्र अन्धत्वं ज्ञानाभावादकरणं, चलितशास्त्रत्वञ्च (चा) सम्यक्करणं ज्ञानादन्यथाकरणमित्युभयोदाहरणं द्रष्टव्यम् । प्रदोष इति, प्रकृष्टदोषो गुणानप्यतिशय्याशुभजनकः कोपादिः, वक्ष्यति हि–'कोपजस्त्रिवर्ग' इति (८ अधि., ३ अध्या., ४ सू.) । प्रसङ्ग इत्यादि, विषयेष्वतिसङ्गः, वक्ष्यति हि–'कामजस्त्रिवर्ग'+ इति (८ अधि., ३ अध्या., ५ सू.) । पीडा–परचक्रादिनिमित्ता बाधा; वक्ष्यति हि–'अग्न्यादि(नि)परचक्रादि भवानि व्यसनानि'

एवं व्यसनानि पञ्चधा विभज्य एषां व्यसनसंज्ञान्वर्थत्याह–व्यसनीत्यादिना§ । श्रेयसो हिताहितप्राप्तिपरिहारात्मनोऽप्य(व्य)स्यति भ्रंशयतीति व्यसनमित्यर्थः ।

एवं व्यसनस्य कारणादि व्यवस्थाप्य यातव्या हि यानात्मरक्षणयोरन्यतरपरिग्रहणेनोपयोगिनी, तस्य|| गौरवलाघवे निरूपयन्

---

* ( ) एतत्कोष्ठान्तर्गतः पाठो विभ्रष्टपदवर्णत्वादविस्पष्टार्थः । कदाचिदत्र 'अनयोस्तु दैवं वर्षादिजन्योदकादिभयं अनयः सन्ध्यादीनामयथोद्देशावस्था, अपनयप्रभवं परचक्रादिपीडितं, अत्र दैवमनयापनयाभ्यां सम्भवतीत्यादौ सामान्यस्य विशेषावच्छेद्याक्रान्तत्वान्नात्माश्रयत्वदोषः, इत्यानुपूर्वीको वा पाठो भवेत् ।

† अत्र 'श्रेयसो व्यस्यतीति व्यसनमित्यर्थः' इति पाठो भाति ।

‡ अत्र 'तथाकरणम्, इत्यधिक इवाभाति पाठः ।

+ डा. जौली. मूलपुस्तके तु (८, ३, ५, इत्यत्र) 'कामजश्चतुर्वर्गः' इति युक्तः सूत्रपाठः । अत्र तु लेखकप्रमादवशात्तथा जात इति प्रतीयते ।

§ अत्र व्यस्यतीत्यादिना' इति युक्तः पाठः। डॉ. जौली. मूलपुस्तकेप्येष एव पाठः ।

|| तस्य–एवंभूतस्य व्यसनस्येत्यर्थः ।

स्वाभिमतमाचार्यमतन्तावदाह–स्वाम्यमात्येत्यादि । आचार्या इति स्वपूज्यगुरवोऽत्र विवक्षिताः, तन्मतस्यानिरासेनेतरेषां निरासात् । अत्र स्वाम्यादीनां सप्तानां निर्देशक्रमेण पूर्वपूर्वं गरीय इति मित्राद्दण्डो गरीयान् दण्डात्कोश इत्यादिक्रमेण स्वामिपर्यन्तं नेयम् । स्वाम्यादिसप्तकस्य स्वसंज्ञाभिरुपादानं तत्क्रमप्रदर्शनार्थम्, अत्र स्वाम्यादिमित्रान्तासु सप्तप्रकृतिषु स्वाम्यमात्यारनुपा* द्विकादारभ्य पुनः स्वामिनः प्रभृत्येकैकं त्यक्त्वा उत्तरोत्तरोपादानेन च प्राप्तेषु षट्सु द्विकेषु उत्तरं गरीय†स्त्वं तदुक्तोपपत्तिश्च ।

तत्तदेकदेशिमतत्वेनोपन्यस्य दूषयति—नेति भारद्वाज इत्यादिना । भारद्वाजो द्रोणाचार्यः । अत्र स्वाम्यमात्ययोरिति (वि) शेषोपादानाच्छेषाणां पूर्वपूर्वगरीयस्त्वं तस्येष्टमेवेति ग्राह्यम् ।

स एव स्वमतमाह—स्वाम्यमात्ययोरिति । अनयोरुत्तरमेव गरीय इत्यर्थः ।

इतरं दुष्करं कार्यकर्त्तृत्वमेवात्रोपपत्तिरपीत्याह—मन्त्र इत्यादि । मन्त्रः कार्यविचारणा, मन्त्रफलावाप्तिः–कार्यनिश्चय‡..............., कर्मानुष्ठानं निश्चितानां कार्याणामाचरणम् । आयव्ययकर्मेति, आयः कर्मफलोत्पादः, व्ययः तस्य स्थानेषु विनियोगः, तयोः प्रवर्त्तनम्, दण्डप्रणयनं बलस्य सङ्ग्रहप्रेषणादि । (अ)मित्राटविकं(क)प्रतिषेध इति+, शत्रूणामाटविकानान्तु अस्य विषपीडनादेर्वारणम् । राज्य रक्षणमिति, पौरजानपदानां स्वपरचक्रादिपीडनाद्रक्षणम् । व्यसनप्रतीकारमिति§ दैवमानुषव्यसनानां प्रशमनम् । कुमाररक्षणमिति पुत्रेभ्यो राज्ञो रक्षणम् । अभिषेकश्च कुमाराणामिति, यौवराज्यादौ

---

* कदाचिदत्र 'स्वाम्यमात्यद्वयुपादानाद् द्विकादारभ्य' इत्यानुपूर्वीकः पाठो भवेत् । स्वाम्यमात्ययोर्द्वयोरुपादानं यत्रद्विके तस्मादित्यर्थः ।

† अत्र 'उत्तरोत्तरगरीयस्त्वं तदुक्तोपपत्तेश्च' इति पाठोऽर्थानुसारी भाति ।

‡ कदाचिदत्र 'कार्यनिश्चयकरणम्' इति पाठो भवेत् ।

+ डॉ. जौली. सम्पादितमूलपुस्तके 'अमित्राटवीप्रतीषेधः' इति पाठ उपलभ्यते ।

§ अत्र 'व्यसनप्रतीकारः' इति डॉ. जौली. मूलपाठः ।

वा राजमरणे स्वराज्ये वा योग्यतानुगुणमभिषेचनमित्येतत्सर्वममात्यायत्तम्, अतस्तद्व्यसनं स्वामिव्यसनादपि गरीय इत्यर्थः ।

[९]एवम्भूतानाममात्यानामभावो वा व्यसनं वा द्वै(वै)गुण्यं वा सम्भवेत्, तत्राद्येऽनिष्टमाह—तेषामभाव इति । तेषामिति-अमात्यानां, तदभावा*न्मन्त्राद्यभावाच्छिन्नपक्षस्येव स्यादित्यर्थः ।

[१०]तृतीयेऽप्याह-वैगुण्ये चेति । प्राणबाध इति, राज्ञ इति शेषः । तत्रोपपत्तिमाह—प्राणान्तिकचरत्वादिति, प्राणानामासन्नवृत्तित्वाच्च पूज्यपूजनादिकारयितृत्वं तेन राज्ञः प्राणरक्षणादिकं तद्दर्शन†मित्यर्थः । अमात्यानामितरदुष्करकार्यकर्त्तृत्वाद् गरीयस्त्वमिति पूर्वपक्षिणो ऽभिसन्धिः ।

[११]एतद् भारद्वाजमतं निषेध(य?)ति—नेति कौटिल्य इति ।

[१२]अन्यदुष्करकार्यत्वमपि सिद्धमित्याशयवानमात्याभावे राज्ञश्चेष्टानाशः स्यादिति यदुक्तं‡ तन्न, स्वयमेव राज्ञः कार्यनिर्वहणधुर्यत्वादित्याह-मन्त्रीत्यादि । भृत्यवर्गमिति, भरणीयान्यष्टादशतीर्थान्यपि स्वयमेव सम्पाद्य राजा मन्त्रमपि कर्त्तुं शक्त एवेत्यर्थः । अध्यक्षप्रचारमिति, तत्तदधिकारिप्रवर्त्तनं, पुरुषप्रकृतीनाममात्यदण्डादीनां द्रव्यप्रकृतीनां जनपददुर्गकोषादीनां व्यसनप्रतीकारं तद्वर्द्धनञ्च राजैव करोति ।

[१३]यत्तु व्यसनिषु तेषु परोपजापापत्तिरुक्ता तत्परिहारमाह—व्यसनिषु चेत्यादि+ । व्यसनरहितानन्यानमात्यानपि करोतीत्यर्थः ।

[१४]वैगुण्ये चेत्यादेरपि परिहारमाह—पूज्यपूजनमि§त्यादि । पूज्यापूजननिमित्तो हि प्राणबाधः, तत्परिहारे|| स्यादिति भावः । दूष्यो-

---

* अत्र 'तदभावः' इति डॉ. जौली. मूलपाठः । व्याख्यानुसारिपाठस्तु स्वारसिको भाति ।

† अत्र 'तद्वर्धनमित्यर्थः' इत्यर्थानुसारी पाठो भाति ।

‡ अत्र 'यदुक्तवान्' इति युक्तः पाठो भवेत् ।

+ 'व्यसनिषु वा' इत्यादि डॉ. जौली. मूलपाठः ।

§ 'पूज्यपूजने' इति डॉ. जौली. मूलपाठः ।

|| अत्र 'तत्परिहारे न स्यादिति' इति पाठो ऽर्थानुसारी भाति ।

पग्रह* इति, राजानमपगृह्य चरतो मुख्यान् दूष्या(न्)......तेषां निरसने चावधत्ते।

[१५]प्रकृतिविनयमपि स्वयमेव करोतीत्याह—स्वामी चेति। सम्पादयतीति, सम्पन्नाः करोतीत्यर्थः। सम्पन्नं यदि करसम्पादकं स्यात् तदा तद्गरीय इत्यनेनोक्तं भवति।

[१६]स्वयं यच्छील इति। स स्वामी यच्छीलो यत्स्वभावः प्रकृतयोऽपि तथा स्युरित्यर्थः।

[१७]यदायत्तत्वादिति†। स्वाम्यायत्तत्वात् स्वामीत्यर्थः।

[१८]प्रकृतीनां स्वाम्यायत्तत्वे तासां तत्स्वभावतापत्तिः कथमित्यत्राह—कूटत्यादि‡। कूटं प्रधानकारणं समवायीति भावः। तथा च मूलप्रकृतिस्वभावास्तद्विकृतय इत्यर्थः।

[१९]द्वितीयद्विकमाह—अमात्येत्यादि।

[२०]स एव जनपदव्यसन(म्?)गरीयस्त्वे हेतुमाह—कोश इत्यादि। कोशो राजगृहप्रवेशितो हिरण्यादिसमुदयः, दण्डो मौलादिबलम्, कुप्यं वस्त्रास्तरणादिः(दि), विष्टिः कर्मकरवर्गः, वाहनमश्वखरोष्ट्रादि, निचयो धान्यस्नेहादिसमुदयः।

+[२१]कारणभूताजनपदाभावे सति तेषां कोशादीनामभावः स्यादित्यर्थः—तेषामित्यादिना। तस्मात् स्वामितोऽपरः अमात्यात्पूर्वगतश्च(श्च)मध्यगतो जनपदो न्याय्य इत्याह—स्वाम्यमात्ययोश्चानन्तर इति, अन्तरं व्यवधानमस्य न विद्यत इत्यनन्तरः जनपदः, स्वामिनोऽ(न)न्तरपश्चिमः अमात्यादनन्तरपूर्वश्चेत्यर्थः। कश्चित्(केचित्) तेषामभावइति पूर्वग्रन्थादभावपदमनुबध्नीयम्§ जनपदभावे स्वाम्य-

---

* 'दूष्यावग्रहे' इति डा. जौली. मूलपाठः। युक्तश्चैष पाठो भाति। तथासत्य ग्रेऽपि 'राजानमवगृह्य चरतो मुख्यान् दूष्यानवधार्य राजैव तेषां निरसने चावधत्ते' इत्यानुपूर्वीको वा कदाचित्पाठो भवेत्।

† 'तदायत्तत्वादिति' डा. जौली. मूलपाठः।

‡ अत्र 'तत्कूट०' इति डा. जौली. मूलपाठः।

+ अस्या अवतरणिकायाः 'कारणभूतजनपदाभावे सति तेषां कोषादीनामप्यभावः स्यादित्यर्थमाह' इत्यानुपूर्वीकः पाठः समीचीनो भाति।

§ अत्र 'अभावपदमनुवर्त्तयित्वा जनपदाभावे' इत्याकारकः पाठः शोभनो भाति

मात्ययोरप्यभाव इति व्याचक्षते । तत्रामात्य इत्यादिवत् स्वामितो जनपदस्य गरीयस्त्वं स्यादिति दोषः ।

[२२] विशालाक्षमतं निषेधति—नेति कौटिल्य इति ।

[२३] अमात्यमूला इति । अमात्यप्रवर्त्तिताः सर्वकर्मारम्भाः ।

*[२४] स्वकर्मणाञ्च सेतुवार्त्तानां सिद्धयः, तदा(था)योगक्षेमयोः अपूर्वलाभलब्धपरिरक्षण†.........नुपयोस्साधनं स्वतो देवीकुमारीभ्यः परतोऽन्तपालाटविकादिभ्योऽमात्यापेक्षम् । तथा प्रकृत्यादेरात्मनश्च व्यसनप्रशमनम्, शून्यनिवेशनम्, निविष्टस्य चोपचयो वर्द्धनम्, दण्डस्योत्तमसाहसादेः करस्य च राजदेयभागस्यानुग्रहः वैकल्ये सत्यनादानमल्पदानं ‡वा, इत्येतत्सर्वामात्ये कार्यम्+। तदभावे न स्यादित्यर्थः ।

[२५] तृतीयद्विकमाह—जनपददुर्गेत्यादि ।

[२६] तदुक्तोपपत्तिमाह—दुर्गाद्धीति§। कोशो राजपरिग्रहो रत्नादिः, दण्डो बलम्, तयोरुत्पत्तिर्दुर्गा(र्ग)वत्स्थानीयादेव, तत्रैव तत्सम्भवादिति भावः । आपदि स्थानञ्चेति, परचक्रभयादौ रक्षास्थानमित्यर्थः। शक्तिमत्तराश्चेति, पौरजानपदेभ्यो मन्त्रोत्साहप्रभावादि(धि)काश्च । नित्या–अनागमापायिनः। आपदि पराभिभवादौ सहायाश्चेत्यर्थः । जानपदानान्तु दोषमेवाह–अमित्रसाधारणा इति,(शत्रो)रागमने तमपि करदानादिनोपतिष्ठत(न्त)इति भावः ।

[२७] प(पा)राशरमतमपि निषेधति—नेत्यादिना। जनपदो(दा)दुर्गास्तद्वासिनो दुर्गवासिभ्योऽपि ज्यायांस इत्याह–जनपदमूला इत्यादि। दुर्गाणां स्थानीयादीनां, कोशस्यार्थादिसमुदयस्य, दण्डस्य बलस्य सेतोः पुष्पफलवाटादेः वार्त्तायोगो रक्षादरारम्भा जनपदायुक्ताः ।

---

* अत्र कश्चन पाठांशस्त्रुटित इति प्रतीयते । स्वकर्मणामित्यत्र स्वशब्दो जनपदपरः ।

† अत्र 'परिरक्षणानुपयोस्साधनं' इत्यानुपूर्वीकः पाठः सम्भवति ।

‡ अनादानं करस्य अल्पदानं दण्डस्य इति विवेकोऽत्र स्यात् ।

+ 'इत्येतत्सर्वममात्येन कार्यम्' इति पाठो युक्ततरो भाति ।

§ अत्र 'दुर्गे हि' इति डॉ. जौली. मूलपाठः ।

अयमाशयः—यदुक्तं दुर्गात्कोशदण्डो*पपत्तिरिति, तत्र दुर्गं कोशदण्डयोः कारणमस्तु, मूलकारणन्तु जनपद एव तयोर्दुर्गस्य च। यत्तु पौराणां शक्तिमत्तरत्वमिति तन्न, वैदग्ध्यातिशयेऽपि शौर्यादिभिः पौरजानपदतुल्या इति। शौर्यमपिक्रमे †निर्जयत्वम्, स्थैर्यं निश्चलव्यवसायत्वं, दाढ्यमाशुकारित्वं, बाहुल्यं बहुत्वमित्येते गुणा जनपदेष्विति।

[२९] जनपदाभावो( वे )दुर्गस्य न कार्यकरत्वमपीत्यादि( ह )—पर्वतेत्यादि‡। पर्वतानूपा( प )नदीसरःप्रभृत्यन्तःस्थिततया तद्द्वीपरूपाश्च दुर्गा जनपदरनि( हि )ततया नाध्यास्यन्त इत्यर्थः।

[३०] ननु जनपदरहितदुर्गवत् दुर्गरहितजनपदोऽपि नाध्येष्यत+ इत्याशङ्क्य विशेषमाह—कर्षकप्रायेत्विति। अप्रभूतायुधीय इत्याशयः। प्रभूतायुधीये तु जनपदव्यसनमेव गरीयः, दुर्गव्यसनेऽपि नास्य बाधः, आयुधीयरक्षितत्वादित्यर्थः।

[३१] चतुर्थं द्विकमाह—दुर्गकोशेत्यादि। पिशुन इति नारदः।

[३२] दुर्गसंस्काररक्षणयोरर्थापेक्षत्वादित्याह—कोशमूलो हीति।

[३३] परदुर्गनिरासोपयोगी च कोश इत्याह—दुर्गं कोशादिति§। उपजाप्य||मित्यत्र दुर्गशब्दार्थो दुर्गस्थः, कुद्धादिवर्गस्थस्यैवोपजाप्यत्वादिति ग्राह्यम्।

[३४] जनपदानां मित्राणाममित्राणाञ्च निग्रहः कोशादेवेत्याह—जनपदेत्यादि। देशान्तरितानामुत्साहनमिति, देशव्यवहितानामपि स्वसाहाय्यार्थमुत्साहनं विक्रमे च प्रवर्त्तनमेव¶ कोशादित्यर्थः। *बल-

---

* 'कोशदण्डोत्पत्तिरिति' पाठोऽत्र समीचीनो भवेत्।

† 'शौर्यं विक्रमेण निर्जयत्वम्' इति पाठो भाति।

‡ डॉ. जौली. मूलपुस्तके तु 'पर्वते' त्यस्मात्पूर्वं 'जानपदेषु' इत्यपि, पाठो वर्त्तते। व्याख्यासम्मतत्वात्त्विदं पदं अष्टाविंशतितमसूत्रस्यैवान्तोऽवयव इति बोध्यम्।

+ अत्र 'नाध्यास्यत' इति मूलानुसारी पाठो भाति।

§ 'दुर्गः कोशात्' इति पुंरूपो डॉ. जौली. मूलपाठः।

|| अत्रापि 'उपजाप्यः' इत्येव डॉ. जौली. मूलपुस्तके पाठः।

¶ अप्यर्थकः खल्वेवशब्दोऽत्र बोध्यः।

* अत्र 'दण्डबलव्यवहार इति, दण्डभयाद्यो बलव्यवहारः' इत्यानुपूर्वीकः पाठः शोभनो भाति।

व्यवहार इति, दण्डादण्डभयाद्यो बलव्यवहारः स्वसाहाय्यार्थम(र्थं) प्रेषणं तदपि कोशाभावेन हीनः स्यादित्यर्थः।

[३५]परबलाऽऽक्रमणाद्यदा दुर्गेऽप्यासनमशक्यं स्यात् तदापि कोशमादाय वस्तुं शक्यं(न)तु दुर्गमित्याह—कोशमादाय चेति।

[३६]एतन्निषेधति—नेतीति।

[३७]दुर्गार्पण इत्यादि। कोशो दण्डश्च दुर्गेणार्पणीयौ रक्षणीयावित्यर्थः। तूष्णींयुद्धमिति, योगपुरुषादिभिर्गूढवधः, स्वपक्षदूष्यादिनिग्रहः, दण्डभयप्रेषितस्य व्यवस्थापनम्। आसारेत्यादि, आसारस्य मित्रबलस्य स्वीकरणञ्च दुर्गवत एव स्यादित्यर्थः। परचक्रेत्यादि, परस्य चक्रो यच्चक्रं सैन्यं तस्याटविकानाञ्च विक्रमनिवारणं दुर्गादेवेत्यर्थः।

[३८]कोशरक्षणमप्यसति दुर्गे(न)स्यादित्याह—दुर्गाभावे हीति*। परेषामिति, स्यादिति शेषः।

[३९]स्थिरदुर्गवतामुच्छेदोऽपि न शक्य इत्याह—दृश्यते हीति।

[४०]दुर्गकोशौ निरूप्य कोशदण्डौ निरूपयति—कोशदण्डेत्यादि। कौणपदन्त इति भीष्मः।

[४१]स एव तत्र युक्तिमाह—दण्डमूलो हीति। मित्राणाममित्राणाञ्च दमनं दण्डादेव। परदण्डेति, साहाय्यागतस्य विक्रमे प्रवर्त्तनञ्च(स?) दण्डादेवेत्यर्थः। स्वदण्डप्रतिग्रहश्चेति, स्वदण्डस्य स्वीकरणमपि दण्डादेव, दण्डहीनो दुर्बलदण्डोऽरिबलभयान्नापतिष्ठत इति भावः।

[४२]दण्डाभावे सञ्चितकोशस्यापि नाशः स्यादित्याह—दण्डाभाव इति।

[४३]कोशाभावेऽपि दण्डसंग्रहणमशक्यमेवेत्याशङ्क्य निषेधति—कोशाभावे चेति। कोशो हिरण्यम्, तदभावेऽपि कुप्येन वस्त्रादिना, भूम्या च, परभूमिस्वयंग्राहेण† वेति, शत्रुविषये स्वयंग्राहः येन यद् गृहीतं बलाद्द्रव्यं तत्तस्यैव स्वमिति नियमलभ्यं धनं तेन वा दण्डसंग्रहणं शक्यमित्यर्थः।

[४४]ननु दण्डसंग्रहणेऽपि कोशो न सिध्येदित्यत्राह—दण्डवता च कोश इति। पिण्डयितुमित्यनुषङ्गः।

---

* अत्र 'दुर्गाभावे च' इति डॉ. जौली. मूलपाठः।

† अत्र 'स्वयंग्रहेण वा' इत्येव डॉ. जौली. मूलपाठः।

[४५]दण्डं विना स्वामिन*श्चलितुमप्यशक्यमित्यमात्यपदात् सस्तो† दण्ड इत्याह—स्वामिनश्चेत्यादि ।

[४६]दण्डस्यैकान्ततः प्राधान्यमसहमान एतन्निषेधति—नेतीति ।

[४७]कोशमूलो हीत्यादि । अर्थेनैव संग्राह्यमबल‡ इत्यर्थः ।

[४८]संगृहीतमपि बलं कोशाभावे+ इति.............

[४९]...............§तैरलाभे स्वामिनमपि दण्डो हन्यादित्याह—स्वामिनं वेति ।

[५०]सर्वाभियोगतश्चेति|| सर्वैः सामन्तैरभियोगो विरोधः तमपि तायितुं शक्तः, अर्थदाने सर्ववशीकारादिति भावः ।

[५१]त्रिवर्गे स्वेतरत्साधकश्चार्थ इत्याह—धर्मकामहेतुरिति ।

[५२]दण्डैकान्ता¶न्युक्तयुक्तीनां तर्हि का गतिरित्यत्राह—देशकालेत्यादि । तद्देशावस्थानुगुण्येनानयोरन्यतरत्प्रमाणीभवति, निर्वाहको भवतीत्यर्थः ।

[५३][५४]दण्डाभावे च ध्रुवः कोशविनाश इति यद्दण्डैकान्तवादिनोक्तं तदभ्युपगमेन कोशस्य विशेषमाह—कोशपालने ✳हीति । दण्डेन कोशमात्रं रक्ष्यते, कोशेन तूभयमपीत्यर्थः । भवतीति, पालन इति ।

[५५]उपसंहरति—सर्वद्रव्येति । सर्वद्रव्यप्रकृतिनिर्वाहकः कोशः ।

---

* 'स्वामिना चलितुम्' इति पाठोऽत्र समीचीनो भवेत् ।

† अत्र कदाचित् 'शस्तोदण्ड' इति 'प्रशस्तोदण्ड' इति वा पाठो भवेत् ।

‡ अत्र 'संग्राह्यं बलमित्यर्थः' इति पाठो ऽर्थानुसारी भाति ।

\+ अत्र कदाचित् 'संगृहीतमपिबलं कोशाभावे परं गच्छतीत्याह—कोशाभाव इति ।' इत्यानुपूर्वीकः पाठो भवेत् ।

§ अत्र पुनः 'अथवा दण्डस्य तैरलाभे' इत्येषः पाठो भवेत् । अयमर्थः—अत्रहि पक्षद्वयम्, कोशाभावे दण्डस्य सैन्यस्य परैः शत्रुभिः सह सम्बन्धः, दण्डद्वारा स्वस्वामिवधो वा । तत्र द्वितीयं पक्षमाह—अथवेत्यादिना, दण्डस्य तैः परैः शत्रुभिःसह अलाभे कैश्चित्कारणैरसम्बन्धेसति स दण्डः स्वामिनमेव हन्यादिति ।

|| 'सर्वाभियोगकरश्च' इति डॉ. जौली. मूलपाठः ।

¶ अत्र कदाचित् 'दण्डैकान्तवाद्युक्तयुक्तीनां' इति पाठो भवेत् ।

✳ लब्धपालनो हि' इति डॉ. जौली. मूलपाठः ।

अतो दण्डव्यसनं सर्वद्रव्यव्यसनाद्वरम । तद्व्यसनं* गरीय इत्यर्थः ।

[५६] क्रमाद्दण्डमित्रव्यसने निरूपयति—दण्डमित्रेत्यादि । वातव्याधिरिति उद्धवः ।

[५७] मित्रमित्यादि । दण्डस्य तु द्व(भृ)तत्वमपि, अवधानञ्चापेक्षितमिति भावः ।

[५८] आसारमिति† । मित्रान्तरबलस्य कोशं शमयतीत्यर्थः ।

[५९] व्यसनावस्थायोगमिति† । आपद्यमुञ्चदित्यर्थः ।

[६०] निषेधति—नेतीति ।

[६१–६४] दण्डवतो हीत्यादि‡ । असयुद्ध+ भूमिकाललाभाद्विशेषः सम्भवी, स च द्वयोस्तुल्यः । विशेषतस्तु न मित्रं सर्वावस्थोपयोगि, शत्रुं प्रति शीघ्राभियाने वा अमित्रादिकोपे वा तदसन्निधेः । विजिगीषोः परस्य च युगपद्व्यसने परस्य वृद्धौ जातायां यत्र स्थितावर्थः सिध्येत् तत्रैव तिष्ठेत् । अतो दण्ड एव सदा सन्निधिमान् सर्वत्र सर्वदा चोपयोगीति तद्व्यसनमेव मित्रव्यसनाद् गरीय इति ।

[६५] एवं सप्तप्रकृतीनां क्रमाद् व्यसनतारतम्यं निरूप्योपसंहरति—प्रकृतिव्यसनेत्यादि । संप्रधारणं विशेषावधारणमुक्तमित्यर्थः ।

[६६] एवं स्वाम्यादिसप्तावयवस्य प्रकृतिमण्डलस्यावयवभूतानामेकैकशः स्वाम्यादीनां पौर्वापर्येण गौरवादिकं निरूप्य तदुपयोगान् दर्शयति—प्रकृत्यवयवानान्त्वित्यादिना । मण्डलरूपा(या ?)वयवभूतानां स्वाम्यादीनां व्यसनस्य विशेषतः उक्तात्पौर्वापर्यनिमित्तरूपात् गुरुत्वादिरूपाद्विशेषात् बलीयस्त्वादिति फलितार्थं(र्थः) । व्यसनलाघवकार्यै§ ऋद्ध्यनुकूलत्वात् बहुभावादिष्वन्यतमो गुणः कार्यसिद्धिकर इत्यर्थः । अत्रामात्यदण्डविक्रमेष्व(नु)रागः सम्भवी, जनपद-

---

* तद्व्यसनं कोशव्यसनमित्यर्थः ।

† सूत्रस्य मध्यप्रतीकमिदम्, नत्वादिप्रतीकम् ।

‡ अत्र डॉ. जौलीसम्पादितमूलपुस्तके 'हि' इति पदं न दृश्यते ।

+ अत्र 'स्वयुद्धभूमिकाल०' इत्यादिपाठोऽर्थानुसारी भवेत् । डॉ. जौलीसम्पादित मूलपुस्तके तु द्विषष्टितमसूत्रे 'स्वयुद्धदेशकाल०' इत्यादिपाठो वर्त्तते ।

§ अयं सप्तम्यन्तः पाठ इति प्रतीयते । ऋद्ध्यनुसारं व्यसनलाघवकार्ये ऽनुष्ठीयमाने सति बहुभावादिष्वन्यतमो गुणः कार्यसिद्धिकर इत्यन्वयः ।

दुर्गयोस्त्वचेतनयोः तत्तत्पुरुषगतः, उपचारात् । कोशे त्वनुराग-शब्देन तत्कार्यभूतस्वाम्यपरित्यागो वक्ष्यते आपत्स्वविधिना अनुबद्धात्, बहुभावो बहुत्वं, अनुरागः स्वामिविभक्त*, सारो महार्घ-गुणयोगः । तदयमर्थः–अरिविजिगीष्वोर्वा द्वयोरपि प्रकृतिव्यसने तुल्येऽपि तत्पूर्वावयवयोः उत्तरव्यसनस्य लघीयस्त्वरूपाद्विशेषात् तदवयवगतो बहुभावादितमो† गुणः कार्यसिद्धये स्यादिति ।

६७ ननु अरिविजिगीष्वोर्वा उभयोरपि यदा स्वात्मव्यसनं वा अमात्याद्यन्यतमव्यसनं वा तुल्यं स्यात् तदा कथं कार्यमित्यत्राह—‡ ...। द्वयोररिविजिगीष्वोर्वा द्वयोरपि स्वात्मव्यसने अमात्याद्यन्यतमव्यसने वा तुल्ये सति बहुभावादिगुणान्तानितो+ विशेषः स्यात्, उक्त-गुणरहितं तद्व्यसनं तद्गरीयः स्यादित्यर्थः ।..........योरविधाय-कत्वात् प्रकृत्यवयवे यदा गुणाभावोऽपि तुल्यः स्यात् तदा कथमित्य-त्राह—शेषप्रकृतीति । प्रकृत्यवान्तराणां तत्प्रकृत्यङ्गतयोक्तगुणयोगो बहुभावादन्यतमत्वं§ यदि स्यात् तदैवं स्यात् । यदा तु तदैव स्यात् (स्युः) सम्पूर्णाश्शेषप्रकृतिषु गुणाः तदा तत्प्रकृतिगतानुरागादिगुणा-भावोऽप्यकिञ्चित्करः शेषप्रकृतीनां गुणान्तरसद्भावस्य तद्विधाय-कत्वात् तद्गुणाभावाच्छादकत्वादित्यर्थः ।'यदि स्यान्नविधेयिक||' मिति पाठेऽप्यर्थं वक्ष्यामः ।

६८ आचार्यमतस्यापवादतया स्वमतमाह–शेषेत्यादि । यत्रैकत्र व्यसनं शेषप्रकृतिनाशकं स्यात् तत्प्रधानप्रकृतिगतमन्यथा वा सर्वथापि गुर्वेव स्यादित्यर्थः ।

प्रकृत्यवयवानान्त्वित्यादेरन्या व्याख्याः—प्रकृतीनां स्वाम्यादीनां येत्ववयवाः यथा स्वामिनो राजायुवराज इति, अमात्यस्य वा मन्त्रि-

---

* 'स्वामिनि भक्तिः' इति पाठोऽत्र युक्तो भाति ।

† अत्र कदाचित् 'बहुभावादिरूपो गुणः' इति वा पाठो भवेत् ।

‡ अत्र 'द्वयोरिति' इति सूत्रप्रतीकं प्रतीयते ।

\+ अत्र हि बहुभावादिगुणानामितो विशेषः स्यात्' इति 'बहुभावादिगुणैरितो विशेषः स्यात्' इति वा पाठोऽर्थानुसारी भवेत् ।

§ बहुभावाद्यन्यतमवत्त्वं' इति वा पाठोऽत्र भवेत् ।

|| 'यदि स्यान्नाभिधेयकम्' इति पाठोऽत्र मूलानुसारी भाति ।

मन्त्रपरिवृढादयः, जनपदस्य वा कर्षकायुधीयप्राध्वादयः, दुर्गस्य वा धान्वनवनादयः, कोशस्य वा सारफल्गुकुप्यादयः, दण्डस्य वा मौलभृतादयः, मित्रस्य वा सहजकृत्रिमादयः, इत्येषां पौर्वापर्यलक्षणे विशेषे सत्यपि ततोऽपि बहुभावादि( भिः ? )गुण एव यानादिकार्यसिद्धिहेतुः स्यात् , तद्यथा जनपददुर्गयोर्मध्ये विजिगीषुरङ्गं *जनपदव्यसनं तदरेर्दुर्गव्यसनाद्गरीयः, तथापि तद् विजिगीषोर्यानसिद्धिहेतुस्तदा स्यात्। यदि जनपदानां बहुभावानुरागादिः स्यात्, यदि च दुर्गावयवानां तत्स्यादिति भावः।

अथोभयोरप्यरिविजिगीष्वोर्वा जनपदस्य व्यसनमेव यदि स्यात् तदा यानं सिद्धिहेतुर्वा नवेत्यत्राह--द्वयोस्त्वित्यादिना। अरिविजिगीष्वोर्वा द्वयोरपि जनपदव्यसने तुल्येपि यत्र बहुभावादिगुणो ऽस्ति तत्र यानादिकं कार्यकरम्। यत्र तु नास्ति तत्र तु† तथेति प्राप्नोति, पौर्वापर्याभावात् प्रयोजकस्य बहुभावादेः‡ सत्वाच्चेत्यत्राह–शेषप्रकृतीति। परस्य जनपदावयवानां बहुभावाद्यभावे विजिगीषोस्तद्भावाभावे च यानं सिद्धिकरं स्यादपि यदि परस्य जनपदव्यतिरिक्तप्रकृतीनामभिधेयकमभिधाय विषयीकृतं प्रकृतिसम्पत्त्वेन प्रागुक्तं जानपदे जात इत्यादिगुणयोगत्वलक्षणस्था+साद्गुण्यं न स्यात्। यदा पुनस्तत्साद्गुण्यमस्ति तत्र जनपदावयवानां बहुभावाद्यभावोऽप्यकिञ्चित्करः, विजिगीषोर्यानं तत्सिद्धये स्यात्, जनपदादिगुणत्वस्य गुणाभावरूपव्यसनाभाव§...........दिति भावः। शेषं पूर्ववदेव।

इति श्री वादिकविचूडामणिमहोपाध्याय श्रीमन्माधवयज्वमिश्रविरचितायां
नयचन्द्रिकायां कौटिलीयटीकायां व्यसनाधिकारिकं नाम
अष्टमे ऽधिकरणे प्रथमोऽध्यायः।

---

* 'विजिगीषोर्जनपदव्यसनं' इति पाठो ऽर्थानुगतत्वात्समीचीनो भाति।

† 'तत्र न तथेति' इति पाठोऽत्रार्थानुसारी भाति।

‡ अत्र 'बहुभावादेरसत्वा०' इत्याद्यर्थानुगतः पाठो भवेत्।

+ अत्र हि 'लक्षणस्थसाद्गुण्यं' इति 'लक्षणस्यसाद्गुण्यं' इति वा पाठो भवेत्।

§ अत्र कदाचित् 'व्यसनाभावस्य च सत्त्वादिति' इत्यानुपूर्वीकः पाठो भवेत्।

# ८ अधि., २ अध्या, १२८ प्रक.

## सू. राजराज्ययोर्व्यसनचिन्ता ।

तदेवं*..........द्विकानां मिथो व्यसनेषु गौरवादिकमुक्त्वेदानीं सप्तप्रकृतीरपि राजराज्यरूपेणैकं द्विकं कृत्वा प्रत्येकं तद्व्यसनावान्तरभेदानां गौरवादिकं वक्तुं सूत्रम्–राजराज्ययोर्व्यसनचिन्तेति । राजा अभिषिक्तक्षत्रियस्वामीति शेषः, प्रकृतिषट्कं राज्यं तयोर्व्यसनानां गौरवादि चिन्त्यत इत्यर्थः ।

[1]अत्र सौमित्रयोः† राजराज्यपदयोः प्रकृतिव्यतिरिक्तार्थवाचित्वभ्रमनिरासार्थमाह—राजा राज्यमिति । प्रकृतिसंक्षेप इति, संक्षेपः समासोक्तिः । पूर्वं स्वाम्यादीनां प्रकृतिवर्गं द्विकतयोपादाय व्यसनानां गौरवादिकमुक्तम्, इदानीं स्वामिप्रकृतिमेकतया शेषप्रकृतीः सर्वा अप्येकतया चोपादायावान्तरव्यसनचिन्ता क्रियत इत्याशयः ।

[2]तत्र राज्ञो राज्यव्यसननिमित्तव्यसनभेद‡..............गौरवे विमृशति—राज्ञ इत्यादि । आ(अ)भ्यन्तरो बाह्यश्चेति, + द्वौ राज्यकोपेन राज्ञो व्यसनरूपौ, तयोः कतरो गरीयानिति विमर्शार्थः ।

[3]निश्चयमाह—अहिभयादिति । आ(अ)भ्यन्तरो बाह्यात् पापीयान्, कुत इति चेत्, अहिभयात्, अहेरासन्नाद्भयात् यायादित्यर्थः। बाह्य इत्यरिजन्यः ।

[4]आभ्यन्तरस्यापि विशेषमाह—अन्तरमात्येति । अमात्या द्विविधाः, अन्तर्बाहिर्भेदात् । तत्र बहिरमात्या अन्तपालाः तत्कोपादन्तरमात्यानां कोपः पापीयानित्यर्थः ।

[5]तस्मादित्यादि । आन्तरस्य कोपस्य बाह्यादपि पापीयस्त्वात्तद्भयपरिहारसाधनभूतयोः कोशदण्डप्रकृत्योः शक्तिं विनियोगयोग्यतां स्वाधीनां कुर्यादित्यर्थः ।

---

* 'तदेवं स्वाम्यमात्यादिद्विकानां' इत्यादिपाठोऽत्र संभवति ।

† अत्र पुनः 'अत्रासौ भिन्नयोः राजराज्यपदयोः' इत्येवंभूतः पाठो भवेत् ।

‡ अत्र कदाचित् '०भेदयोर्लाघवगौरवे' इत्यानुपूर्वीकः पाठो भवेत् ।

+ अत्र 'बाह्यो वा'. इति डॉ. जौली. मूलसूत्रपाठः ।

[६]एवं राज्यव्यसनं तत्परिहारञ्चोक्त्वा राज्यस्य प्रकृतिसमुदायरूपस्य राजादीन् निमित्तान् व्यसनप्रकारान् व्यवस्थापयति—राजेत्यादि* । द्वौ राजानावस्येति तथा, विगतो राजाऽस्येति वैराज्यः । तयोराचार्योक्तमन्यतरगरीयस्त्वमाह—द्वैराज्येत्यादि† । अन्योन्ये अन्योन्यस्य पक्षौ तयोरेकस्यद्वेषोऽन्यस्यानुरागश्चेत्यर्थः ।

[८]निषेधति—नेति ।

[६]द्वैराज्यं हि पित्रा पुत्रेणापि वा द्वाभ्यां भ्रातृभ्यां वा स्यात् तदुभयमपि मिथो विरोधसम्भवात्‡, सम्भवत्यपि अमात्यैरेव निषेद्धुं शक्यत्वाच्च न व्यसनाय स्यादित्यर्थः ।

[१०] [११] [१२]वैराज्ये+त्विति । जीवतः परस्येत्यनादरे षष्ठी, जीवत एव परस्याच्छिद्य हठात् गृहीत्वा, नैतमेति§ क्रमागतं परस्यैतन्नान्ततो|| बुद्ध्या राज्यं दण्डतादिभिः कर्शयति निस्स्वं करोति वा अपवाहयति वा तं¶देशात् भ्रंशयित्वा पण्यं करोति वा विक्रीणाति वा, बलवतः स्वर्णादिकं गृहीत्वा सर्वस्वग्रह..................त्यजति वा स्वस्मिन्नवरत्वबुद्ध्येत्यर्थः ।

[३]राज्ये च व्यसनान्तरभेदं विमृशति—अन्ध इत्यादिना । अन्धोऽनभ्यस्तशास्त्रः । चलितशास्त्र इति, अन्य (था) भावात् (अ)बद्धशास्त्रः

[१४]तत्किञ्चनकारीति,✱ अविकारीव । दृढाभिनिवेशीति,वारितोऽपि

---

* इदं प्रतीकं डा. जौलीसम्पादितमूलपुस्तके नोपलभ्यते । अत्र कदाचित् 'द्वैराज्येत्यादि' इत्याकारकं प्रतीकं भवेत् । तदा षष्ठसूत्रस्यादिप्रतीकं तत्स्यात् ।

† अत्र 'द्वैराज्यमित्यादि' इति प्रतीकं साधु भवेत् । इदं हि सूत्रस्य मध्यप्रतीकं स्यात् ।

‡ अत्र 'मिथो विरोधासम्भवात्' इति पाठोऽर्थानुसारी भाति । न व्यसनाय स्यादित्यनेनान्वेति । अथ विरोधः सम्भवश्चेत्? तत्र द्वितीयं पक्षमाह—सम्भवत्यपीति । सम्भवतीति शत्रन्तस्य सप्तम्येकवचने रूपम्, विरोधे सम्भवत्यतीत्यर्थः ।

+ अत्र 'वैराज्यं तु' इति डा. जौली. मूलपाठः ।

§ अत्र 'नैतन्ममेति' इति मूलानुसारी युक्तः पाठो भाति ।

|| अत्र कदाचित् 'परस्यैतन्नममेतिबुद्ध्या' इत्याकारको युक्तः पाठो भवेत् ।

¶ अत्र 'तद्देशात्' इति युक्तः पाठो भाति, तस्माद्देशादित्यर्थः ।

✱ 'यत्किञ्चनकारीति' डॉ. जौली. मूलपुस्तके पाठः ।

निषिद्धकर्मापरित्यागी । परप्रणेय इति, अहितेऽपि परबुद्ध्या·········
·········अन्यतमत्वेन राज्यमुपहन्तीत्यर्थः ।

[१५]चलितशास्त्रस्तु यत्रैव विषये शास्त्रमतिक्रामति तत्र वारयितुं शक्य इत्याह–चलितेत्यादिना ।

[१६]एतन्निषेधति—नेति ।

[१७]सहायसम्पदेति, बुद्धिसहायानाममात्यादीनां प्राज्ञत्वादिगुणसम्पदेत्यर्थः । यत्रक्वचिदिति*, क्वचिदप्यभिनिवेशाभावात् हितेऽपि प्रवर्त्तयितुं शक्य इत्यर्थः ।

[१८]शास्त्रादन्यथा†निविष्टबुद्धिरिति, शास्त्रमूलभ्रमेणाहिते निविष्टबुद्धिरात्मनो राज्यस्य चोपकारः‡स्यात्, व्यावर्त्तयितुमशक्यत्वादित्यर्थः ।

[१९]विमर्शान्तरमाह—व्याधित इत्यादिना । नव इति, अचिराभिषिक्तः ।

[२०]व्याधिते राज्ञि स्वामात्यैरेव विशृङ्खलै राज्योपघातो वा क्रियेत, व्याधिना राज्यानर्होऽयमित्यादिसमुदायरूपेण राज्येनैव स्वयं हन्येत वेत्यर्थः ।

[२१]नवे तु न तथेत्याह—नवस्त्विति । स्वधर्मेण शास्त्रोक्तस्वधर्मानुष्ठानेन, अनुग्रहपरिहाराभ्यां स्वरकोशामभानमादेरन्वादानमित्याभ्यां वा, दानेन परार्ध (र्थ)वात्र द्रव्यत्यागेन वा मानेन सत्कारेण वा कर्मणा वार्त्तादिप्रवर्त्तनेन । अथवा एभिरुक्तैः कर्मभिरिति वार्थो ग्राह्यः ।

[२२]निषेधति–नेति

[२३]यथाप्रवृत्तमिति, यथापूर्वं प्रवृत्तिं(त्तं) राजप्रणिधिं राजव्यापार मावर्त्तयति ।

[२४]बलावर्जितमिति, बलेन विधेयीकृतम् । अनवग्रह इति, निष्प्रतिबन्धः ।

[२५]पदान्तरमाह—स (सा) मुत्थायकैरिति । सामवायिकैः परस्त्री-

---

* 'यत्र तत्र वा' इति डॉ. जौली. मूलपाठः ।

† अत्र 'शास्त्रादन्यथाभिनिविष्टबुद्धिः' इति डॉ. जौली. मूलपाठः ।

‡ अत्र हि 'राज्यस्य चोपघातकः स्यात्' इति पाठोऽर्थानुसारी भाति ।

कृतैः* तैः कृतं स्वराज्योपघातं सहेत वेत्यर्थः ।

[२६] पक्षान्तरमाह—प्रकृतिष्वित्यादि । अमात्यादिषु अजातस्नेहत्वात् परेषां सुकरोच्छेदो वा स्यादित्यर्थः ।

[२७] ननु कुष्ठादिमान् व्याधितो†ऽपि किं यथापूर्वं राजप्रणिधियोग्यतेत्यत्राह—व्याधिते विशेष इति ।

[२८] तत्रावाप‡रोगिणीत्याचार्यमतमेवेष्टमिति हृदयम् ।

[२९] नवेऽपि भेदद्वारा विमर्शमुत्थापयितुं भेदन्तावदाह—नवेपीति । विशेष इत्यनुषङ्गः । व्याधिते इत्यपेरर्थः ।

[३०] नवकृतमभिजातानभिजातभेदं क्रमाद्दौर्बल्यप्राबल्यभ्यां विशेषितं कृत्वा तत्रैव विमृशति—दुर्बल इत्यादिना । राजेति, पापवानिति शेषः। दुर्बलस्याभिजातत्वेनानभिजातस्य प्राबल्येन चोत्कर्षः, विपर्ययेणोभयोर्निकृष्ट+श्चेति संशयविशेषत्वादित्याशयः ।

[३१] तत्राचार्यमते निश्चयं तावदाह—दुर्बलस्येत्यादिना । दुर्बलस्य कुलीनस्योपजापं परप्रकृतयः कृच्छ्रेणाभ्युपगच्छन्ति । दौर्बल्यापेक्षा इति, दौर्बल्यं विरोधितयाऽऽलोच्येत्यर्थः ।

[३२] बलापेक्षा इति, बलमनुकूलमालोच्येत्यर्थः । सुखेनेति, उपनमन्तीत्येव ।

[३३] निषेधति—नेति ।

[३४] विपरीतपक्षं स्वमतमाह—दुर्बलमिति । स्वयमुपजपतीति,§ वयमागच्छेम त्वया रक्ष्या इति स्वयमेव प्रार्थयन्त इत्यर्थः ।

[३५] तत्र हेतुमाह—जात्य इति‖। जात्या राजान्विजनमैश्वर्यं प्रकृ......

---

* अत्र 'परतन्त्रीकृतैः' इति पाठो युक्त इवाभाति ।

† यद्यत्र 'कुष्ठादिमति व्याधितेऽपि' इति सप्तम्यन्तः पाठो भवेत्, तदा साधुः ।

‡ 'तत्र पापरोगिणि' इति पाठोऽत्र समीचीनो भाति । कुष्ठादिमति व्याधिते विशेषो नवादाश इत्यर्थः ।

+ अत्र 'निकृष्टिश्च' इति 'निकर्षश्च' इति वा पाठोऽर्थानुसारी भाति ।

§ 'स्वयमुपनमन्ति' इति डा. जौली. मूलपाठः । युक्तश्चैष पाठः । यथाश्रुतपाठोऽपि 'उपजपन्ति' इति स्यात् ।

‖ अत्र 'जात्यम्' इति मूलपुस्तकस्थितो युक्तः पाठः ।

......रैश्वर्ययोग्यता नानुवर्त्त.................बलवतोऽप्यजात्यस्योपजापमनात्यवगच्छतीत्यर्थः ।

[37] एवं हीति*। यत्रानुरागस्तत्र सर्वगुणयोगित्वं प्रतिभाति । तथा चा†जात्ये चानुरागाभावात् बलवत्त्वमपि न गुणतयादीयते इत्यर्थः ।

[38] एवं राज्यस्य राजनिमित्तं व्यसनमप्यभेदं निरूप्य परचक्रनिमित्तं व्यसनं निरूपयितुं अति‡-प्रयासवधादित्यादिना । सस्यविनाश (शो) मुष्टिवधः बीजावापाभावादपि पापीयानिति, कुत इत्याह-प्रयासवधात् पापोदकसेचनरक्षणादिव्यापारस्य वधात् विफलीभावादित्यर्थः । दैवनिमित्तव्यसनभेदमाह-निराजीवत्वादित्यादि, पापीयसी+।

[39] बलाबलमुक्तं किमर्थमित्यत्राह-याने स्थाने चेति, शत्रुव्यसनाद् विजिगीषोर्व्यसनलाघवं याने कारणं तद्गौरवं स्थाने इत्यर्थः ।

अत्र प्रकृतिव्यसनवर्ग इत्यनेन सर्वप्रकृतिसाधारणतया व्यसनवर्गाणां गौरवादिचिन्ताकृता । राजराज्ययोर्व्यसनचिन्तेत्यनेन स्वाम्यमात्यजनपददुर्गाणाम् । वक्ष्यमाणैश्च पुरुषव्यसनवर्गः कोशसङ्गादिव्यसनवर्गः बलव्यसनवर्गः मित्रव्यसनवर्गः इत्येभिः कोशदण्डमित्राणामिति । एषु च राजराज्ययोः व्यसनचिन्तायां गुणप्रातिलोम्यगुणाभावरूपो व्यसनप्रकारोऽनुसन्धेयः । पुरुषव्यसनवर्गे प्रदोषः प्रसङ्गरूपः । बलमित्रव्यसनवर्गयोः पीडनानि (दि) रूपश्च प्रायशो यथायथं प्रतिव (स) न्धेय इति ।

इति श्री वादिक्ष्वविचूडामणिमहोपाध्याय श्रीमन्माधवयज्वमिश्रविरचितायां

नयचन्द्रिकायां कौटिलीयटीकायां व्यसनाधिकारिकं नाम

अष्टमे ऽधिकरणे द्वितीयोऽध्यायः ।



---

* डा. जौली. सम्पादितमूलपुस्तके प्रतीकमिदंनात्रक्वापिदृश्यते । व्याख्याचेयं सप्तत्रिंशत्तमसूत्रस्यार्थवशाद्भाति, तथैवाऽस्माभिरङ्कनिर्देशो व्यधायि ।

† 'तथाचाजात्येऽनुरागाभावात्' इति पाठोऽत्रार्थानुगतत्वाद्युज्यते ।

‡ अत्र कदाचित् 'निरूपयितुमाह' इति पाठो भवेत् ।

+ अवृष्टिरतिवृष्टितः पापीयसीत्यर्थः ।

# ८ अधि., ३ अध्या, १२६ प्रक.

## सू. पुरुषव्यसनवर्गः ।

एवं व्यसनानां स्वाम्याद्याश्रयभेदेन गौरवादिकं निरूप्येदानीं कोपादिनिमित्तभेदेन तन्निरूपणार्थं सूत्रम्—पुरुषव्यसनवर्ग इति । पुरुषाणां सर्वेषां यानि व्यसनानि तेषां वर्गे एकैककारणतया समुदायः कोपजस्त्रिवर्गः कामजश्चतुर्वर्ग इति स इहोच्यत इत्यर्थः ।

[1]तत्र पुरुषव्यसनानां कारणं तावदाह—अविद्याविनय इत्यादिना । विद्यासु यो विनयः शिक्षा तदभावः पुरुषव्यसनानां हेतुरित्यर्थः ।

[2]आन्वीक्षिकीत्यादिविद्यासु शिक्षाविरहः कथं व्यसनानां हेतुः स्यादित्यत्राह—अविनीतो हीति । त्रिवर्गचतुर्वर्गादिव्यसनरूपान्दोषाननर्थावहान्न बुध्यसे ( ते ), शास्त्ररूपचक्षुरभावः, तद्विनयाभावादित्यर्थः । कोपज इत्यादि सङ्कलय्य सप्तदोषा इति भावः ।

[3][4][5]तानुपदिशति—कोपज इत्यादिना ।

[6]तयोः कोपजो*गरीयानित्याह—कोपज इति । कामजयोरिति ।

†कोपजकामजयोर्हेतुमाह—सर्वत्र हीति । कोप‡कामस्य हि स्त्र्यादिविषयनियमोऽस्ति, कोपस्तु सर्वविषयः; ततश्च तज्जन्यव्यस-

---

* अस्य षष्ठसूत्रस्यात्र-व्याख्यायां 'कोपज इति' इत्याकारकं प्रतीकमस्ति । परमेतत्प्रतीकमत्र मूलपुस्तके सर्वथापि नोपलभ्यते । तत्र केवलं 'तयोःकोपोगरीयात्' इति सूत्रपाठो वर्त्तते । एवमस्य सूत्रस्यार्थानुगामिनी व्याख्या 'तयोः कोपो गरीयानित्याह—तयोःकोप इति । तयोः कोपकामयोरित्यर्थः' इत्यानुपूर्वीका भवेत् । तथा च सति प्रतीकानन्तरं 'कामजयोरिति' धृतं पदमपि कथञ्चित् सार्थकं स्यात् । यतोह्यत्र कोपकामयोर्लाघवगौरवचिन्ता क्रियते, न तु कोपजकामजयोः । अत एव सूत्रकारः पञ्चविंशतितमसूत्रे प्रकरणमेतदुपसंहरन् 'तस्मात्कोपोगरीयान्' इत्येवाह, नतु कोपजो गरीयानिति । ततः परन्तु कोपजादीनां मिथो लाघवगौरवचिन्ता क्रियतएवेति सर्वं सुस्थम् ।

† एवमत्रापि कोपकामयोर्मध्ये कोपगरीयस्त्वे हेतुमाह—' इत्याकारिका सूत्रपातनिका भवेत् ।

‡ अत्र 'कामस्य ही' त्यादिपाठ एवार्थानुसारी भाति । कोप इतिपदं लेखकप्रमादादत्रापतितमिति प्रतीयते ।

नस्यापि सार्वत्रिकत्वमित्यादौ* गौरवमित्यर्थः ।

[६] क्षय†निमित्तमिति, कोशदण्डयोः क्षयं निमित्तीकृत्यारिभिर्हताः श्रूयन्ते, शरीरक्षयं निमित्तीकृत्य च व्याधिभिरित्यर्थः ।

[१०] एतद्द्रोणाचार्यो दूषयतीत्याह--नेति भारद्वाज इति । कोपकामावुभावपि न व्यसनहेतू इत्यर्थः ।

[११] आचार इति‡, अनुष्ठेयरूपः । अनुष्ठेयत्वनिमित्तं तत्फलमाह—वैरेत्यादि, वैरस्य यात+ निर्यातनं प्रतिकरणम् । अवज्ञा §वध इति, परिभवनिर्मोचनम् । भीतमनुष्यतेति, सर्वेऽप्येतदनिष्टकरणाद् बिभ्यतीत्यर्थः ।

[१२] हेत्वन्तरमप्याह—नित्यश्चेति । एते च सत्पुरुषगुणा एवेति कथं दोषत्वं, पापेषु च पुरुषेषु कोपोऽवश्यंभावीत्याह—नित्यश्चेति ||। कोपेन नित्यसंयोगोऽपि महाफल इत्यर्थः । कामस्याप्यदोषहेतुत्वमाह—काम इत्यादि । सिद्धिलाभ इति, सिद्धिः पुरुषार्थः सुखमिति यावत्; तयाभरूपः सान्त्वम्; त्यागशीलतेति, वदान्यता; संप्रियभाव इति, सौम्यरूपता ।

[१३] कामोप(पि)नित्ययोगः, त्यागशीलया(ता)कृतकर्मणामफलदानाय स्यादित्याह--नित्यश्चेति ।

[१४] भारद्वाजमतं निषेधति—नेतीति ।

---

* अत्र यदि 'आदौ' इत्यस्यस्थाने 'अस्य' इति पाठो भवेत् तदा समीचीनम् ।

† डा. जौली. मूलपुस्तके 'क्षयव्यसननिमित्तम्' इत्यानुपूर्वीकः पाठो वर्त्तते ।

‡ डा. जौली. मूलपुस्तके 'सत्पुरुषाचारः' इति मूलसूत्रपाठो वर्त्तते । समस्तपदावयवभूतं 'आचार' इत्यात्मकमेव पदं प्रतीकत्वेन किमिति धृतवान् व्याख्याकार इत्यस्य प्रयोजनं न पश्यामः । सम्भाव्यते कदाचित्तदवलोकितपुस्तक एतावानेव सूत्रपाठः स्यात् ।

+ अत्र 'वैरस्य यन्निर्यातनं' इति पाठोऽर्थानुसारी भाति । तथासति व्याख्याकृन्मतेन 'वैरनिर्यातनं' इत्यात्मको मूलसूत्रपाठः स्यात् । डा. जौली. मूलपुस्तके तु 'वैरायतनं' इत्येव पाठो दृश्यते ।

§ 'अवज्ञातवधः' इति डा. जौली. मूलपाठः ।

|| नित्यश्चेति' प्रतीकस्य पातनिकाद्वयमप्यस्माकमादर्शपुस्तके दृश्यते, तथैवाऽस्माभिरपि लिपिकृतम् ।

[१५]कोपकामयोर्द्वयोरपि दोषप्रदर्शनेन हेयत्वमाह—द्वेष्यती(ते)त्यादिना। द्वेष्यता सर्वैर्निन्द्यता। शत्रुवेदनं शत्रुलाभः। दुःखासङ्गश्चेति, दुःखेनासङ्गः अविरहः।

[१६]कामस्यापि दोषानाह—परिभव इत्यादि। परिभव इति, स्वप्रभुत्वविरुद्धेऽपि मार्गे प्रवृत्त्या परिभूयत इत्यर्थः। द्रव्यनाश इति, पूर्वसंश्चितं सर्वस्वं(?)दत्ते अपूर्वार्जने च न शक्नुयादित्यर्थः। पाटच्चरेत्यादि, पाटच्चरा मद्यपाः, द्यूतकरा* अक्षधूर्त्ताः, लुब्धको व्याधः मृगयासाहाय्यार्थमिति भावः, गायना† रक्तकण्ठाः, वादका वीणादिजीविनः, एभिरर्थै(र्थ्यै)रर्थादुपेतैः‡ संयोगरूपश्चेति।

[१७]एवं कोपकामयोर्दोषानुक्त्वा तेषामेव दोषवर्गाणां परस्परतो गौरवादिनिरूपणद्वारा कोपकामयोः कोपस्य कामाद् गरीयस्त्वमाह—तयोरित्यादिना। तयोः कोपकामयोः कामकार्यात् परिभवात् कोपकार्यभूता द्वेष्यता गरीयसी।

[१८]अत्र हेतुमाह—परिभूत इत्यादि। अवग्राह्यत+ इति विधेयीक्रियते।

[१९]समुच्छिद्य§ इति। स्वराष्ट्रात्प्रच्याव(व्य)इत्यर्थः।

[२०]कामजत्रिवर्गे द्वितीयाद् द्रव्यनाशात् कोपजे द्वितीयं शत्रुवेदनं गरीय इत्याह—द्रव्येत्यादि।

[२१]हेतुमाह—द्रव्यनाश इति।

[२३]कामजवर्गतृतीयात् कोपजवर्गस्य तृतीय||स्त्वमाह—अनर्थेत्यादिना।

---

* अत्र 'द्यूतकार' इति डा. जौली. मूलपाठः।

† 'गायना' इत्यस्यस्थाने 'गायका' इति डा. जौली. मूलपाठः। रक्तकण्ठा इति, रागेण गीताद्युच्चारणविधिना युक्तःकण्ठो येषां ते इत्यर्थः।

‡ अत्र '०श्चानर्थ्यैः' इति डा. जौली. मूलपाठो युक्तः।

+ 'अपगृह्यते' इति डा. जौली. मूलपाठः।

§ 'समुच्छिद्यते' इति डा. जौली. मूलपाठः। तथासति व्याख्यायामपि 'प्रच्या०यत इत्यर्थः' इति पाठो भवेत्।

|| अत्र 'तृतीयस्य गरीयस्त्वमाह' इति पाठो युक्तो भाति।

[२४]अत्रापि हेतुमाह—अनर्थेत्यादि । अनर्थैः संयोगो मुहूर्त्तमपि प्रीतिं कुर्यात्, अन्ततो दुःखहेतुत्वेपीति भावः । दीर्घक्लेशकर इति, कदाचिदपि न प्रीतिक*........उक्तः ।

[२५]कामात्कोपगरीयस्त्वमुपसंहरति—तस्मादिति ।

[२६] [२७]एवं कोपकामयोस्तत्कार्यद्वारा गौरवादिकं निरूप्येदानीं कोपजत्रिवर्गस्यैव अन्योन्यतो गौरवादिकं निरूपयन् कोपजत्रिवर्गं तावदाह—†वाक्पारुष्यार्थदूषणयोरिति ।

[२८]विशालाक्ष एव स्वपक्षे हेतुमाह—परुषमित्यादि । ‡तेज...... स्वति, यथोक्तम्—'विधिक्षेपान्यसहनं तेजः प्राणात्ययेष्वपी'ति (          ) । प्रत्यारोहतीति, तदुक्तातिशायिभिः पु(प)रुषैस्तमाक्रामतीत्यर्थः ।

[२९]हेत्वन्तरमप्याह—दुरुक्तेति । दुरुक्तं हृदयस्थं शल्यवत्तेजसा .........सन्दीपनं प्रज्वलनहेतुर्भवति । इन्द्रियोपतापि चेति, मनस्तापकमित्यर्थः ।

[३०]निषेधति—नेति ।

[३१]हेतुमाह—अर्थपूजेति । अपहन्तीति, प्रशमयति ।

[३२]वृत्तिविलोप इति । अर्थपारुष्यं हि जीवनविलोपः, अतः सान्त्वादिभिरशक्यप्रशमन इत्यर्थः । अर्थपारुष्यप्रकारमाह—अदानमित्यादि,(क ?)अदानं कर्मण्यनुष्ठितेपि वेतनादेरनर्पणम् । आदानम्-

---

* अत्र कदाचित् 'प्रीतिकरउक्तः' इति पाठो भवेत् । अथवा 'प्रीतिकरः' इति यावदेव चतुर्विंशतितमसूत्रव्याख्यासमाप्तिः स्यात्, उक्त इति पदं तु पञ्चविंशतितमसूत्रावतरणिकायां योज्यम्, तथा चेत्थंपाठः स्यात्—'उक्तकामात्कोपगरीयस्त्व' मिति ।

† 'वाक्पारुष्यार्थदूषणयोरिति' प्रतीकं सप्तविंशतितमसूत्रस्य, 'एवंकोपे' त्यारभ्य 'त्रिवर्गं तावदाहे' त्यन्ता पातनिका पुनः षड्विंशतितमसूत्रस्यैव सम्भवति । तथा चैतत्पातनिकानन्तरं तत्प्रतीकनिर्देशोऽसङ्गतः । एवं हि तदर्थसङ्गमनाय वक्ष्यमाणानुपूर्वीकः पाठो व्याख्यायां कल्पनीयः, तथाहि—'एवंकोप...........त्रिवर्गं तावदाह—वाक्पारुष्य मित्यादि । (२७) विशालाक्षमतेनाद्ययोर्लाघवगौरवे तावदाह—वाक्पारुष्यार्थदूषणयो रिति ।' इति ।

‡ अत्र कदाचित् 'तेजस्वीतेजसेति' इत्यानुपूर्वीकः पाठो भवेत् ।

(अ)सत्यपि दोषे दण्डादितयार्थस्य ग्रहणम् । विनाशः–शरीरपीडनादिः । परित्यागः–रक्ष्यतया स्थापितस्य रक्षणाकरणम् । एवं चतुर्विधमर्थदूषणमित्यर्थः ।

[३३]अर्थदूषणेत्यादि । दण्डतः पारुष्यमपराधादिकं(के)दण्डप्रहरणम् । पाराशराः पराशरशिष्याः ।

[३४]शरीरपीडनादप्यर्थदूषणं गरीयः, अर्थस्य सर्वतः प्राधान्यादित्याह—अर्थमूला*हीति । त्रिवर्गे हीतराभ्यां प्रधानमर्थ एवातस्तद्दूषणं पुरुषार्थदूषकत्वाच्छरीरदण्डादपि पापीयानित्यर्थः ।

[३५](न)निरूपणापेक्षमर्थस्य प्राधान्यमपि तु लोकव्यवहारोऽपि तदनुगुण एवेत्याह—तत्प्रतिबन्धश्चेति † । अर्थाधीना एव सर्वव्यवहारा इत्यर्थः ।

[३६]तस्येत्यर्थस्य ।

[३७]निषेधति—नेति ।

[३८]युक्तिमाह—सुमहतापीति । अर्थेनेति, फलभूतेनेति भावः । शरीरविनाशमिच्छेदिति, साधनतश्चेति शेषात्, ततश्चार्थपारुष्या द्दण्डपारुष्यं गरीय इत्यर्थः ।

[३९]गौरवहेतुत्वेन तस्यार्थप्रतीकार्यत्वमप्याह—दण्डपारुष्याच्चेति । तमेवेति, दण्डपारुष्यविषयभूतं तेभ्य इत्यर्थः । अथवा तद्बन्धुभ्यः ।

[४०]उक्तप्रकारः कोपजस्त्रिवर्ग इत्याह—इति कोपज इति । त्रिभिः संमितो वर्गस्त्रिवर्ग इति ।

[४१]कामजं [४२]चतुर्वर्गमुपक्रामति–कामजस्त्विति । वक्ष्यत इति वाक्यशेषः । चतुर्वर्ग इत्यागामिना सम्बन्धः ।

[४३]कामजचतुर्वर्गस्यावयवानां गौरवादि विचिन्तयन् मृगयाद्यूतयोः गौरवादीन्निरूपयति–तस्य मृगयेत्यादि । तस्येति, चतुर्वर्गस्यावयवभूतयोर्मृगयाद्यूतयोरित्यर्थः । पिशुनः नारदः ।

[४४]हेतुमाह—स्तेनेत्यादि । व्याकुलदुष्टगजादय ‡, स्तेनादिषु यत्प्र-

---

* 'अर्थमूलौ' इति डा. जौली. मूलपाठः । तत्र 'हि' नास्तीत्यर्थः । संम्भाव्यते कदाचित् प्रतीकेप्यत्र 'अर्थमूलाविति' इत्यानुपूर्वीकः पाठो भवेत् ।

† अत्र 'अर्थप्रतिबन्धश्च' इति डा. जौली. मूलपाठः ।

‡ अत्र 'व्याला दुष्टगजादयः' इति पाठोऽर्थानुसारी भाति ।

स्खलनं अनवधानं ततो भयं, दिने......*मोहः दिग्भ्रमणःपतेच, क्षुत्पिपासे चेति; तस्यां मृगयायां प्राणाबाधः सम्भवीत्यर्थः।

[४५]द्यूतेत्वक्षविदो जयो दु(ह)ष्ट एव जयत्सेनो†...... देरतो मृगया पापीयसीत्यर्थः।

[४६]एतत्पिशुनमतं निषेधति—नेति।

[४७]द्यूते जय एव‡......... न नियमः, एकास्मि ते+........... तर्यन्यस्य पराजयनियमात्, यथा नलयुधिष्ठिरयोः पराजितत्वामित्याह—तयोरपीति।

[४८]मृगयावत् द्यूतेऽपि दोषा बहव एवेत्याह—तदेवं हीत्यादिना §। यदेव............तदेव द्रव्यं सर्वेषामामिषं भवति न तु स्वयमेवोपभोग्यम्। पराजितस्य विजयिना सह वैरं दृढं स्यादित्याह—वैरानुबन्धश्चेति॥।

[४९]सतोऽर्थस्येति। ततः कुलक्रमाद्या(दा)गततया विशुद्धस्यार्थस्य विप्रतिपत्तिर्विरुद्धं प्रतिपादनं आपादितादिषु¶ व्ययः। असतस्त्विति✳, अशुद्धागतेस्त्वार्जनं स्वीकरणम्। अप्रतिभुक्तनाश इति, द्यूते जितस्य द्यूत एव पुनः प्रहारादिति भावः। अत्र शत्रु✠धारणादिभिः व्याधिलाभश्च स्यादित्याह—मूत्रेत्यादि।

[५०]यथा मृगयायां दोषा द्यूतेऽपि, किन्तु मृगयायां यथा गुणा अपि सन्ति न तथा द्यूत इति विशेष इत्याह—मृगयायान्त्वित्या-

---

* अत्र कदाचित् 'दिने दिङ्मोहः दिग्भ्रमः' इति पाठो भवेत्।

† अत्रापि 'जयत्सेनदुर्योधनादेः' इति पाठः कदाचित्स्यात्।

‡ कदाचिदत्र '०एव भवेदिति न नियमः' इत्यानुपूर्वीकः पाठो भवेत्।

+ 'एकस्मिन्नेव पक्षे यदा जयः तदान्यस्य पराजयनियमात्' इत्यानुपूर्वीकः कदाचिदत्र पाठः स्यात्।

§ डा. जौली. मूलपुस्तके 'तदेव' इत्येतावानेव पाठः।

|| 'वैरबन्धश्च' इति डा. जौली. मूलपाठः।

¶ अत्र 'आपादित' शब्दस्य कश्चित्संगतोऽर्थो न प्रतीयते। कदाचिदत्र 'आपद्द्यूतादिषु' इति पाठो भवेत्।

✳ 'असतश्च' इति डा. जौली. मूलपाठः।

✠ अत्र 'मूत्रधारणादिभिः' इत्यादिपाठोऽर्थानुसारी युज्यते।

दिना। व्यायाम इत्यायाससहिष्णुत्वम्, श्लेष्मादिनाशश्च श्लेष्मा(ष्म)-पित्त(त्त) दोषभेदौ मेदसो मांसोपचयस्य नाशः स(प्र)स्वेदनाशः स्वेदानुत्पादः । चरस्थिरयो*श्च देहयोर्लक्षीकरणेऽभ्यासः मृगाणां कोपभयस्थानेषु भावज्ञानम् । अनित्ययानञ्चेति, प्रावृडादिषु न मृगया क्रियत इति तस्या न व्यसनत्वमपीति भावः।

[५१] एवं द्यूतस्य मृगयातो गरीयस्त्वमुक्त्वा तस्यैव स्त्रीव्यसनात् गौरवादिकं चिन्तयति। (तत्र) भीष्ममतं तावदाह—······नेति† ।

[५२] हेतुमाह—सातत्येनेति । निशि प्रदीप इति, दीव्यतीत्य(त्ये)न्वयः अस्य स्वरसो(से)न लोकसहकारिविरहेपीत्यर्थः। मातरि प्रेतायामिति‡, अस्य स्वयोग्यताविरहेपीत्यर्थः।

[५३] दोषान्तरमाह—कृच्छ्रे वेति+। कार्यसङ्कटे कथं कर्त्तव्यमिति पृष्ट इत्यर्थः। अनेन कार्यविरोध उक्तः।

[५४] स्त्रीव्यसनेपि सर्वं तुल्यमित्याशङ्कां निषेधति—स्त्रीव्यसने§ त्विति। प्रतिकर्म-प्रसाधनम्, एतद्भूमिगतस्य प्रश्नप्रतिवचने सम्भवत इत्यर्थः।

[५५] स्त्रीव्यसनादात्यन्तिकात् स्त्रीद्वारा विवर्त्तनमपि शक्यमित्याह—शक्या चेत्यादि ।

[५६] स्त्रिया तर्हि तन्नियोजनाशक्यत्वेप्याह—उपांशुदण्डेनेति|| । अमात्यादिकारितेन उपांशुदण्डेन वा, रसदानादि जनितव्याधिना वा, त्रिवद्यय्यावर्त्तना¶ शक्यावस्थावणा च, व्यावर्त्तनं नाशनमुपां-

---

* डा. जौलीसम्पादितमूलपुस्तके 'चले स्थिते च' इति पाठः।

† 'नेति' इति प्रतीकं मूलसूत्रे क्वापि न दृश्यते । सम्भाव्यते कदाचिदत्र मूलसूत्रानुसारि 'द्यूतेति' इति प्रतीकं भवेत् ।

‡ अत्र 'मातरि मृतायां' इति डा. जौली. मूलपाठः।

+ अत्र 'कृच्छ्रे च' इति डा. जौली मूलपाठः।

§ 'स्त्रीव्यसनेषु तु' इति बहुवचनान्तो डा. जौली. मूलपाठः।

|| डा. जौलीसम्पादितमूलपुस्तकानुसारन्त्विदं प्रतीकं पञ्चपञ्चाशत्तमसूत्रस्य। परं व्याख्यानुरोधेन प्रतीकमिदं षट्पञ्चाशत्तमसूत्रस्यैव सम्भवतीत्यस्माभिरत्र निर्दिष्टम्। पूर्वापरपर्यालोचनया स्वारस्यमप्यत्रैवास्य प्रतीमः।

¶ अत्र 'अवश्यव्यावर्त्तना' इति पाठोऽर्थानुसारी भाति ।

शुदण्डेन, अप(व)स्रावणमन्यत्र नयनं व्याधिनेति भेदो द्यूतात्।

[५८] स्त्रीव्यसनमिति, प्रत्यादेयरहितमित्यर्थः। अत्रैव दोषान्तराण्यप्याह-(अ)दर्शनमित्यादि, अन्तःपुरनित्यत्वादमात्यादीनां अनालोकनमेको दोषः। कार्यनिर्वेद इति, मन्त्र्यादीनां कार्यहानिकृतोऽन्तस्ताप इत्यर्थः। कालातिपातनादिति, यथाकालं साधनाननुष्ठानात्, फलभूतयोरर्थतन्त्रदौर्बल्य इ(मि)ति सिद्धिदतत्तन्त्रदौर्बल्य इ(मि)ति* म(त)न्त्रं स्वमण्डलं तत्र दौर्बल्यमपचयम्(यः)। पानानुबन्धश्चेति, क्रीडायास्तु (स्त) ना(न्ना)न्तरीयकत्वादिति भावः।

[५९] वातव्याधिरिति, उद्धवाख्यः।

[६०] पानादपि स्त्रीव्यसनगरीयस्त्वे हेतुमाह—स्त्रीषु हीति। बाली† ............कारित्वम्। निशान्तप्रणिधाविति, विनयाधिकारिके निशान्तप्रणिधिसंज्ञे अध्याये व्याख्यातम्। विषमिश्रलाजदानतीक्ष्णाधारादर्शादिभिः भर्तृघातुकत्वं बुद्धिपूर्वकमेव वेत्यर्थः।

[६१] पाने तु प्रायशो गुणा अपि बहव इत्याह—पाने त्वित्यादिना। शब्दादीनामिति, पानेन शोकाद्यनाविलमनस्कतया यथावदुपभोगः स्यादिति भावः। कर्मश्रमवधश्चेति, अस्त्रशिक्षाद्यायासक्लेशशमश्चेत्यर्थः।

[६२] पानात् स्त्रीव्यसनगरीयस्त्वं निषेधति—नेति कौटिल्य इति।

[६३] स्त्रीव्यसन इत्यादि। स्त्रीव्यसनं तावत् विषयभेदात् त्रेधा—विहित‡......................विहिताप्रतिषिद्धविषय इति। तत्राद्यं श्रेयो (?) हेतुरित्याह-स्त्रीव्यसने भवतीत्यादि। अन्तर्दारेष्विति, कुलवधूषु प्रसक्तस्यापत्योत्पत्तिरात्मरक्षणञ्च स्याताम्, तासां पतिव्रतात्वेन रक्षितत्वेन च तदाचरणसम्भवादिति भावः। तृतीयेत्वाह—विपर्यय इति। बाह्येष्वपीति, साधारण्यादिषु विपर्ययः नापत्योत्पत्तिः नाप्यात्मरक्षणमित्यर्थः। द्वितीयेप्याह—अगम्येष्विति, सर्वोच्छित्तिरिति, नापत्योत्पत्यात्मरक्षण(णा)भावमात्रमगम्यविषये, अपि तु प्राणपर्यन्तस्य श्रेयसो नाशः स्यादित्यर्थः।

---

* 'फलभूतयो' रित्यारभ्य 'दौर्बल्य इती' त्यन्तो ग्रन्थोऽस्फुटार्थ इवाभाति।

† अत्र कदाचित् 'बालिशयमविचार्य कारित्वम्' इत्यादिपाठो भवेत्।

‡ सम्भाव्यते खल्वत्र 'विहितविषयो ऽविहितप्रतिषिद्धविषयोऽविहिताप्रतिषिद्धविषयः' इत्यानुपूर्वीकः कदाचित्पाठो भवेत्।

[९४] एवं स्त्रीव्यसने गुणदोषावुभावपि व्यवस्थाप्य तत्रत्यौ दोषप्रकारौ द्वावपि पाने स्त इत्याह—तदुभयमिति ।

[९५] कथमित्यत्राह—पानसम्पदित्यादि । पानसम्पत् पानकार्यपौष्कल्यं तत् संज्ञानाशादिरूपमिति यतः अतः पाने दोषगौरवमिति वाक्यार्थः । संज्ञानाश इति, प्रवृत्तिनिवृत्तिहेतुबुद्धिः संज्ञा तन्नाशः । अनुन्मत्तस्योन्मत्तत्वमिति, उन्मादाख्यव्याधिरहितस्यापि स्खलितचित्तत्वमित्यर्थः । अप्रेतस्य प्रेतभाव* इति, जीवत एव प्रेतकल्पत्वम् । कौपीनदर्शनमिति, कूपे प्रक्षिप्य निक्षेप्तव्यमङ्गकौपीनं गुह्यं तत्प्रदर्शनमसंवरणमित्यर्थः । श्रुतेत्यादि, श्रुतं शास्त्रशिक्षा, प्रज्ञा श्रुतजन्यबुद्धिः, प्राणो जीवनहेतुर्वायुः, वित्तं कोशो, मित्रं बन्धुः, एषामहानि†रेष्वपि ममकाराभावात् तैस्त्यागः, अनर्थै(र्थ्यै)र्गायनादिभिरपरित्यागः । तन्त्रीगीतादि‡नैपुण्येषु चेति, वीणावंशवादनादिषु कौशलेष्वतिसक्तिरित्यर्थः । एवं कामजचतुर्वर्गस्य क्रमानन्तर्येण द्विकमादायान्योन्यतागरीयस्त्वं निरूपितम् ।

[९६] इदानीं सर्वनिकृष्टयोर्द्वयोर्व्यसनयोर्मतभेदेनोभयोरपि गरीयस्त्वमित्याह—द्यूतमद्ययोरित्यादिना । एकेषामिति, आचार्याणां मतमिति शेषः । हेतुमाह—पणनिमित्तो हीति, पणः पणनीयं द्रव्यं निमित्तं यस्य स तथा पणितद्रव्यलाभार्थो जयः तद्धानार्थः परायाव..........।

[९७] .................को यदि चेतनेष्वचेतनेषु वा, पक्षद्वैधेन पक्षप्रतिपक्षा(क्ष)भावेन जितमस्मदीयेनेति कलहोत्थापनात् प्रकृतिकोपः स्यात् ।

[९८] एवं सवि+...सङ्घधर्मतुल्ययोगक्षेमत्वमाचरनात्§ सङ्घधर्मिणां राजकुलादीनां विशेषतः परस्परैकमत्या(त्य)पेक्षाणां द्यूत॥......त्तो भेदो मिथो वैमत्यं स्यात् ।

---

* अत्र 'प्रेतत्वं' इति डा. जौली. मूलपाठः ।

† अत्र 'एषां हानि०' इति पाठोऽर्थानुसारी प्रतीयते ।

‡ डा. जौली सम्पादितमूलपुस्तकेत्वत्र 'आदि' इति पदं नास्ति ।

+ अत्र कदाचित् 'सविशेषसङ्घ' इत्यादिपाठः स्यात् ।

§ '०माचरताम्' इत्यादिपाठोऽर्थानुसारी युज्यते ।

॥ अत्र 'द्यूतनिमित्तो' इति पाठः सम्भाव्यते ।

*[६६] भेदनिमित्तश्च विनाशः स्यादिति । एवं द्यूतगौरवौ...... मतमुक्त्वा मत्तव्यसनगौरवादिमाह—अन्येषामित्यादि† । अत्र मतमिति शेषः । असत्प्रग्रह इति‡, असन्तो ऽनर्थ्याः प्रगृह्यन्ते पूज्यन्ते ऽस्मिन्निति मद्यमित्यर्थः । सोऽयं सर्वव्यसनानां पापिष्ठतमः तत्र दौर्बल्यात्पापेनासत्प्रग्रहद्वारा तन्त्रस्यापि सर्वस्य दौर्बल्यादपचयोत्पत्तेः ।

सजीवनिर्जीवद्यूतद्वारा पक्षप्रतिपक्षभेदेन प्रकृतीनां कोपनात् सङ्घानां सङ्घकर्मिणाञ्च भेदनानेकपुरुषनाशकत्वात् द्यूतव्यसनं गरीय इत्येकेषां मतम् ।

अन्येषान्तु मद्यव्यसनं गरीयः, असतां गायनादीनां प्रग्रहं पूजनम्, सत्परित्यागञ्च द्वारीकृत्य तन्त्रस्य सर्वस्यापि स्वमण्डलस्य दौर्बल्यादपचयजननादिति समुदायार्थः ।

[७०]अध्यायार्थसारमाह—असतामित्यादिना । असतः प्रग्रहः इति, चतुर्वर्गस्य दोषसारं सदवग्रह इति त्रिवर्गस्य, तेनासत्प्रग्रहसदवग्रहरूपं कामकोपयुगलमत्यन्तं सर्वात्मना व्यसनमेवेष्टः( ष्टम् ),न केनचिदपिरूपेणाव्यसनत्वमित्यर्थः । व्यसनत्वञ्च तत्कारणत्वेन, घृतस्यायुष्यवदिति ग्राह्यम् । दोषबाहुल्यादिति, बहुदोषहेतुत्वादित्यर्थः । बहुदोषत्व(त्वं)व्यसनहेतुरित्युक्तम् ।

[७१]अस्त्वेवमपि कथमस्य हेयत्वमित्यत्राह—तस्मादित्यादि । यस्मात् द्वयमपि व्यसनहेतुः तस्मान्मूलहरं कुलक्रमागतराज्यादेरपि भ्रंशकरं व्यसनारम्भं व्यसनहेतुं कामं कोपञ्च त्यजेदिति । त्यागयोग्यतामाह–आत्मवानिति । विशेष+...यैरकृतं कृतं स्यादित्यत्राह–

---

* अस्याः किल व्याख्याया मूलभूतं 'तन्निमित्तो विनाश' इति पदजातमेकोनसप्ततितमसूत्रस्यैवाङ्गभूतमिति डा. जौलीसम्पादितपुस्तकाल्लभ्यते । व्याख्यानुरोधात्त्वष्टषष्टितमसूत्रस्यान्तिमोऽयं भाग इति प्रतीमः । अस्माभिस्तु मूलानुरोधेन तदनुकूल एवाङ्कनिर्देशो व्यधायि ।

† प्रतीकमिदं डा. जौली. मूलपुस्तके ऽत्र सर्वथापि नोपलभ्यते ।

‡ 'असत्परिग्रहः' इति डा. जौली. मूलपाठः ।

+ अत्र 'विशेषविषयैरकृतं' इत्यादिपाठः कदाचिद् भवेत् । अयमर्थः—विशेषविषयैर्विषयाभिलाषैराक्रान्तः पुरुषोऽकृतमकरणीयमनुष्ठातुमयोग्यमपि कर्म बलात्कारेणानुतिष्ठत्येव; तन्निवृत्तये क उपायः स्यादिति विवक्षायामाह–जितेन्द्रिय इति । जितेन्द्रियो हि विषयैर्नाक्रान्तो भवतीति भावः ।

जितेन्द्रिय इति । इन्द्रियजयः कुत इत्यत्राह—वृद्धसेवीति ।

इति श्री वादिकविचूडामणिमहोपाध्याय श्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां व्यसनाधिकारिकं नाम अष्टमे ऽधिकरणे तृतीयोऽध्यायः ।

## ८ अधि., ४ अध्या, १३०—१३२ प्रक.

### सू. पीडनवर्गः, स्तम्भवर्गः, कोशसङ्गवर्गश्च ।

एवं राजराज्ययोर्व्यसनचिन्तेत्यत्र स्वाम्यमात्याश्रयाणि गुणप्रातिलोम्यगुणाभावरूपाणि व्यसनान्युक्तानि । पुरुषव्यसनवर्ग इत्यत्र सामान्यतो जनपददुर्गवर्त्तौ(?)पुरुषाश्रयौ प्रदोषप्रसङ्गरूपौ कोपकाम(मौ)वृत्तौ । इदानीं जनपदाद्याश्रयमेव पीडाख्यं व्यसनं वक्तुं सूत्रं *प्रपीडनवर्ग इति । प्रकर्षेण पीडाहेतूनां व्यसनानां वर्गोऽभिधीयते इत्यर्थः ।

1 तेषां दैवमानुषभेदेन द्वैविध्यात् तदेव तावदाह—दैवपीडनमिति । अन्यादिति†, पञ्च दैवपीडनानीत्यर्थः । मरक इति, अनिमित्तमृति ‡शेषः, एषां क्रमाद्वा......गरीयस्त्वं निरूपयेत् ।

2 प्रथमद्वये तावदाचार्यमतमाह—अग्न्युदकयोरित्यादि । अकार्यमिति+, दुरासदत्वादिति भावः ।

3 सर्वदा हि चेति । सर्वस्वरूपविकारकारीत्यर्थः । शक्यापगमनमिति§, स्पर्शमात्रेणमाकारत्वादिति भावः । कार्यबाधमिति||, नौकाप्लवादिभिः शक्यतरणत्वादित्युक्तम् ।

---

* उपरि मूलसूत्रे 'पीडनवर्गः' इत्येव पाठः । अत्र पुनः 'प्रपीडनवर्गः' इति । व्याख्यायि व्याख्याकृताप्ययमेव पाठः । सम्भाव्यते कदाचित्पुरस्तादप्ययमेव पाठः स्यात् ।

† 'अन्यादिति' इति प्रतीकमिव प्रतीयते । परं मूलपुस्तके नेदं क्वापि दृश्यते । कदाचिदत्र 'अग्न्यादीनि' इति पाठो भवेत् । तथा च 'अग्न्यादीनि पञ्च दैवपीडनानि' इति सङ्गतार्थः पाठः स्यात् ।

‡ कदाचिदत्र 'अनिमित्तमृतिविशेषः' इति पाठो भवेत् ।

+ अत्र 'अप्रतिकार्यम्' इति डा. जौली. मूलपाठः ।

§ अत्र 'शक्योपशमनम्' इति डा. जौली. मूलपाठः ।

|| अत्र 'तार्याबाधम्' इति डा. जौली. मूलपाठो युक्तो व्याख्यानुसारी च ।

[५]निषेधति—नेतीति।

[६]ग्रामशतवाहीति, अनेकग्रामगामीत्यर्थः।

[७]उपसृष्टि* परिचारकव्यायामोपरोधेनेति, व्याधिनोपद्रुतानां कर्मकराणां कृष्याद्यायासा(स)विघातेन कृष्यादिकर्माण्युप(व ?) हति (न्ति)।

[८]दुर्भिक्षन्तु भक्तमात्रेण कर्मकरलाभान्तकर्माविघातकं ददाति च धान्याभावे हिरण्यं पशूंश्च काराक्रियेत्यर्थः।

[९]आचार्याणां मतं निषेधति—नेतीति।

हेतुं[१०]माह[११]—एकदेशीत्यादि †। व्याधिर्हि प्रादेशिकाश्चिकित्सादिना प्रतिविधेयश्च। दुर्भिक्षन्तु सार्वत्रिकमजीवनद्वारा विनाशाय चेत्यर्थः।

[१२]तेन व्याधिना मरकोऽपि व्याधिवत्प्रादेशिकश्चिकित्स्या(त्सा) दिप्रतिविधेयश्चेत्यर्थः। ततो विपरीताद् दुर्भिक्षाल्लघीयानित्यर्थः।

[१३]इदानीं पीड्यमानद्वारा पीडां निरूपयन्नाचार्यमतमाह—शक्यः‡ क्षुद्रकेत्यादि। क्षुद्रकाः कर्मकरादयः, मुख्याः प्रधानभूताः तत्पीड(न) योरित्यर्थः। अयोगक्षेममिति, कृष्यादीनामपूर्वप्रवर्त्तनप्रवृत्तरक्ष(ण), योरभावं कुर्युरित्यतो गरीयानित्यर्थः।

[१४]कर्मानुष्ठानोपरोधधर्मेति, मुख्यक्षयः प्रयोजककर्त्रभावमात्ररूपतया लघीयानित्यर्थः।

[१५]एतन्निषेधति—नेतीति।

[१६]प्रतिसन्धातुमिति, तत्स्थाने क्षुद्रकान्तरनिवेशनेन कृष्यादिविच्छेदः समाधातुं शक्य इत्यर्थः।

[१७]सहस्रेषु हीत्यादि। क्षुद्रकक्षये तत्स्थाने क्षुद्रकान्तरवत् मुख्यक्षये मुख्यान्तरनिवेशनमशक्यं तेषां दुर्लभत्वादिति। दुर्लभत्वे हेतुमाह—सत्त्वप्रज्ञाधिक्यादिति, सत्वं पौरुषम, प्रज्ञा श्रुतजन्या बुद्धिः।

[१८]अथ मानुषपीडनमाह—स्वचक्रेत्यादिना। स्वचक्रं बलम्।

---

* अत्र 'अपसृष्ट' इति डा. जौली. मूलपाठः।

† 'एकदेशपीडनः' इति डा. जौली. मूलपाठः। कदाचिदत्र प्रतीकमपि 'एकदेशेत्यादि' इत्याकारकं भवेत्।

‡ डा. जौली. मूलपुस्तके 'शक्यः' इति पदमत्र सूत्रे नास्ति।

दण्डकराभ्यामिति, भिन्नमर्यादाभ्यामिति शेषः। अशक्यप्रकृतिश्चेति*, राजप्रकृतित्वादवि(नि)वार्य इत्यर्थः।

[१९]परचक्रन्त्विति। शक्यं प्रतियोद्धुमिति, परबलेन योधने ऽपराधाभावादिति भावः। अपसारेणेति, स्थानादपगमेन। सन्धिना वेति, एतद्ग्रामरक्षार्थमिदं दास्याम इत्यादिपणनेन वेत्यर्थः। मोक्षयितुमिति, अवस्कन्दनादिति शेषः।

[२०]एतन्निषेधति—नेतीति।

[२१]प्रकृतिमुख्येत्यादि†, अमात्यादिषु ये मुख्याः तदवष्टम्भेन वा तिरोधानादिविघातेन वा चक्रपीडनं सुपरिहरम्। किञ्च स्वचक्रमेकदेशपीडनञ्चेत्यर्थः।

[२२]परचक्रं विपरीतमित्याह—सर्वदेशेत्यादि। विलोपः यथादृष्टहरणम्, घातः व्यापादनम्, दाहो ऽग्निप्रक्षेपः, विध्वंसनं हर्म्यादिभञ्जनम्, अपवाहनं‡ स्थानान्निर्वासनम्।

[२३]प्रधानविवादमपि देशपीडाहेतुत्वान्निरूपयन्नाचार्यमतमाह—प्रकृतिराजेत्यादि। अत्र विवादयोरिति द्विवचनात् प्रकृतीनाञ्च राज्ञोश्च मिथो मिथ इति सिध्यतीति ग्राह्यम्। प्रकृतीनां मिथो भेदजननद्वारा परबलापातस्यावकाशदायीत्यर्थः।

[२४]राजविवादस्त्विति। राज्ञोर्विवादस्तु प्रकृत्यनुकूल इत्यर्थः। मुक्तमान्हिकुलाभः वेतनं षर्षादिनियतं हिरण्यं परिहरं+ आदेयकराद्यनादानम्।

[२५]निषेधति—नेतीति।

[२६]राज्ञः प्रकृतिविवादो न केवलमविरोध्येव प्रत्युतोपकार इत्यादि

---

* डा. जौलीसम्पादितमूलपुस्तके तु 'अशक्यं च वारयितुम्' इत्यानुपूर्वीकः पाठो वर्त्तते।

† डा. जौलीसम्पादितमूलपुस्तके 'प्रकृतिपुरुषमुख्य०' इत्यादिपाठो वर्त्तते।

‡ अत्र 'उपवाहनम्' इति डा. जौली. मूलपाठः।

+ मुक्तमित्यारभ्य परिहरमित्यन्तः पाठो विभ्रष्टविपर्यस्तपदवर्णोऽस्फुटार्थः सर्वथापि। सम्भाव्यते कदाचिदत्र मूलानुगतोऽर्थानुसारी च 'भक्तं आह्निकलाभः, वेतनं वर्षादिनियतं हिरण्यम्, परिहारं आदेयकराद्यनादानम्' इत्यानुपूर्वीकः पाठो भवेत्।

(इ)—विवदमानाश्चेत्यादि * ।

[२८]पीडनोच्छेदनायेति, पीडनं शक्तिसिद्धिविघातनम्, उच्छेदनं विनाशनम्; तदर्थः स्यादिति(?),प्रकृतिविग्रहशमनायासात् द्विगुणायासप्रशमनीयश्चेत्यर्थः ।

[२९]विहारस्यापि देशकालपीडनत्वात्तन्निरूपयन्नाचार्यमतमाह—देशकालेत्यादि † । विहारः क्रीडा । त्रैकाल्येनेति, कृतपापा(का)नां सस्यानां सेवनरक्षणाद्यकरणात्, पाप(क)काले पापकरणात्, करिष्यमाणपापा(का)नाञ्च भूमिपरिकर्माद्यकरणात् त्रैकाल्यफल(ला)भावो ग्राह्यः ।

राजविहारस्तु कार्वाकालिकादयः, रूपाजीवा वेश्याः, वैदेहका वणिजः, अत्र च वणिगादीनामुपकारतरा वेत्यर्थः । कारवः तक्षरजकादयः, शिल्पिनः सुवर्णकारादयः, कुशीलवाः श्लोकादिगायनाः, वाग्जीविनो वैतालिकादयः, रूपाजीवा वेश्याः; अत्र वणिजां गन्धादिविक्रयद्वारोपयोग इति ग्राह्यम् ।

[३०]एतन्निषेधति—नेतीति ।

[३१] [३२]देशविहारः श्रमापनोदार्थतया तावन्मात्रमपेक्षते भूयश्च कृष्यादिषु योगमभियोगमनुष्ठानं गच्छतीति विहारवान् जनो भूयः कर्मानुष्ठानं गच्छतीत्याह—देशेत्यादि । ततश्च नातिपीडावह इत्यर्थः ।

[३३]राजविहारस्त्विति । राज्ञा(जा)स्वयमेव स्ववल्लभैश्च स्वयंग्राहादिभिः पीडयतीत्यर्थः । स्वयंग्राहो जनपदाननुज्ञयैव ग्रहणम्, प्रणयः प्रार्थना, पण्यागारमुपगारः, कार्यो व(प्र)ग्रहः अस्य कार्यस्य निवृत्यर्थमियद्देयमिति उत्कोचग्रहणम्, एभिः पीडयतीत्यर्थः ।

[३४]देवीकुमारयोर्विहारान्निरूपयन्नाचार्यमतमाह—सुभग इत्यादिना ।

[३५]सुभगा विलासोपभोगेनेति । विलासार्थेनोपभोगेन गन्धमाल्यादिभोगसाधनमात्रेण पीडयतीत्यतः तत्पीडनमलघ्वीय ‡ इत्यर्थः ।

* अत्र 'विवदमानास्तु' इति डा. जौली. मूलपाठः ।

† अत्र 'देशराजविहारयोः' इति डा. जौली. मूलपाठः ।

‡ अत्र 'तत्पीडनमल्पीय इत्यर्थः' इति पाठः समीचीनो भवेत् ।

[३६]निषधाति—नेतीति ।

[३७]कुमार(रो)मन्त्रिपुरोहिताभ्यां शक्यो निषेद्धुं, न तु देवि (वी) स्त्रीत्वेन बालिश्यान्मौर्ख्यादनर्थै(र्थ्यैं)श्च कुब्जवामनगायनादिभिः संयोगात्, नीचायुक्तान्तारासम्भवाच्चेत्यर्थः ।

[३८]श्रेणीमुख्ययोरित्यादि । मिथः सङ्गतायुधीयकर्षकगण(णः) श्रेणी, सा जनपदं भृशं पीडयति । बाहुल्यादनवग्रहेति, बहुत्वेन सर्वेषां दमनस्याशक्यत्वादनवग्रहा निष्प्रतिबन्धाः । स्तेयसाहसाभ्यामिति, चौर्यात् प्रसह्यादानाच्चेत्यर्थः ।

[३९]मुख्यस्तु कार्यानुग्रह* विघाताभ्यामिति । उत्कोचदाने कार्यकरणादन्यथा तद्विघातनाच्चेत्यर्थः ।

[४०]निषधाति—नेतीति ।

[४१]सुख्यावस्थेति । सुखेनापीडनादुख्यावस्था । समानशीलेत्यादि, शीलस्य कृष्याद्याजी (व्य ?) वनस्य दण्डकराद्यर्पणस्य च तुल्यत्वादिति ।

†[४२]मुख्यैकदेशेति । मुख्यभूता ये श्रो(श्रे)ण्या एकदेशा एषां सामदानादिभिः स्वीकारेण वेत्यर्थः ।

[४३]स्तम्भयुक्त इति । अवलिप्तो मुख्यः परिजीविन‡द्रव्योपघाताभ्यां पीडयतीति ।

[४४]सन्निधातृसमाहर्त्रोः पीडां निरूपयन्नाचार्यमतमाह—सन्निधात्रीत्यादि । समुदयं सम्यग्विप्लुतं निधत्त इति सन्निधाता, कोशादक्ष... ............सम्यक् हरतीति संग्रहः समाहर्ता, तयोरित्यादीत्यर्थः । कृत+दूषणात्ययाभ्यामिति, कृतस्य मरणादेर्मिथ्यादोषोद्भावने तु§ कालातिक्रमादिना च पीडयति ।

[४५]समाहर्ता तु करणैः लेखकसंख्याय (प) कादिभिः अधिष्ठित

* डा. जौली. मूलपुस्तके तु 'मुख्यः कार्यावग्रहविघाताभ्यां' इति पाठो वर्त्तते ।

† अत्र कदाचित् 'श्रेणी मुख्यैकदेशेति' इति मूलपाठानुसारि प्रतीकं भवेत् ।

‡ 'परिजीविन' इत्यस्य स्थाने 'परप्राण' इति डा. जौली. मूलपाठः । कदाचिदत्रापि 'परजीवित' इति पाठः स्यात् ।

+ अत्र 'कृतविदूषणा.' इत्यादि डा. जौली. मूलपाठः ।

§ अत्रार्थानुसारी 'दोषोद्भावनेन' इति तृतीयान्तः पाठः समीचीनो भाति ।

(तः) स्वानियमं (तं) भक्तत्वेनान्नादिकं गृह्णाति, अतोऽस्य पीडनावकाश-*मितिभावः।

४६ एतन्निषेधति—नेतीति।

४७ सन्निधातुर्न कृतदूषणाद्यवकाशः, अन्यैः कृतव्यवस्थस्य गुणवत्तया परीक्षितस्य प्रतिग्रहमात्रकर्तृत्वादित्यर्थः।

४८ समाहर्त्ता त्विति†। स खल्वपीडनार्थं स्वदेयमर्थं प्रथममादाय पश्चात् राजार्थमुत्पादयति वा विनाशयति वा। ननु सोऽपि कारणाद्यधिष्ठित एवार्थानादत्ते नच कश्चोपर्यावकाश इत्यत्राह—परस्वेत्यादि, करदाने हि स्वतन्त्रो वर्त्तत इति, स्वप्रत्ययः स्वयमेव कारणभूत इति वा स्वयमेव विश्वासाविषय इति वार्थः।

४९ अन्तपालवैदेहक (र?) योरपि पीडां निरूपयन्नाचार्यमतमाह-‡पालेत्यादि। वैदेहके जात्येकत्वेनैकवचनम्। चोरप्रसङ्ग+देयात्यादानाभ्यामिति, चोरप्रसङ्गः सर्वत्र चोरात् (न्) सञ्चार्य तैरर्थापहरणम्। देयस्य वर्त्तन्याख्यस्य पथिकदेयस्याधिक्येनादानं ताभ्यां भृशं पीडयति।

५० पण्यप्रतिपण्यानुग्रहैरिति, पण्यं पणनीयं द्रव्यं तन्मूल्यप्रतिनिधितया देयं प्रतिपण्यं तयोर्मूल्यक्लृप्तावनुग्रहैर्लाभकरणैः प्रसाधयन्ति वणिक्पथं प्रसिद्धं कुर्वन्तीत्यर्थः।

५१ निषेधति—नेतीति

५२ अन्तपाल इति। सम्पातः पण्याङ्गनानां सम्भूयागमनं तदर्थं कृतेनानुग्रहेण स्वदेयग्रहणे लाभकारणेन वणिक्पथं वर्त्तयति प्रवर्त्तयति।

५३ वणिजस्तु सर्वे संहताः स्वपण्यानां विक्रयदशायामेवोत्कर्षं परपण्यानां क्रये च अर्घापकर्षं कुर्वन्त एकपणो(णे)पणशतं पण्यक्रयविक्रययोः लाभं गृह्णन्ति, एकतैलादि(कुम्भे)कुम्भशतामित्यर्थः। आजीवन्तीति आजीवनमुपजीवनं लाभग्रहणमित्यर्थः। अतिशयोक्तिश्चेयमिति ग्राह्यम्।

५४ अत्र भूमेः पीडनीयत्वेपि अमोक्षणीयत्वे§ निरूपयितुं विमृशति

---

* अत्र कदाचित् 'पीडनावकाशो नेति भावः' इति पाठः समीचीनो भवेत्।

† डा. जौलीसम्पादितमूलपुस्तके 'समाहर्त्ता' इत्येव पाठः। तत्र तुर्नास्तीत्यर्थः।

‡ अत्र 'अन्तपालेत्यादि' इति मूलसूत्रानुसारि प्रतीकं भवेत्।

+ अत्र 'चोरप्रसर्ग' इति डा. जौलीसम्पादितमूलपुस्तके पाठः।

§ अत्र कदाचित् 'मोक्षणीयत्वामोक्षणीयत्वे' इति पाठः समीचीनो भवेत्।

आभिजात्येत्यादि* । द्वयोर्हि भूम्योरप्रत्यादेयत्वं सम्भवति, विजिगीषोस्तत्कुलीनावरुद्धायाः पशुव्रजोपरुद्धाया वा तत्र का मोक्षयितुं क्षमेति शेषः । अभिजातेन विजिगीषोस्तत्कुलीनेन अवरुद्धा अति(धि) गता वा वज्र (व्रज) संचारार्थविसृष्टा व (वा) भूमिर्मोक्षयितुं योग्येत्यर्थः ।

५५ आचार्यमतमाह—अभिजातोप (प) रुद्धा वा† भूमिरित्यादि । तत्कुलीनेनाधिगता भूमिर्मोक्षणे.................यद्यपि महाफलदायिनी स्यात् तथापि तदात्वेऽप्यायुधीयदानेनातीतमुपकुर्वाणानां मोक्षयितुं योग्यव्यसनेषु पराभवादिषु वा बाधाभावात् आयुधीयाभावादाबो (बा) धो भविष्यतीति भयाच्चेत्यर्थः ।

५६ पशुव्रजोपरुद्धा तु मोक्षयोग्या सा यदि कृषियोग्यतया भाविमहाफला स्यात् ।

५७ अत्र युक्तिमाह—विवीतं हीत्यादिना । विवीतं तृणाद्युत्पत्तिभूमिः सा क्षेत्रेण सस्यवापेनापोह्यते फलगौरवादिति भावः ।

५८ निषेधति—नेतीति ।

५९ अभिजातोपरुद्धा भूमिः आयुधदानेनात्यन्तमहोपकारापि मोक्षयोग्येप (व) तत्कुलीनत्वेन रन्ध्रान्विषितया व्यसनेषु तेनैव बो (बा) धो भविष्यतीति भावात् (भयात्), स च तन्मोक्षणे सत्यचितशक्तितया न बाधाय प्रभवेदिति ।

६० व्रजोपरुद्धायाः सूपकारकत्वं नास्तीति यदुक्तं तदसिद्धमित्याह-पशुव्रजेत्यादि । कोशवाहनोपकारिणीति, घृतादिसम्पत्त्या कोशसम्पादिका बलीवर्दादिसंपत्त्या वाहनादिसम्पादिका चेत्यर्थः । तत्र मोक्षणे यथा बाधकमुक्तं व्यसनायाथ(स)भयादिति तथाऽत्रापि बाधकमस्त्येव तत्सद्भावे मोक्षणं स्यात्, अन्यथात्वमोक्षणमेवेत्याह—अन्यत्रेति । यानि उप्तसस्यानि आसन्नक्षेत्राणि तेषां पशुभिरुपरोधो यदि स्यात् तदा मोक्षणीयैव, नत्वन्यदेत्यर्थः ।

---

* 'अभिजातोपरुद्धा' इत्यादि डा. जौली. मूलपाठः ।

† अत्र डा. जौलीसम्पादितमूलपुस्तके 'वा' इति नास्ति ।

६१ तस्कराटविकयोः...............त्वं निरूपयन्नाचार्यमतमाह—प्रतिरोधकेत्यादि । रात्रिसत्रचारा *इति, रात्रावन्धकारे सत्रे दुर्गग्रहनादा(णादौ)सञ्चारिणः, शरीराक्रा( क्र )मिण इति, सहायैर्विना स्व शरीरमात्रेणैव सर्वादिभिः भाविनः । अथवा प्रबुद्धानामपि रक्षकाणां शरीराण्याक्रम्य निश्चेष्टतयावष्टभ्यापहरणशीला इति, अपहरणैकवृत्तय इत्यर्थः । शतसहस्रापहारिण इति, लक्षचोराः सगुप्तिकं प्रभूतधनमपि अपहर्तुं वद्याम इत्यर्थः ।

६२ प्रधानकोपकाशे(श्चे)ति । क्षुद्रकाणां मे(मो)षणीयाभावादर्थपतीनामेवोद्वेजका इति भावः । तस्मादेते भृशं देशपीडका इत्यर्थः । आटविकास्त्वित्यादि†, व्यवहिता इति, जनपदान्तर्वर्तित्वाद्व्यवहिताः । तत्रापि विशेषमाह—प्रत्यन्तेति, प्रत्यन्ते सर्वजनपदबहिर्देशे तत्राप्यरण्ये चरणशीलाः, प्रकाशा इति-तद्देशवासितया प्रसिद्धाः, दृश्याश्चेति स्वदर्शनं कस्यचिदपि अनवगुपाना, एकदेशघातकाश्चेति, छिन्नग्र(ग्र)हग्रह समर्था दिलुकाः अतो नातिपीडका इत्यर्थः ।

६३ एतन्निषेधति—नेतीति ।

६४ प्रमत्तस्येति, धनरक्षायामजागरूकस्य हरन्तीति, स्वमिति शेषः, षष्ठीसामर्थ्यलभ्यं वा ।

६५ अल्पा इति । एकैकचारिणः; विरमो(प)गूढा इति‡, प्रकाशतया हर्तुमक्षमाः; ते इति,‡ प्रतिरोधकाः; ज्ञातुमवबोद्धुं ग्रहीतुं बद्धुं सुखमिति शक्या इत्यर्थः ।

६६ आटविकास्तु विपरीता इत्याह—स्वदेशस्था इत्यादि । तत्र प्रत्यन्तरारण्यपरत्वविपर्ययस्वदेशस्था इति; अल्पा इत्यस्य त्वप्रभूता इति; ग्रहीतुं सुखमित्यस्य विक्रान्ता इति; प्रतिरोधका इत्यस्य राजसधर्माण

---

* अत्र 'रात्रिसत्रपराः' इति डा. जौली. मूलपाठः ।

† इति प्रतीकं मूलसूत्रे ऽत्र न दृश्यते । कानिचित्पदान्तराण्युक्त्वा ऽस्मिन्नेव सूत्रे 'आटविकाः' इत्येतावन्मात्रं पदं दृश्यते ।

‡ प्रतीकमिदं डा. जौलीमम्पादितमूलपुस्तके सर्वथापि नोपलभ्यते ।

इति, सन्नह्य तूर्यमाहत्य बलसहितस्यायोधनं दूषिन* प्रेषणेन सन्धि-करणादि च राजसाधर्म्यम्'।

⁶⁷मृगवनात् हस्तिवनं ग्रहणादौ पीडावहमित्याह—मृगेत्यादिना। प्रभूता इति, बहवः; अनन्तैर्मांसैश्चर्मभिश्चोपयुक्ताः; मन्दप्रा(ग्रा)सा-वक्लेशिनः, अल्पाहारतया अनुधावनादौ सति सप्तभिः क्लेशभाजः; अत एव सङ्ग्राह्या इति भावः। सुनियम्याश्चेति, सुखेन विधेयीकर्त्तुं शक्याश्चेत्यर्थः।

⁶⁸मृगानुक्त्वा गजानाह—विपरीता इति। मृगेषूक्तस्य प्रभूतत्वादे-र्विपर्ययो हस्तिष्वित्यर्थः। गृह्यमाणा इति, ग्रहणे क्रियमाणे हस्तिनामेते दोषाः। गृहीतानाञ्च व्यालत्वे देशविनाशत्वमपि स्यादित्याह—दुष्टाश्चेति†।

⁶⁹एवं द्वयोः पीडाहेतुत्वे तारतम्यमुक्त्वा, इदानीमुपकारकरणमपि स्थानभेदेनोपकारकं पीडनञ्च स्यादित्याह—स्वपरस्थानीययोरित्या-दिना‡। आत्मनः परस्य च नगरयोः धान्यादिरुपकारो दुर्भिक्षादौ क्रयविक्रयव्यवहारस्वस्याापि विपदि धारकः स्यात् स एव परनगरे कृतस्वस्यैव पीडावहः स्यात्, तदुपचितस्य परबलस्य स्वविरोधि-त्वादित्यर्थः।

⁷⁰एवं साक्षात्परम्परया च देशपीडनाद्युक्त्वोपसंहरति—इति देश-पीडनानीति+।

एवं जनपददुर्गव्यसनान्युक्त्वा क्रमात् कोशव्यसनाभिधानार्थं सूत्रद्वयम्—स्तम्भवर्गः कोशसङ्गवर्ग इति च। तत्र स्तम्भः प्रतिबन्धः मन्त्रा(न्त्र्या)द्यन्यतममुख्यावष्टम्भेन करादेरप्रदातारं तस्य वर्ग उच्यत इति आद्यसूत्रार्थः।

---

* अत्र कदाचित् 'दूतादिप्रेषणेन' इति वा पाठो भवेत्।

† अत्र 'दष्टाश्च' इति डा. जौली. मूलपाठः। पुनश्चैष पाठो भाति।

‡ स्वपरस्थानीयोपकारयोः' इति डा. जौली. मूलपाठः।

+ डा. जौली. सम्पादितमूलपुस्तके 'देश' इति पदं नास्ति। 'इति पीडनानि' इत्येतावानेव पाठः।

[७१] तत्र लक्षणेन सहैव स्तम्भं विभजते—अभ्यन्तर इति*। मुख्येषु-मन्त्र( न्त्रि )पुरोहितयुवराजसेनापतिष्वन्यतमेन प्रतिबन्धः अभ्यन्तरस्तम्भ इत्यर्थः। उपसंहरति इति स्तम्भवर्ग इति।

एवमनात्तकरः स्यात् नादानरूपस्तम्भमुक्त्वा दयात्तस्यैव करस्य कोशभूतस्य बहिस्सङ्गःकोशप्रवेशनबहिरवस्थानं तदभिधानार्थं सूत्रं—कोशसङ्गवर्ग इति, कोशस्य राजार्थस्य यस्सङ्गः बहिरवस्थाग(नं)तस्य वर्ग उच्यत इत्यर्थः।

[७२] तमाह—ताभ्यामित्यादि। अभ्यन्तरबाह्यस्तंभाभ्यां। यथोक्तैरिति, उक्तानि देशपीडनानि साक्षात्परम्परया वा कोशस्यापि पीडनानीति भावः। पीडित इति, स्वल्पीभूतइत्यर्थः। सक्तो मुख्येष्विति, प्रधानैः कृतोपजीविनः। परतोऽप्रविष्ट†इति, इतः पूर्वः कोशाप्रविष्टः करो नादेय इति राजशासनादनादानं परिहारं ततः कोशमप्रविष्टः। प्रकीर्ण इति,शकलीभूततया तत्रानातौ विक्षेपणावस्थितः। मिथ्यासंहृत इति‡,एतावदितिन्यूनमधिकं वा संपिण्डितामित्यर्थः। सामन्ताटविक इति+, सामन्ता भूम्यनन्तराः, अटव्या आटविकाः तैःहृतःविलुण्ठितः। उपसंहरति—कोशसङ्गवर्ग इति§, बाह्याभ्यन्तर इति भावः।

[७३] पीडनादिव्यसनाभिधात||फलमाह—अनुत्पन्नाविति, उत्पत्तिप्रागभावो¶ नन्वस्यानादिना(सा)न्तकर्त्तव्यांश इति चेत् ,सत्यम् ,कारण प्रतिबन्धस्य कर्तव्यतापदेशान् नदोषः। उत्पन्नानांवारणे ✱ चेति, वार-

* अत्र 'आभ्यन्तर' इति डा. जौली. मूलपाठः।

† इद प्रतीकं मूलसूत्रे नास्ति । तत्र 'परिहारोपहृत:' इत्यानुपूर्वीकः पाठोऽस्य स्थाने वर्त्तते।

‡ अत्र 'मिथ्यासंभृत:' इति डा. जौली. मूलपाठः।

+ अत्र 'सामन्ताटवीभृत:' इति डा. जौली. मूलपाठः।

§ डा. जौली. सम्पादितमूलपुस्तके तत्र 'इति कोशसङ्गाः' इत्येतावानेव पाठो वर्त्तते।

|| अत्र 'व्यसनाभिधानफलमाह' इति पाठो ऽर्थानुसारी समीचीनः प्रतीयते।

¶ अत्र कदाचित् 'उत्पत्तिप्रागभावो ऽनुत्पत्तिः' इत्यानुपूर्वीकः पाठो भवेत्।

✱ 'उत्पन्नानां च वारणे' इत्यानुपूर्वीको युक्तःपाठः, तथैव प्रतीकमपि स्यात्।

णेति वर्तनेः* देशवृद्धयर्थमिति, पीडनानिवर्तनं देशवृद्धिफलं, स्तम्भसङ्गनिवर्तनं स्वकोशवृद्धिफलमत उभयत्र प्रयतेतेत्यर्थः ।

इति श्री वादिकविचूडामणिमहोपाध्याय श्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अष्टमे ऽधिकरणे पीडादिवर्गत्रयं चतुर्थोऽध्यायः ।

## ८ अधि., ५ अध्या, १३३–१३४ प्रक.

### सू. बलव्यसनवर्गः मित्रव्यसनवर्गश्च ।

एवं कोशव्यसनाभिधानानन्तरं क्रमाद्दण्डमभिधातुं सूत्रम्–बलव्यसनवर्ग इति । बलस्य दण्डस्य व्यसनानां वर्ग उच्यत इत्यर्थः ।

[१] अत्रमानितादिनां† व्यसनभेदरूपाणां विशेषणानां बलं विशेष्यतया सम्बन्धनीयमित्यभिप्रायेणादावेवाह—बलव्यसनानीति ।

[२] अत्र(त्रा)मानितादीनां चतुस्त्रिंशद्विशेषणानामपि द्विकमुपादाय गौरवलाघवे निरूपयन्नेवैषामपि स्वयमेवोन्मीलयिष्यति, अतो नास्माभिरिदानीं व्याख्यायते ।

[३] क्रमाद्गौरवलाघवे निरूपयति—तेषामित्यादिना । अमानितविमानितयोरिति, अमानितं कृतार्थदानसत्कारम्, विमानितं अवज्ञातम्, तयोरमानितं तदात्वसत्कारादेव बुध्येत नत्वन्तः कोपमिति, अन्तः सामर्षत्वादित्यर्थः ।

[४] अभृतव्याधितयोरिति—अभृतम(द?)त्रचेतनम्, व्याधितं रोगाक्रान्तम्, तयोरभृतं भृतिदानात् उ……अकर्मण्यमिति, कर्माशक्तम् ।

[५] नवागतदूरागतयोरिति‡ नवागतमपि चिरागतत्वात् देशज्ञं दूरगतं दीर्घायाक्लिष्टं तयोर्नवागतमनवमिश्रं नवेतरसहितं अतएव अन्यस्मात् अनवादुपलभ्यायोधनविभागं युद्धचेत, नतु दूरयातदीर्घगमनक्लिष्टमित्यर्थः ।

---

* 'वारणेतिवर्त्तनेः' एतस्यस्थाने 'वारणे निवर्त्तने' इति पाठो ऽर्थानुगनत्वाद्युज्यते ।

† अत्र 'अत्रामानितादीनां' इत्यर्थानुसारी पाठो भाति ।

‡ अत्र 'नवागतदूरयातयोः' इति डा. जौली. मूलपाठः ।

[6]परिश्रान्तपरिक्षीणयोरिति । परिश्रान्तमसुखाभारदूरगमनादिना खितं(न्नं),अपरिक्षीणं प्रागेव युद्धे क्षीणवाहनपुरुषादिनम् ।

[7]प्रतिहतन(ह)ताग्रवेगयोरिति । प्रतिहतं युद्धारम्भ एव भग्नम्, हताग्रवेगमग्रमतप्रवीरपुरुषं तयोः, प्रतिहतमित्यस्यैव विवरणं अग्रपातभग्नमिति, अग्रपातः युद्धाय बद्धयोः प्रथमसंपातः तदैव भग्नं तत्प्रवीरपुरुषसहितं* युध्येत न हताग्रवेगमिति, अस्यैव विवरणं अग्र †हतप्रवीरमिति ।

[8]अनृत्य(त्व)भूमी(मि)प्राप्तयोरिति । अना(नृ)तुप्राप्तमृतुं युद्धयोग्यं शरदादिकमप्राप्तम् । अभूमिप्राप्तं पत्यश्वरथाद्विपानां युद्धयोग्यतयायुक्तमभूमिप्राप्तं तयोः । यथर्तुयोग्ययुग्य‡ शस्त्रावरणमिति, य एवर्तुः प्राप्तस्तद्योग्ययुग्यादिकं युध्येत । युग्यानि वाहनानि, शस्त्राण्यायुधानि, आयुधानि कवचानि+ ग्राह्यम् । उपरुद्ध§प्रसारव्यायाममिति, सर्वो तो वानाजीवः प्रसारो युद्धव्यापारः व्यायामः तावद्भूमित्वेनोपरुद्धौ यस्य तत्तथा ।

[9]आशानिर्वेदिपरिसृप्तयोरिति । आशया लब्धविषयत्वेनापूर्णया खिन्नमाशानिर्वेदि, परिसृप्तं परीति वर्जनार्थः व्यपगतमुख्यमित्यर्थः । लब्धाभिप्रायमिति, लब्धेच्छाविषयः । परिसृप्तमित्यस्य विवरणं परिसृतं ||मुख्यमिति, अन्यत्र गतप्रधानमित्यर्थः ।

[10]कलत्रगर्भ्य¶न्तश्शल्ययोरिति । कलत्रैर्भारभूतैर्दासीदासादिभिः ...............दन्तर्गतरव्यं अन्तःशल्यं अन्तर्गतामित्रम्, अनयोराद्यं कलत्रमन्यतो व्यवस्थाप्य युध्येत नान्तर्गतमित्रमित्यर्थः । अन्तः शल्यमित्यस्य विवरणं अन्तरमित्रमिति✳ ।

* अत्र '०पुरुषसंहतं' इति डा. जौली. मूलपाठः ।

† 'अग्रपातहतप्रवीरम्' इति. डा. जौली. मूलपाठः ।

‡ डा. जौलीसम्पादितमूलपुस्तके 'युग्य' इति पदमत्र नास्ति ।

\+ कदाचिदत्र 'आयुधानि कवचानीति ग्राह्यम्' इत्यानुपूर्वीको युक्तः पाठो भवेत् ।

§ अत्र 'अवरुद्धप्रसार०' इति डा. जौली. मूलपाठः ।

|| अत्र 'अपसृतम्' इति मूलपुस्तकानुरोधी पाठः ।

¶ '०गर्भान्तः शल्ययोः' इति डा. जौली. मूलपाठः ।

✳ अत्र 'अन्तरमित्रम्' इति मूलानुसारी युक्तः पाठो भाति ।

[११]रूपितमूलहीनगर्भयोरिति* । रूपितमूलं क्रुद्धप्रधानपुरुषं भिन्नगर्भमन्योन्यतो गर्भम्, अ(न्य ?)नयोराद्यं सामादिभिः प्रधानप्रसादनान्युद्धेति† न मिथो भिन्नमित्यर्थः ।

[१२]एकराज्यबहुराज्यातिक्रान्तयोर्युद्धयोग्यमाह---अपसृतातिक्षिप्तयोरिति । अपसृतमेकराजे(ज्ये) बलैर्बहुश उद्वेजितम्, अतिक्षिप्तन्तु बहुषु राज्येष्विति भेदः तयोः । अपसृतमित्यस्य व्याख्यानं एकराज्यातिक्रान्तमिति, एकराज्यगतं बलैर्बहुशो ऽन्यथार्पितं अस्त्रेण साङ्ग्रामिकोक्तव्यूहप्रतिव्यूहान्यु(द्यु)पायबलेन व्यायामेन तदभिभवनयोग्यशिक्षाबलेन च सत्रमरण्यादिकं मित्रबलञ्चाश्रित्य युध्येतेत्यर्थः । अतिक्षिप्तमित्यस्य व्याख्यानं अनेकराज्यातिक्रान्तमिति, अनेकराज्यगतैर्बलैर्बहुशो भग्नं न योद्धुमुत्सह(ते)इति । बह्वाबाधकत्वात्‡, अनियतोध्य(ध्व)मृगयूथस्य व्याघ्रवदनेकराज्यावासिनोऽपि पुरुषा बाधका न प्रतियोद्धुं शक्या(ः) तस्मादित्यर्थः ।

[१३]उपनिविष्टसमाप्तयोरिति । उप–समीपे निविष्टं न तु सहेति, ततश्चारणात् पृथग्यानस्थानमित्यर्थः । समाप्तं शत्रुणा सहैकस्थानयानमित्यर्थः । उपनिविष्टमित्यस्य व्याख्यानं पृथग्यानस्थानमिति । अतिसन्धातारम्+, पूर्वमतिसन्धानकर्त्तारं शत्रुं प्रति युध्येत् स्वरन्ध्रानभिज्ञत्वात् तस्येत्याशयः । न समाप्तमिति, समाप्तपदव्याख्यानं मरणै§कस्थानयानमिति, तथात्वे रन्ध्रावधानसम्भवादिति भावः ।

[१४]उपरुद्धपरिक्षिप्तयोरिति । उपरुद्धमेकतो निरुद्धम्, परिक्षिप्तं सर्वतो निरूद्धम्, तयोः । उपरुद्धमित्यस्य व्याख्यानं एकदेशोपरुद्धमिति । अन्यतः उपरुद्धप्रदेशात् प्रदेशान्तरेण निष्क्रम्य उपरोद्धारं प्रति युध्येत् । परिक्षिप्तमित्यस्य व्याख्यानं सर्वतः प्रतिरुद्धमिति ।

* अत्र हि 'कुपितमूलभिन्नगर्भयोः' इति डा. जौलीसम्पादितमूलपुस्तके पाठो दृश्यते ।

† अत्र कदाचित् 'प्रधानप्रमादगानि युध्येत' इत्यानुपूर्वीकः पाठो भवेत् ।

‡ 'बह्वाबाधत्वात्' इत्येव डा. जौली. मूलपाठ ।

\+ 'अतिसन्धाकारम्' इति डा. जौली. मूलपाठः । परं व्याख्याकृदभिमतपाठ एव शोभनो भाति ।

§ अत्र 'परिघातैकस्थानयानम्' इति डा. जौली. मूलपाठः ।

[१५]छिन्नधान्यपुरुषवीवधयोरिति । विच्छिन्नधान्यस्य विच्छिन्नपुरुषवीवधस्य च द्वयोरित्यर्थः । स्वराज्य (ज्ये) व्रीह्याद्यनागमे राज्यान्तरादानीयापि वा (द ?) जङ्गमैर्मृगादिमांसैः स्थावरैर्वृक्षफलादिभिर्वा कृताहारं युध्येत् । विच्छिन्नवीवधपुरुषमनभिसारं पुरुषाः स्वविषयादागामिनो यौधादयो वीवधाः वस्त्रादिभारः (?) आसारो मित्रबलं एषु विच्छिन्नेषु न युध्येदित्यर्थः ।

[१६]स्वविक्षिप्तमित्रविक्षिप्तयोरिति । स्वविक्षिप्त (प्तं) भूमावेव तत्र तत्र कार्यार्थं प्रेषितं, त (मि) त्रविक्षिप्तं मित्रकार्यार्थं तद्भूमौ विक्षिप्तं तयोः । स्वविक्षिप्तमित्यस्य व्याख्यानं स्वभूमौ विक्षिप्तमिति । आपदि (दी) ति, पराभियोगरूपायाम् । आवाहयितुमिति*, तदैव तत्र सन्निधापयितुम् । विप्रकृष्टदेशकालमिति†, हेतुतया विशेषणम्; अत्र कालस्य विप्रकर्षो गमनविलम्बः ।

[१७]दूष्ययुक्तदुष्टपार्ष्णिग्राहयोरिति । ये मुख्या राजानमुपगृह्योपजीवन्ति ते दूष्यास्तैर्युक्तं दूष्ययुक्तम्, पार्ष्णिग्राहस्य दुष्टत्वं रन्ध्रे जागरूकं‡ अतस्तस्मात् हित दुष्टपार्ष्णिग्राहं तयोरित्यर्थः । आप्तपुरुषाधिष्ठितमिति,........पास्य पुरुषाधिष्ठितं; मिथोऽसंहतमिति+, दूष्येतिभावरहितम् । प्रष्ठा§भिघातत्रस्तमिति हेतुतया विशेषणम् ।

[१८]शून्यमूलास्वामिसंहतयोरिति । बलैकदेशं मूलरक्षार्थं अनवस्थाप्य सर्वसन्दोहेन प्रस्थितं शून्यमूलम् । अस्वामिसंहतमिति, स्वाम्यसंहतं राज्ञा सेनापतिना श (वा) हीनमित्यर्थः । तयोराद्ये कुटुम्बनाशभयाद् व्यसनम्, द्वितीये नायकाभावात्, नायकश्च

---

* अत्र 'अपस्रावयितुम्' इति डा. जौली. मूलपुस्तके. पाठः ।

† डा. जौलीसम्पादितमूलपुस्तके तु 'विप्रकृष्टदेशकालत्वात्' इति पञ्चम्यन्त एव पाठः । परमेष पाठो व्याख्याकृदनभिमतः, पूर्वापरसूत्रानुसारितया तु व्याख्याकृदङ्गीकृत एव पाठो मूलशैलीमनुसरति ।

‡ अत्र कदाचित् '०जागरूकत्वं यतस्तस्माद्धि तद्दु०' इत्याद्यानुपूर्वीकः पाठो भवेत् ।

+ डा. जौली. मूलपुस्तके ऽत्र 'मिथः' इति पदं न दृश्यते ।

§ अत्र 'पृष्ठाभिघात०' इति डा. जौली. मूलपुस्तके पाठो दृश्यते ।

वक्ष्यते-"अङ्गदशकस्यैकः पतिः पदिकः । पदिकदशकस्यैकः सेनापतिः । तद्दशकस्यैको नायक इति* (अधि. १०, अध्या. ६, ४६-४८ ।

[१९] भिन्नकूटान्धयोरिति । कूटमध्या (ध्य) त्ताग्रिमः तद्रहितमनसा......शत्रुदेशानभिज्ञम्, तयोराद्ये नायकाभावे ऽपि मुख्यान्तराधिष्ठितं युध्येदित्यर्थः ।

[२०] एवं बलव्यसनानां गौरवलाघवे निरूप्य तत्परिहारप्रकारान् संक्षिप्याह—दोषशुद्धिरित्यादिना । दोषशुद्धिः, अमानितविमानितादीनां दोषाणां शोधनम् । बलावाप इति, अ(नु ?) मानितत्वादिरहितबलस्य सहावापः । सत्रस्थानादिसंहितमिति†, सत्रमरण्यादिकं स्थानमिति; संहितमिति संन्धानं कूटोपायैः शत्रुबलभञ्जनादिभिः, उत्तरस्य बलवत्तरस्य प्रतिपक्षसन्धिश्चेत्येतत्सर्वं बलव्यसनानां साधनं परिहार इत्यर्थः ।

[२१] एवं व्यसनपरिहारप्रकारानुक्त्वा परिहारश्च स्वबलव्यसनस्यावश्यकार्यः परबले च रन्ध्रेषु प्रहरणं कार्यमित्याह—रक्षेत्स्वदण्डमित्यादिना । स्वदण्डं शत्रुभ्यो रक्षेत् । उत्थितः सदा कृतोत्साहः । शत्रूणां बलस्य रन्ध्रेषु छिद्रेषु प्रहरेच्चेति । नित्यमुत्थित इत्युभयत्रावर्त्तनं तदादरार्थमिति द्रष्टव्यम् ।

एवं दण्डव्यसनमुक्त्वाऽनन्तरं क्रमात् मित्रव्यसनमभिधातुं सूत्रम्—मित्रव्यसनवर्ग इति । मित्रस्य यानि व्यसनानि तेषां वर्ग उच्यत इत्यर्थः ।

[२३] तमाह—अभियातमित्यादिना । अभियातमभियुक्तं परेणेति शेषः । स्वयमिति, पूर्वोद्देशेनैवेत्यर्थः । सम्भूयेति समवायोद्देशेन सामवायिकतया वा । अन्यवशेन बन्धाद्युद्देश्यद्वारा वा । अभियातमिति कर्त्तरि क्त इति केचित् स्वयमेव वा सम्भूय सामवायिकतया

* एतत्सूत्रत्रयमप्यत्रास्माभिर्मूलसूत्रनिर्दिष्टानुपूर्व्यनुगतमेव लिपिकृतम् । आदर्शपुस्तके त्वाद्यसूत्रद्वयमशुद्धप्रायमेव दृश्यते । अन्त्यसूत्रेऽपि 'तद्दशकस्य' इत्यस्य स्थाने 'सेनापतिदशकस्य' इति तच्छब्दार्थसेनापतिपदघटित एव पाठः ।

† डा. जौलीसम्पादितमूलपुस्तके 'सत्रस्थानातिसंधानम्' इत्यानुपूर्वीकोऽस्ति पाठः । परं वृत्तभङ्गभिया व्याख्याकृदङ्गीकृत एव पाठः शोभनो भाति । यदि कदाचिदत्रापि 'सत्रस्थानातिसंहितम्' इति पाठो भवेत्, तदात्यन्तं साधु ।

वा, अन्यवशेन बन्धाद्यर्थतया वा परस्मिन् कृताभियोगं यन्मित्रमशक्त्या दण्डकोशसम्पत्त्या वा लोभेन परस्मादर्थग्रहणेन वा प्रणयेन परस्मिन् स्नेहेन वा परित्यक्तमकृतसहकारन्तत् कृच्छ्रेण साध्यत इत्यागामिना सम्बन्धः।

[२४]नन्वेवमभियातं स्वयं मित्रं, द्वैधीभूतेन* वा मित्रं, कृच्छ्रेण साध्यते मित्रमिति त्रिषु स्थानेषु मित्रपदप्रयोगः पौनरुक्त्यमावर्चो ? (हे) दिति चेत्, सत्यम्, विशेषणानां सर्वेषां मिथोऽनपेक्षत्वद्योतनार्थत्वात्। अन्यथा सज्ञाते विक्रीतं वेत्यन्वयः; अयमर्थः-मित्रस्य सहायतया स्थितो विजिगीषुः यदा परस्मादर्थं गृहीत्वा स्थित एव मित्रे स्वयं निवर्त्तते तदा मित्रं परहस्तगतं स्यात् ततोऽर्थेन पणेन तद्विक्रीतमेव स्यादिति। प्रकारान्तरमाह--द्वैधीभूतनेति*। स्वमित्रस्य यः शत्रुस्तेन सह सन्धिं कृत्वा स्वयातव्यं प्रति द्वैधीभावः तमाचरता वा विक्रीतमित्यर्थः। प्रकारान्तरमाह—यास्यता वेत्यादि। अन्यत इत्यत्र त्वमितो याहि अहमितो यास्यामीति मित्रशत्रुणा सन्धिं कृत्वा विजिगीषुर्यदान्यं स्वशत्रुं अभियुङ्क्ते मित्रशत्रुश्च तदे (दै) वाभियुञ्जीत तदा संहितप्रयाणेन विक्रीतमित्यर्थः।

[२५]प्रकारान्तरमाह—पृथग्वेत्यादि। यदा विजिगीषुस्त्वमितो† यास्यामीति भिन्नचित्तेनोभयोः प्रयाणेन सन्धिं कृत्वा तच्छत्रोः दण्डकोशाभ्यां गूढमनुगृह्णीयात् यदा च सहगमनसन्धिना च विश्वास्य रन्ध्रेषु अस्य स्वयमेव परबलव्याजेन दण्डमुपहन्यात् तदा मित्रमतिसंहितं स्यादित्यर्थः। प्रकारान्तरमाह--भयेत्यादि। तच्छत्रुरभियोक्ष्यत इति भयेन वा, किमनेनोपकृतेनापीत्यवज्ञया वा, आलस्येन वा विपक्षाक्रमणादिव्यसनान्न विमोचितमित्यर्थः।

[२६]प्रकारान्तरमाह—अवरुद्धमिति। आत्मीयाभ्य एव भूमिभ्यो निष्कासितम्। अथवा स्वयमेव विजिगीषोः समीपाद् भयेन गतं वधबन्धादिशङ्कयेति भावः। गमन एव निमित्तान्तराण्याह-आच्छे-

---

* अत्र 'द्वैधीभावेन' इति डा. जौली. मूलपुस्तके पाठो दृश्यते।

† अत्र कदाचित् 'त्वमितो याहि अहमितो यास्यामीति' इत्थमर्थानुकूलः पाठो भवेत्।

दनादित्यादि । तदीयार्थस्य हठहरणाद्वा गतं दास्यामीत्युक्तस्यादानाद्वा गतं दत्त्वा वाप्यवमानितं वेत्यर्थः ।

२७ स्वयमेवातिमहान्तमु.................दापितं वा परमुखेन वा पुरुषान्तरव्याजेन वार्थमध्या (त्या) हारितामित्यर्थः। अतिभार इत्यादि, परं शत्रुं भङ्क्त्वा उपस्थितं पुनरतिभारे कर्मणि नियुक्तं वेति कृतकार्यस्यापि पुनः दुष्करे नियोगः खेदावह इति भावः ।

२८ परेञ्जनासमभ्यर्थेत एवोपेक्षितमनाहतं, प्रार्थयित्रा विरोधितमिति मैत्रीकरणाय प्रथमं प्रार्थयिता (त्रा) स्वामिना वा पुनर्विरोधितं कृतविरोधम् । प्रार्थयित्वेति* पाठेप्ययमेवार्थः शब्दस्त्व†..............स्यात् । एवंभूतं मित्रं क्लेशेन पुनः प्रत्यापद्यते कथञ्चित् सिद्धमपि मित्रीकृतमप्याशु विरज्यतीत्याह—कृच्छ्रेणेत्यादिना ।

२९ सं(सु)साधं सिद्धौ स्थिरञ्च मित्रमाह—कृतप्रयासमित्यादिना । विजिगीषोरर्थे कृतयुद्धादिप्रयासं वा स्वभावसर्वकार्ययोग्यं वा यन्मित्रं प्रमादादकृतोचितसत्कारं तदित्यर्थः । मानितं वेति, तत्कृतमपि अकृतयथोचितसत्कारं वेति; भक्तितो‡ वा निवारितमिति, विजिगीषौ या भक्तिः स्नेहः ततः परैः प्रतिषेधितं वेति ।

३० मित्रोपघातेत्यादि । मित्रान्तरस्योपघातकरणात् आत्मन्यपि (तु ?) शङ्कया त्रस्तम् । शङ्कितं वेत्यादि, स्वशत्रुणा सह संहितौ विजिगीषौ साशङ्कं वेति । अरिसंहितादिति, विजिगीषुत इति शेषः । दूष्यैर्वेत्यादि, दूष्यैः राजावग्रहणोपजीविभिः मुख्यैः कृतभेदनं कृतविश्लेषणं वेति; उक्तप्रकारं मित्रं सुसाधं सिद्धञ्च स्थिरमेव स्यात् । तिष्ठतीति, न चलति मैत्रादित्यर्थः । अत्रापि मोहान्मित्रममानितमिति दूष्यैर्वा भेदितं(मित्र ?) मित्रमिति च मित्रपदपौनरुक्त्ये समाधिः पूर्ववत्, यस्मात् कृच्छ्रेणाकृच्छ्रेण वा साध्या उभयेपि दोषा मित्रसिद्ध्यर्थमवश्यं प्रथ ( श )ममानेयाः ।

---

* डा. जौलीसम्पादितमूलपुस्तकेत्वयमेव पाठो दृश्यते ।

† कदाचिदत्र 'शब्दस्त्वतिरिक्त एव स्यात्' इत्यानुपूर्वीकः पाठः स्यात् ।

‡ 'शक्तितो वा' इति डा. जौली. मूलपाठः ।

[३१]दोषप्रशमनं कृतमपि न दोषानुत्पादतुल्यम्, तस्मान्मित्रोपघातहेतून् दोषान्नोत्पादयेत्, अथ प्रथमादुत्पन्नास्तदा दोषघातिभिः सो ( सा ) मादिभिः प्रशमयेदित्याह—तस्मादित्यादिना ।

*एवं स्वाम्यादीनां मित्राणां प्रकृतीनां व्यसनवर्गानुक्त्वा सर्वव्यसनसाधारणं व्यसनोत्पादकसहकारिलाभात् प्रागेव प्रतिकुर्वीत प्रतिबध्नीयात् । प्रशमनोपायमुपसंहारव्याजेनाह—तयोर्निमित्तमित्यादि† । व्यसनहेतूनां दोषाणामनुत्पादो नाम दोषप्रागभावः सचानादित्वादनुत्पाद्यः स कथं पुरुषव्यापारविषयः स्यादिति शङ्कान्यनेन निरस्ता, अनुत्पादकारणं नाम कारणप्रतिबन्ध एव स च कार्य इत्याशयः । स्वाम्यादीनां मित्रान्तानां प्रकृतीनां व्यसनं यत्कारणात् प्राप्नुयात् तत्कारणं व्यसनोत्पादकसहकारिलाभात् प्रागेव प्रतिकुर्वीत प्रतिबध्नीयात् । अतन्द्रितः अनलसो भूत्वेत्यर्थः ।

इति श्री वादिकविचूडामणिमहोपाध्याय श्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अष्टमे ऽधिकरणे व्यसनाधिकारिके पञ्चमोऽध्यायः ।

सम्पूर्णञ्चाधिकरणम्.



* इत आरभ्याऽऽध्यायपरिसमाप्तेरियं व्याख्या डा. जौलीसम्पादितमूलपुस्तकस्य एतदध्यायान्तर्गतद्वाविंशतितमसूत्रस्य पद्यात्मकस्य बोध्या । व्याख्याकृद्दीक्षा तु पद्यात्मकं तत्सूत्रमस्याध्यायस्यान्त्यमं त्रिंशत्तमं ज्ञेयम् ।

† अत्र 'यतो निमित्त' इति डा. जौली. मूलपाठः ।

# अथ नवमाधिकरणम् ।

## अभियास्यत्कर्म.

---

### ९ अधि., १ अध्या, १३५-१३६ प्रक.

सू.—शक्तिदेशकालबलाबलज्ञानं यात्राकालाश्च ।

तदेवमरिविजिगीष्वोः प्रकृतिव्यसनयौगपद्येनाङ्गतया तद्गौरवलाघवे निरूप्य शक्त्यादीनामापदन्तानां बलाबलनिरूपणमप्यनन्तरं कार्यमित्यधिकरणसम्बन्धे स्थिते यातव्ययास्यतोर्व्यसनभावमात्रमेव न यानाङ्गमपि तु शक्तिदेशकालबलाबलज्ञानमपीति तदभिधानार्थं सूत्रम्-शक्तिदेशकालबलाबलज्ञानमिति । शक्तयः उत्साहप्रभावमन्त्राख्याः । देशः चक्रवर्त्तिक्षेत्रैकदेशरूपः समविषमादिः । कालः शीतोष्णाद्यात्मकः । एषामात्मबलस्य युद्धयोग्यत्वं परबलस्य तदयोग्यत्वञ्च ज्ञेयमिति तदुच्यत इत्यर्थः ।

एतदेव कर्त्तव्यतया तावदवधारयति—विजिगीषुरित्यादि । अत्रोत्साहप्रभावादीनां याना*...............बलं स्वीकरणे हेतुः, पश्चात्कोपवदानी† यानाय प्रतिकूलानां बलं यानपरिहरणीयत्व‡... ......उत्साहादिशक्तीनामन्योन्यतः देशकालादितश्च बलं ज्ञेयम ।

एवं देशकालादिभेदानां मिथश्चान्यतश्च बलाबलं ज्ञेयमिति ग्राह्यम्, तत्र+.........कालास्तु मौलादिषड्विधबलेषु कार्याद्यनुगुणबलोपादानकालाः । पश्चात्कोपा ( पो ) यातस्य पार्ष्णिमूलादिषु

---

* अत्र कदाचित् 'यानायानुकूलानां बलं' इत्यानुपूर्वीकः पाठो भवेत् । 'स्वीकरणे' इत्यस्य यानस्वीकरणे यात्रास्वीकरणे वेत्यर्थो बोध्यः ।

† अत्र 'पश्चात्कोपादीनां' इति मूलानुगतोऽर्थानुसारी च पाठो भाति ।

‡ कदाचिदत्र '०हरणीयत्वे हेतुः, अत उत्साहादि०' इत्याद्यानुपूर्वीकः पाठो भवेत् ।

\+ अत्र 'कालयात्राकालबलसमुत्थानकालास्तु' इत्यादिपाठः सम्भाव्यते ।

विकारः। कर्म............*युग्य पुरुषो (षा) पचयं (यः)। व्ययो हिरण्यधान्यापचयं (यः) लाभः परभूम्यादिसिद्धिः। आपदोऽपनयस्था बाह्याभ्यन्तरोपजापादिरूपाः। एषां बलाबलं निरूप्य परस्या (स्मा) देभिर्बलोत्कृष्टो यायादित्यर्थः।

[२]अन्यथेति। एभिरव (वि) शिष्टबलत्वमित्यर्थः†।

[३]तत्र शक्तीनां तावन्मिथो बलं निरूपयन्नाचार्यमतमाह--उत्साहप्रभावयोरिति। उत्साहः शौर्यादिमत्त्वं, प्रभावः कोशादिमत्त्वं तयोरित्यर्थः। शूरः परबलाभीरुः, बलवान् शारीरबलयुक्तः, तदभावे शौर्यस्याप्यनुपयोगात्। अरोग इति, आरोग्याभावे शौर्यबलयोरप्यनुपयोगादसम्भवाच्चेति। कृतास्त्र इति, शिक्षास्त्रः। दण्डद्वितीयोऽपीति, मित्रबलादिभिर्विना स्वबलमात्रसहायोऽपीत्यर्थः। प्रभाववन्तमिति, कोशादिमन्तम्।

[४]अल्पसैन्यस्य कुतो जय इत्यत्राह--अल्पोऽपि चेति। तेजसेति स्वविक्रमेण।

[५]व्यतिरेकमाह--निरुत्साहस्त्विति। विक्रमाभिपन्न इति, युद्धे प्रवृत्त इत्यर्थः।

[६]एतन्निषेधति--नेतीति।

[७]प्रभावे वे (ने) ति‡; कोशदण्डादिमतेन (बलेन)। अतिसन्धत्त इति अतिशेते।

[८]स्वविक्रमाभावे कथमतिशयीतेत्यत्राह—तद्विशिष्टेत्यादि+। तद्विशिष्टबलं ततो यातव्यादधिकबला (लम्)। कोशेनेत्यादि§, कोशं दत्वा राजान्तरं सहायतया भूय (यो) वाहत्य‖.........

---

* अत्र 'कर्म' इति पदं किंप्रयोजनकमिति न ज्ञायते। इतः परन्तु 'क्षयो युग्यपुरुषापचयः' इत्याकारकः पाठो भाति, तथैवार्थानुगमात्। आदर्शपुस्तके तु 'पुरुषोपचयं' इति पाठो न प्रकृतमनुरुणद्धि।

† अत्र अन्यथात्वमिति शेषो योजनीयः।

‡ 'प्रभावेनेति' मध्यप्रतीकं सप्तमसूत्रस्य, नत्वादिप्रतीकम्।

+ अत्र 'तद्विशिष्टम्' इति डा. जौली. मूलपाठः।

§ डा. जौलीसम्पादितमूलपुस्तके प्रतीकमिदं सर्वथापीह नोपलभ्यते।

‖ अत्र '०हृत्य क्रीत्वा वा' इत्यादिपाठः सम्भाव्यते।

वा कोशेन ( कोशेन ? ) शूरपुरुषात् ( न् ) प्रभूतबलि ( ल ) श्चरतीति योजना । आगतानां भक्तवेतनदानं जात्यन्तरे स्थितानां तस्यार्थोपहरेण स्वीकरणं क्रयम्, प्रभूतप्रभावादिको हि सर्वत्र देशकाले चारुबलो भूत्वोपचरतीत्यर्थः ।

[९] प्रभावः कोशसं*............बालादयोऽप्युत्साहवतः पुरुषात् ( न् ) प्रागपि†............रित्यैति ( गृ ? ) ह्यवतामपीत्याह–उत्साहवतश्चेति‡ ।

[१०] प्रभावमन्त्रशक्त्योर्बलाबलं+ ।

[११] अत्र हेतुमाह—मन्त्रशक्तीत्यादिना । मन्त्रशक्त्यासम्पन्नोऽपि प्रभावरहितो निष्फलमन्त्रो भवतीत्यर्थः ।

[१२] प्रभावाभावस्य मन्त्रफलघातित्वमेव§............त्याह—मन्त्रकर्मेति । मन्त्रस्य–विचारपूर्वककार्यनिश्चयस्य, कर्म–अनुष्ठानप्रकारम्, प्रभावाभावः–कोशाभाव उपहन्ति,तस्य पुरुषद्रव्यसम्पत्तिविनिपातप्रतीकाराद्यङ्गापेक्षत्वेन कोशाभावे दुष्करत्वादिति । अत्र दृष्टान्तः—गर्भधान्यमवृष्टिरिवेति, गर्भधान्यं गर्भे एतावेपर्यायो नित्यवृष्ट्यपेक्षो जातिभेद इति केचित् ।

[१३] निषेधति—नेतीति ।

[१४] मन्त्रशक्तिः श्रेयसीति । प्रभावशक्तेत इति शेषः ।

[१५] प्रज्ञेत्यादि । प्रज्ञा सहजाबुद्धिः, शास्त्रमागमः, त एव चक्षुषी यस्य स तथा शास्त्राञ्जन‖............तसहजप्रज्ञादृष्टतया कार्यदर्शनरूपमात्रं क्रिया तावत् सुकरेत्यर्थः । त ( म ) न्त्रमा-

* अत्र कदाचित् 'कोशसंपत्तिः, स्त्रीबाला०' इत्याद्यानुपूर्वीकः पाठो भवेत् ।

† कदाचिदत्र 'जिग्यु' रिति क्रियापदमेव त्रुटितं भाति ।

‡ डा. जौलीसम्पादितमूलपुस्तके तु 'उत्साहवन्तश्च' इति पाठो वर्त्तते । परमेष व्याख्याकृदनुमत एव पाठोऽर्थानुसारी भाति । प्रभाववन्तः स्त्रीबालादयोऽपि उत्साहवतः पुरुषान् जित्वा क्रीत्वा च पृथिवीं जिग्युरिति सूत्रपदान्वयः ।

+ अत्र 'बलाबलं' इत्यस्याग्रे 'मिथो विचारयन् तयोः प्रभावस्य श्रेयस्त्वमाह-प्रभावेति' इति शेषं पूरयित्वा सूत्रार्थो विधेयः ।

§ कदाचिदत्र '०मेव निश्चितमित्याह' इति पाठो भवेत् ।

‖ अत्र कदाचित् 'शास्त्राञ्जनविमलीकृतसहज०' इत्याद्यानुपूर्वीकः पाठो भवेत् ।

धातुमिति, पातै श्रं* कोशदण्डादिकमाधातुं सम्पादयितुं शक्नुयादित्यर्थः। उत्साहादिभिर्हीनोऽपि सामाद्युपायैर्वा योगोपनिषद्भ्यो वोत्साहादिमतोऽपि परानतिसन्दध्यादित्याह—परानित्यादिना, योगास्तीक्ष्णादिगूढपुरुषाः, उपनिषद् औपनिषदिकोक्तांगाराग्निधूमादयः, ताभ्यां वेत्यर्थः। अतिसन्धि (न्धा) तुमिति, शक्त इत्यनुषङ्गः।

[16] एवमुत्साहादीनामुत्तरोत्तराधिक्यस्थितौ तद्वतां राज्ञामपि तद्वारेणोत्तरोत्तराधिक्यं सिध्येदित्याह—एवमुत्साहेत्यादिना।

[17] एवं शक्तिं निरूप्य देशं निरूपयति—देश इत्यादिना। देशः पृथिवीति, सामान्यत इति शेषः।

[18] सा सर्वाविति† देशो नेत्याह—तस्यामिति। तस्यां पृथिव्यां दक्षिणसमुद्रादारभ्य हिमशैलपर्यन्तं तिर्यक्पूर्वापरसमुद्रावधि योजनसहस्रप्रमाणं पृथ्वादीनां चक्रवर्तिनां राज्यभूतं क्षेत्रमित्यर्थः।

[19] तद्विशेषानाह—तत्रेत्यादिना। तत्र क्षेत्रे आरण्यादयः सप्तविशेषा इत्यर्थः। आरण्य इति, अकृष्यो ग (ट) वि प्रायः, ग्राम्य इति कृष्यो जनपदादिभिः, पार्वत इति अकृष्योन्नतपाषाणप्रायः, औदक इति आस्रव‡.........स्थलप्रायः, सम इति निम्नोन्नतरहितः, विषम इति निम्नोन्नतप्रायः, इति विशेषा इति—इत्येते क्षेत्रभेदाः।

[20] तेष्वित्यादि। तेषु आरण्यादिविशेषेषु निम्नयोधीत्वाभिन्न-निजबलं यथा जयं प्राप्नुयात् परबलश्च पराजयं तथा कर्म प्रयुञ्जीत युद्धक्रियां कुर्यात्।

[21] रथगजाद्यङ्गेषु अन्यतमभूयिष्ठस्य निजबलस्य व्यायामयुद्धव्यापाराणां यत्र भूमिः स्यात् परबलव्यायामा+च भूमिः स उत्तमो देश

* अत्र 'पातै श्रं' इत्यस्य स्थाने मूलसूत्रपाठानुरोधात् 'मन्त्रे' इति, व्याख्याकृदनुगमात्तु 'तन्त्रं' इति वा पाठः स्यात्; तथार्थसंगतेः।

† अत्र 'विति' इत्यस्य स्थाने 'पृथ्वी' इति पाठो युक्तो भाति।

‡ कदाचिदत्र '०आस्रवप्रायः, भौमः स्थलप्रायः' इति पाठो भवेत्।

+ अत्र 'व्यायामानाञ्चाभूमिः' इति पाठोऽर्थानुसारी भाति।

इत्याह–स उत्तम इति*। विपरीतकाला† इति, स्वबलस्य व्यायामादावभूमिः परबलस्य च तद्भूमिः सोऽधम इति । साधारण इति, उभयोरविशेषः तद्भूमिः तदभूमिर्वा यात्रा (यत्र) स मध्यम इत्यर्थः ।

[२२] अथ कालमाह––काल इत्यादि । शीतोष्णवर्षात्मेति, शीतो हेमन्तादिः, उष्णो ग्रीष्मादिः, वर्षाः प्रावृडभिधानमिति ग्राह्यम् ।

[२६] एवं शक्तिकालानां प्रत्येकं तदवान्तरभेदानां बलाबलं निरूप्य शक्त्यादित्रयस्याप्यन्योन्यतस्तन्निरूपणाचार्यमतं तावदाह—शक्तीत्यादिना ।

[२७] तच्छ्रेयस्त्व युक्तिमाह—शक्तिमान् हीति । निम्नस्थलवत इति, धत्वादेर............बलक्षणं निम्नादेः पांसुपूरणादिभिः शीतादेः कञ्चुकधारणादिभिश्च प्रतिकार्यत्वादिति भावः ।

[२८] एकदेशिमतमाह—देश इत्यादि ।

[२९] निम्नं जलं........स्वनुक्रियोरेव देशान्तरव्यतिरेकानुपघायित्वात् बलाबलस्य देशः श्रेयानित्यर्थः ।

[३०] एकदेश्यन्तरमतमाह––काल इत्यादि ।

[३१] काल (क) कौशिकयोरेव दिनरात्रिभेदेन बलाबलभेदादित्यर्थः ।

[३२] एषां सर्वेषां मतं निषेधति—नेतीति ।

[३३] परस्परा (र) साधका‡......दीनां शक्तौ सत्यामपि देशकालाभाव उप+देशकालसत्वेऽपि शक्त्यभावः कार्यकरणप्रतिबन्धकृदिति भावः । इति–§ देशकालबलाबलज्ञानमिति प्रकरणम् ।

यस्य तु... ज्ञातव्यबलाबलतयोद्दिष्टानां शक्त्यादीनां शक्ति-

---

* मध्यप्रतीकमिदमेकविंशतितमसूत्रस्य, नत्वादिप्रतीकम् ।

† डा. जौलीसम्पादितमूलपुस्तकेऽत्र 'काल' इति पदं नास्ति; विपरीत इत्येतावन्मात्र एव पाठः । मूलानुसारी युक्तश्चैष पाठो भाति ।

‡ अत्र कदाचित् 'परस्परसाधका हीति । शक्तिदेशादीनां' इत्यानुपूर्वीकः पाठो भवेत् ।

+ अत्र 'उप' इति पदमधिकं भाति ।

§ 'इति' इत्यात्मकं प्रतीकं डा. जौली. मूलपुस्तके नास्ति । तत्र 'शक्तिदेशकालाः' इत्येव पाठः । आदर्शपुस्तके इति संयुक्तः पाठो भवेत् ।

देशकालान्निरूप्यानन्तरं यात्राकालं निरूपयितुं सूत्रम्-यात्राकाल* इति। शत्रुं प्रति यानं यात्रा तस्याः काला कार्यसाधका उच्यन्त इत्यर्थः।

३४ तानाह—तैरभ्युच्चित इत्यादिना। तैरिति शक्तिदेशकालैरभ्युच्चितः परस्यातिशयवान् यायादित्यन्वयः। किंकृते (त्वे) त्यत्राह-तृतीयमित्यादि, मूलरक्षणादेर्गौरवलाघवाद्यानुगुण्येन स्वा†...... त्रिधा चतुर्धा वा विभज्य तस्य तृतीयं चतुर्थं वांशं मूलरक्षणार्थं निवेश्य मार्गशीर्षादिषु तिसृष्वन्यतमां यात्रां यायादित्यर्थः। शत्रुविषये सस्यवधमुष्टिघातकार्या‡भिर्यात्रा कर्त्तव्या, तत्र चतुर्भिर्मासैरेकैकभोगनिष्पत्तिसम्भवात् द्वादशमासात्मके वत्सरे भोगत्रयं+.... तत्र वर्षोप्तसस्यमहाफलं (ले) प्रभूतालेऽपि तदुपघातकरी मार्गशीर्षी प्रथममुक्ता।

३५ ३६ भोगफलतारतम्याच्छेषयोरवि (पि) क्रमः। दीर्घमध्यमभूस्वकालतया तासां वक्ष्यमाणत्वात् तदानुगुण्येनायं क्रम इति केचित्।

एवं चिकीर्षितं सस्यनिष्पन्नं हैमनि (न) श्च वीजावापरूपमुपहन्तुं ज्येष्ठामूलीयान्तु.......तृणं काष्ठोदकत्व§ चैऽयान्तु हेतुरेव नोक्त इत्यत्र कारणेन भाव्यम्। सत्यमयमत्राशयः, यथा वार्षिकसस्यभोगः प्रभूतः, न तथा शेषभा (भो) गौ। तेन मार्गशीर्ष्यां पूर्वं वार्षिकभोग्य (ग) स्याग्रहणात् तत्पूर्वस्य वासन्तिकस्याग्रहीतत्वेऽपि तस्य नातिप्रभूतत्वात् क्षयः स्यात्। वार्षिकात्तु प्रभूतमपि तदानीमगृहीतम्। तदिदमुक्तम्—क्षीण|| पुराणभक्तमगृहीतनवभक्ति (क) मिति।

---

* अत्र 'यात्राकालाश्च' इति मूलसूत्रपाठः। प्रतीकमपि 'यात्राकाला इति' इत्यात्मकं भवेत्।

† अत्र 'स्वबलं त्रिधा' इत्याद्यानुपूर्वीकः कदाचित्पाठो भवेत्।

‡ अत्र 'कार्यार्थिभिर्यात्रा' इति पाठो ऽर्थानुसारी भवेत्।

+ अत्र कदाचित् 'भोगत्रयं निष्पद्यते' इत्यानुपूर्वीकः पाठो भवेत्।

§ वाक्यमिदं विभ्रष्टपदवर्णत्वादस्पष्टार्थः प्रतीयते।

|| अत्र 'दक्षिणपुराण' इति डा. जौली.मूलपाठः।

चैत्र्यान्तु पूर्वगृहीतहैमनभोग*......प्रभूतत्वेन भक्तस्य (या) सम्भवे तृणकाष्ठोदकस्य एव तत्कालसम्भवी विशेष उक्तः । अमित्रं सस्यादिकञ्च उपहन्तव्यमित्यन्वयः । चैत्र्याममित्रविशेषणत्वेना-संस्कृतदुर्गत्वस्याग्रहणमु........नयने दुर्गादिसंस्कार.....येमात्, अथवानन्तरपूर्वोक्तस्य तस्यापेक्षितत्वानुषङ्ग इति द्रष्टव्यम् ।

३७ एवं परसिद्धिविघातानुगुण्येन यात्राकालानुक्त्वा यातव्यदेशानुगुण्येनाप्याह—अत्युष्णमिति । हिमेनोष्णस्याभिभवत्या...दिति† भावः । यवसस्य शैत्येनोत्पादयति, इन्धनस्य शैत्यपरिहारार्थं प्रागेव सम्पादनमिति, उदकस्य शेषानुपक्रमस्तदेति च हृदयम् । हेमन्ते यायादिति मार्गशीर्ष्यां यामी‡त्याशयः ।

३८ तुषारदुर्दिनमिति । नित्यशीकरवर्षदुर्दिनमित्यर्थः । अगाधं निम्नप्रायमिति, गभीरजलाशयबहुलत्वे इत्यर्थः । ग्रीष्मे यायादिति, ज्येष्ठामूलीयामित्यर्थः ।

३९ वर्षास्वप्रमाणनियमस्यापवादतयाह—स्वसैन्येत्यादि । यदा स्वसैन्यं वर्षयोधनक्षमं न तु परसैन्यं तदा वर्षत्यपि देशे यायादित्यर्थः ।

४० दीर्घमध्यकालनियममाह—मार्गशीर्ष+मित्यादि । वर्षास्वद-विष्टत्वेन व्यापारबाहुल्याप्रतिबन्धादिति भावः ।

४१ एवं मार्गशीर्ष्यां यात्रायां कालनियममुक्त्वा चैत्र्यामप्याह—चैत्रं+ वैशाखञ्च+ति । चैत्र (त्री) माह—ज्येष्ठामूलीयामिति, वर्षाणामनन्तरभावित्वेन मासद्वयमात्रस्यैव व्यापारावकाशत्वादिति भावः ।

एवं नियतकालयात्रास्तिस्रो विधाय परव्यसनोपाधिकत्वेनानियतकालां चतुर्थीमभिव्या§ह—उपोषिष्यन्नित्यादिना, उपसमीपं परमुपरुध्य वासं करिष्यन् परव्यसने चतुर्थी‖ यादिति । वक्ष्यति हि—'वर्षावासः परत्र चे'ति ( अधि. ९, अध्या. १, सू. ५३ ) ।

---

* कदाचिदत्र '०भोगस्य नितरां प्रभूतत्वेन' एवमानुपूर्वीकः पाठः स्यात् ।

† अत्र हि 'हिमेनोष्णस्याभिभवात् त्यागादिति भावः' इत्यर्थानुसारी पाठो भाति ।

‡ अत्र 'यात्रायामित्याशयः' इति पाठोऽर्थानुसारी भवेत् ।

+ अत्र 'मार्गशीर्षीं चैत्रीं वैशाखीं च' इति यथाक्रमं डा. जौली. मूलपाठः ।

§ अत्र 'चतुर्थीमप्याह' इति अर्थानुसारी पाठः स्यात् ।

‖ अत्र हि 'चतुर्थीं यायादिति' इति पाठोऽर्थानुसारी भाति ।

[42]व्यसनाभियानं कथंभूतमित्यत्राह—व्यसनाभियानमिति। षाड्गुण्ये विगृह्ययानमितिप्रकरणे यदा वा पश्येद्व्यसन (अधि. ७, अध्या० ४, सू. २६) मित्यादिग्रन्थेन विविच्याख्यातमथवोपोषिष्यन्निव ह्रस्वकालमिति पूर्वग्रन्थस्य शेषः। उषो दाहे परविषयं धक्ष्यन् ह्रस्वकालान् यायादित्यन्वयः। दाहमात्रस्य सुकरत्वेनाल्पकालसाध्यत्वादिति तन्न साधीयः, यात्रान्तरेष्वपि दाहस्य कार्यतया विशेषत्वेन कथनायोगादिति।

[43]ननु व्यसन एव परस्य यातव्यमिति स्थितौ चतुर्थ्यनवकाश इत्यत्राह--प्रायशश्चेति। आचार्याणामेवैतन्मतम्।

[44]अस्माकन्तु स्वशक्त्युपचये यातव्यमिति, व्यसनपक्षे दोषाभावे*—किं तत्............न्याशङ्क्य तत्र दोषमाह—(अ) नैकान्तिकत्वाद्व्यसनानामिति। परव्यसनमे†व परव्यसने यातव्यमेवेति नियमः, नान्य,(नाद्यः), परव्यसनाभावेपि स्वशक्त्युपचये यातस्य फलसिद्धेः। नापि द्वितीयः, परव्यसने सत्यपि स्वशक्त्यपचये फलासिद्धेः, स्वशक्त्युपचयान्वयव्यतिरेकानुविधायित्वात् फलस्य चेत्यर्थः।

[45]पक्षान्तरमाह—यदावेत्यादि। सामान्यतः स्वशक्त्यभ्युच्चयावस्था माभू‡त् परस्य कर्शनोच्छेदनानुगुण (णं) परस्योच्छक्त्युपचयो+ यदा स्यात् तदा यायादित्यर्थः।

[46]एवं यात्राया दैर्घ्याद्यानुगुण्येन कालनियममुक्त्वा स्वबलानामानुगुण्येनाप्याह—अत्युष्णेत्यादि। अत्युष्णे अत्युष्णाजनने उपक्षीणः पर्यवसितशक्तिः शीताद्यजनको यः कालः तस्मिन्नित्यर्थः। हस्तिबल

---

* अत्र कश्चन पाठांशो भ्रष्ट इति प्रतीयते।

† अत्र हि 'परव्यसन एव' इति पाठो भाति। अयम्भावः—परव्यसने एव यायादिति आद्यो नियमः, परव्यसने यातव्यमेवेति द्वितीयो नियमः, तत्राद्यं तावत्प्रतिषेधति—नाद्य इत्यादि। अत्रापि लेखकप्रमादवशात् नान्य इति पाठो जातः, नाद्यः इति तु भाति

‡ अत्रापि '०यावस्थायां परस्य' इत्यानुपूर्वीक एव पाठो ऽर्थानुसारी भाति।

+ अत्र 'परस्योच्छेदशक्त्यपचयः, इति पाठो ऽर्थानुसारी भाति। परस्य शत्रोश्च यदा अन्योच्छेदशक्तेरपचयः स्यात्तदेत्यर्थः।

प्राय इति, प्रभूतहस्तिबल इत्यर्थः। प्रभूतहस्तिबलो यायादिति पाठः। तत्र विसर्गपाठे* उष्णोपक्षीणो ग्रीष्मः तमतिक्रम्यान्यत्र कस्मिंश्चिदितो यायादित्यर्थो व्याख्येयः। तत्र च वक्ष्यमाणेन 'प्रभूतोदके वर्षति च हस्तिबलप्रायो यायादि' (४९) त्यनेन पौनरुक्त्यं स्यादिति तन्त्रयुक्तपाठः साधीयान्।

[४७] हस्तिनो हस्ती†त्यादि। नत्रा†प्रयाणे हेतुकथनादिति। अन्तः स्वेदा इति, बहिः—स्वेदानिर्गमाद्दर्शनेपि त्वगन्तर्गतस्वेदात् त्वग्दोषेण कुष्टेन युक्ताः स्युरित्यर्थः।

[४८] स्नानपानाभावादन्तर्दाहाच्चान्धाः स्युरित्याह—अनवगाहमाना इत्यादि। अन्तरपक्षान्तरादिति‡, अन्तस्तापादित्यर्थः।

[४९] वर्षति चेति, काले इति शेषः।

[५०] विपर्यये इति। जलोपघातरहितदेशकालयोरित्यर्थः। पराङ्गबलस्य देशभेदेन वर्षास्वपि यात्रा युक्तेत्याह—देशमित्यादि।

[५१] मरुप्रायम्—अल्पवर्षं अल्पपङ्कञ्च देशमित्यर्थः।

[५२] एवं सेनाङ्गद्वारा यात्राकालनियममुक्त्वा भदेन+ यात्राया दीर्घकालत्वादिनियममाह—समेत्यादिना। समत्वं-अध्वनो नियमेन अन्तररहितभूमित्वम्। विषमत्वं-तद्विपरीतत्वम्। निम्नत्वं-जलप्रायत्वम्। स्थलत्वमुन्नतप्रायत्वम्। भूतसत्वं-§अल्पयोजनादिप्रमाणत्वम्। दीर्घत्वं-बहुयोजनादिमत्त्वम्। एभिरध्वगतैर्धर्मैर्दीर्घकालत्वादिना यात्रा विभजेत्।...........ह्यल्पकालविषमे दीर्घकालेत्यादिनेयं...॥।

[५३] यात्राया दीर्घकालत्वाल्पकालत्वयोर्व्यापकं प्रयोजकान्तरमाह—सर्वा वेत्यादि। लघुनि कार्ये वा (या) तव्या यात्रास्सर्वा अपि

* अत्र कदाचित् 'तत्रोपसर्गपाठे' इति वा पाठो भवेत्।

† अत्र हि 'हस्तिनो हीत्यादि। तत्राप्रयाणे' इत्यादिपाठः सूत्रानुसारी युक्तश्च भाति

‡ 'अन्तरवक्षाराव' इति डा. जौली मूलपाठः। युक्तश्चैष पाठः।

+ कदाचिदत्र 'भेदेन' इति वा "समादिना' इति वा 'समादिभेदेन' इति वा पाठो भवेत्।

§ अत्र 'ह्रस्वत्वं' इति अर्थानुसारी युक्तः पाठः।

॥ विभ्रष्टपदवर्णत्वादस्पष्टार्था खल्वियं पंक्तिः।

गृह्···*···········काला: स्युर्वेत्यन्वयः । गुरुणि कार्ये सर्वा अपि दीर्घा (:) समविषमाद्यध्वविभागं विनेति, गुरुणि कार्ये केवलं न यात्रादैर्घ्यमेव किन्तु प्रावृषमप्यखिलां परविषये वासोऽपि स्यादित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्याय श्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अभियास्यत्कर्मणि नवमे ऽधिकरणे प्रथमोऽध्यायः ।

## ९ अधि., २ अध्या., १३७–१३९ प्रक.

सू.—बलोपादानकालाः सन्नाहगुणाः प्रतिबलकर्म च ।

एवं यात्राकालान्निरूप्य तदनन्तरं बलसमुदा (द्वा) नकालानां ज्ञातव्यबलाबलतया शत्वात्† तन्निरूपणार्थं सूत्रम्—बलोपादानकाला इति । द्दतादि‡षड्विधबलानां कार्यानुगुण्येन उपादानविनियोगकाल उच्यत इत्यर्थः ।

[1]तानाह—मौलभृतेत्यादिना । मूलं स्थानीयं तत्र भवं मौलम् । भृत्यंस्वीकृतं भृतम् । जनपदवध्यायुधीयगण (णः) श्रेणी । मित्रामित्राटविकान्तानाञ्च त्रयाणां बलानीति षड्विधानि बलानि, तेषां समुदा (द्वा) नस्य कार्यानुगुण्येन विनियोगस्य काल (ला) इति वक्ष्यन्त इति वाक्यशेषः ।

[2]तत्र मौलविनियोगमाह—मूलरक्षणादित्यादि । मूल (लं) स्थानीयं तस्य रक्षणात् रक्षणकार्यपर्याप्तादधिकं मूल्यापंबल+मिति वा ।

[3]अन्यापापयुक्ताः§—दूष्यबाहुलमत्यावापः तद्युक्ता मौलपुरुषा

* अत्र कदाचित् 'गृह्यमाणह्रस्वकालाः' इत्यानुपूर्वीकः पाठो भवेत् ।

† अत्र 'बलाबलतया ज्ञातव्यत्वात्' इति वा 'ज्ञातव्यबलाबलतया सत्वात्' इति वा कदाचित् पाठो भवेत् ।

‡ अत्र 'भृतादि' इति 'मौलभृतादि' इति वा पाठः स्यात् ।

\+ अत्र 'मौलबलमिति' इति युक्तः पाठो भाति ।

§ 'अत्यावापयुक्ताः' इति मूलसूत्रानुसारी समीचीनः पाठः ।

मयि (?) प्रायशो विकारं स्थानीये कुर्युरिति हेतोर्वा मौलबलमादाय यायादित्यर्थः ।

[4]बहुलेत्यादि । शत्रोर्मूलबलं प्रवीरबलं वा बहु* बलं अतो व्यायामेन प्रकाशयुद्धेन योद्धव्यम्, तत्क्षमञ्च मूलबलमेवेत्यतो हेतोः ।

[5]प्रकृष्ट इत्यादि । प्रकृष्टो दीर्घो†........वा कुर्यात् कालो वा, तेन क्षयव्ययसाध्यमिदं कार्यं तत्सहञ्च मौलबलमेवेत्यतो वा हेतोः ।

[6]बहुलात् वक्तव्यादिसम्पातं‡ परदूतागमनं बहुलानामनुरक्तानां दूतानामागमने सति तेषामुपजापादिपरत्वात् बलान्तराण्यपि उपजाप्यानि स्युः, मौलबलन्तु न तथेत्यतो वा हेतोः । बलक्षये चेति, षड्विधानामपि बलानां बलक्षयः शक्तिक्षयो युग्यपुरुषापचयरूपो वेत्यर्थः, तदेतानि मान्यत्वादन्यत्रापसरेयुः, मौलन्तु न त्यजेदित्यतो वा हेतोः । एवमुक्तहेतुयुक्ता एते मौलबलोपयोगकाला इत्याह— इति मौलेति ।

[7]अथ भू (भृ) तकालानाह—प्रभूतमित्यादि । भू (भृ) तबलं मे प्रभूतं अल्पञ्च मूलरक्षणातिरिक्तमूलबलमित्यतो वा हेतोः ।

[8][9]परस्येत्यादि । शत्रोरल्पं वा+.......रक्तं वा मूलबलमिति । अथवा परस्य सर्वमपि सैन्यं सम्भूय कृच्छ्रप्रायं अतो मन्त्रेण तुष्णींयुद्धेन योद्धव्यं अतो भृतबलेनैव सुसाधमित्येनोपा .......।

[10].........§देश इत्यादि । भू (ह्र) स्वः अदीर्घो देशो मार्गः कालः कार्यशिरोधापयिकः, अतएवाल्प||क्षयव्ययसाध्यः, अल्पौ क्षयव्ययावस्येति स तथा अतो वा हेतोः ।

[11]अल्पसंघात ¶मित्यादि । अल्पसंवादः तयाध्य (न्य) दूताद्यागमनं यस्य तत् तथा, तेनागाम्युपजापाभाव उक्तः । शान्तोपजाप-

---

* अत्र 'बहुलबलम्' इत्यर्थानुसारी युक्तः पाठः ।

† अत्र कदाचित् 'दीर्घो ऽध्वा वा' इत्यानुपूर्वीकः पाठो भवेत् ।

‡ मूलसूत्रपाठस्तु 'बहुलानुरक्तसंपादिते' इति वर्त्तते ।

+ अत्र कदाचित् '०रल्पं वा तदतिरिक्तं वा' इत्यानुपूर्वीकः पाठो भवेत् ।

§ अत्र कदाचित् 'ह्रस्वो देश' इत्यानुपूर्वीकः पाठो भवेत् ।

|| अत्र 'तनुक्षयव्यय' इति डा. जौली. मूलपाटः ।

¶ डा. जौलीसम्पादितपुस्तके 'अल्पभापं' इति मूलसूत्रपाठः ।

मित्यनेन प्रवृत्तोपजापप्रशमनं, अत एव विश्वास्यं मे सैन्यं, अतो भृतज (ब) लं नाशङ्कनीयमित्यतो वा हेतोः।

[१२]परस्याल्प इत्यादि। परस्य प्रसारः सर्वतो वा नाजीव एवोल्प एव विहन्तव्यः, अतोल्पयत्नसाध्य इत्यतो वा हेतोरित्यर्थः।

[१३]श्रेणीबलकालानाह—प्रभूतं मे श्रेणीत्यादि। श्रेणीबलं मे प्रभूततया मूल स्थानीये रक्षणार्थं यात्रायां यातव्याभियोगार्थं च शक्यं निवेशयितुमिति वा।

[१४]ह्रस्वः देशतः कालतश्चानतिदीर्घः। प्रवासः प्रयाणमिति वा। प्रतियोद्धा शत्रुः श्रेणीबलः अहमपि तं श्रेणीबलेनैव तुल्यगुणदोषेण प्रतियोधयिष्यामीति वा, परो मन्त्रव्यायामाभ्यां मन्त्रेण तूष्णीं युद्धेन व्यायामेन प्रकाशयुद्धेन चोभाभ्यां प्रतियोद्धुकामः, न तु प्रकाशयुद्धेनैवेति वा। दण्डबलव्यवहारो* चेति, दण्डोपनत इतिवत् दण्डभयादस्मै परप्रहितेन बलेन कर्तव्यायोधनव्यवहार इत्यतो बलकाला इत्यर्थः।

[१५]मित्रबलकालानाह—प्रभूतं मे मित्र† मित्यादि। मित्रबलं प्रभूतत्वान्मूलयात्रयोर्द्वयोरपि कर्त्तुं शक्यमिति। देशतः कालतश्चाल्पं प्रयाणमिति। ततश्च न क्षयव्ययबाहुल्यमिति भावः। व्यायामयुद्धञ्च मन्त्रयुद्धात् बहुतरतमः, प्रकाशयुद्धे मित्रबलं पुरस्कुर्यादिति भावः।

[१६]मित्रबलेन वेति। पूर्वं स्वबलेन परकीयाटविकबलं वा परनगरस्थितं परस्यासारं मित्रबलं योधयित्वा पश्चात्स्वबलेन योधयिष्यामीति वा हेतोरित्यर्थः।

[१७] [१८]मित्रसाधारणमित्यादि। मम यत्कार्यं भूम्यनन्तरकर्शनरूपं तन्मित्रस्यापि तुल्यमिति वा मे कार्यसिद्धिर्मित्राधीनेति।

[१९]मित्रमासन्नमाप्तं वानुग्राह्यं मयाप्यापदि साहाय्यदानयोग्यमिति वा दूष्यबलं वास्य युद्धे शत्रुणा घातयिष्यामीत्यतो रीत्येति मित्रबलं वा परनगरस्थितं वा हेतोरित्येते मित्र च (ब) लकाला इत्यर्थः।

---

* अत्र 'व्यवहारश्चेति' इति वा 'व्यवहारो वेति' इति वा समीचीनः पाठो भवेत्।

† अत्र 'मित्रबलं' इति डा. जौली. मूलपाठः।

[20][21]शत्रुबलकालानाह--प्रभूतं ममामित्रबलमित्यादि* । मम दण्ड-भयात् साहाय्यायागतं अमित्रबलं प्रभूतं तेन ..ग..†स्थं शत्रुबलं तदीयान‡...............वा योधयिष्यामीति वा, तत्र च द्वयोः शत्रुबलयोः युद्धेऽन्यतरभङ्गो ( ङ्गे ) ऽस्मदभिमतसिद्धिरेव स्यात्, यथा वराहयोः कलहे शुनो वराहस्य वाऽन्यतरघाते श्वि+..................सिद्धिः तस्योभयभक्तत्वात्तथेत्यर्थः ।

[22]आसाराणामिति । मित्रबलानामका§ नाश्च ये कण्टकभूतास्तेषां मर्दनं दंशनं यत्किञ्चद्व्याजीकृत्य कुर्यादित्य‖......वा हेतोः ।

[23]अत्युपचितं वेति । प्रवृद्धं शत्रुबलं तदिदं मदधिष्ठितं कदाचित्कुपितं स्यादतो मत्पार्श्वे एवेदं वासयेयमिति । नन्वरिबलासक्तिरभ्यन्तरकोपहेतुः स्यादित्यत्राह—अन्यत्रेति, मन्त्रिपुरोहितसेनापति युवराजानामन्यतरकोपोऽभ्यन्तरकोपः, तच्छङ्कायां न शत्रुबलासक्तिः कार्येत्यर्थः । शत्रुयुद्धेत्यादि, यदा शत्रोः स्वशत्रुभिः सह युद्धकालः तदा तेन शत्रुबलेन यातव्यं न योधयिष्यामि किन्तु तद्युद्धे समाप्ते पश्चात् तदपेक्षिष्य इत्यर्थः ।

[24]अमित्रबलकाला...¶...बलानामप्यतिदिशति—तैरित्यादि ✳ । व्याख्याता× इति, यथा प्राभूत्यादयः शत्रुबलोपादानहेतव उक्ताः तथाटविकबलस्यापि त एव हेतव इत्यर्थः ।

[25]अटवीबलकाले विशिष्या☬ह–मार्गदेशिक✠मित्यादिना । पर-

* अत्र 'प्रभूतं मे शत्रुबलं' इति डा. जौली. मूलपाठः ।

† 'तेन नगरस्थं' इति पाठोऽत्र कदाचित्स्यात् ।

‡ अत्र कदाचित् 'तदीयानटवीस्थितान् वा' इत्यानुपूर्वीकः पाठः स्यात् ।

+ अत्र हि '०घाते ऽपि श्वपचस्य कार्यसिद्धिः' इति पाठोऽर्थानुसारित्वात्संभवति ।

§ कदाचिदत्र '०बलानामटवीनाश्च' इति पाठः स्यात् ।

‖ अत्र '०दित्यतो वा' इति पाठो भवेत् ।

¶ अत्रहि '०कालानेवाटवीबला०' इत्यानुपूर्वीकः पाठो भवेत् ।

✳ अत्र 'तैः' इत्यस्य स्थाने 'तेन' इति डा. जौली. मूलपाठः ।

× डा. जौलीसम्पादितमूलपुस्तके 'व्याख्यात' इति एकवचनान्त एव पाठो दृश्यते ।

☬ अत्र 'विशेषमाह' इति वा पाठः स्यात् ।

✠ 'मार्गदेशिकम्' इति डा. जौली. मूलपाठः ।

विषयं प्रति निरपायमार्गोपदेशिकमिति। शत्रोर्भूमौ युद्धक्षमं तद्भूमियोग्यगजादिसेनाङ्गप्राचुर्यादिति । अरियुद्धप्रतिलोमामिति, अरिणा सह युद्धे तदभिभावकामिति वा । अटवीबलप्रायः शत्रुर्वेति, यथा* .........फलं.........फलान्तरेणाहन्यमानं तुल्यधर्मत्वात् तेनैव सह नश्यति, तथाटविकबलस्यापि आटविकान्तरेण समुद्राङ्के (त्त) नैव सह विनाशः स्यादिति वा । अल्पः प्रसार इति, सर्वे तेनावनाजीवः प्रसारः स तु स्वल्पत्वात् सुखमिति वा यः सचाटविकबलादेव निर्वदेदित्यतो वा हेतोः । इत्यटवीबलोपादानकाला इति ।

[२६]एवं मौलाद्याटविकबलपर्यन्तस्य षड्विधस्य बलस्योपादानकालानुक्त्वा सप्तममौत्साहिकाख्यं बलमप्युपादेयमित्याह—सैन्यमनेकमित्यादिना। सैन्यमिति, एकोपनिबद्धकरहितं। अनेकस्थमिति†, नानादेशवर्त्ति। उक्तमनुक्तं वेति, राजाद्यादिष्टमनादिष्टं वेत्यर्थः। यदेवंभूतं स्वेच्छयैव परकोशजनपदादिविलुण्ठनार्थं समुदितं भवेत् तदौत्साहिकाख्यं परभञ्जनलक्षणयोत्साहप्रभवत्वादित्यर्थः । तस्य भेद्याभेद्याभ्यां द्वैविध्यमाह—अभक्तेत्यादि, अभक्तं दैवसिकतण्डुलायकादि; वेतनं वार्षिकहिरण्यादि । (भाभि ?) विलोप (म) वृष्टिप्रतापकरमिति, फलोवः चर‡ विषयलुण्ठनम्; वृष्टिर्दुर्गादिकर्मकरणम्; प्रतापः राजाज्ञाप्रवर्त्तनं, एतानि करोतीति । एतच्च परेषां भेद्योग्यम्। तद्योग्यन्तु देशतो जातितः क्रियाशिल्पतो यावत्तुल्यम्, अत एव संहतं मिथः क्लिष्टम् । महदिति, प्रभूतसंघातरूपम् । एवं द्विधौत्साहिकमिति । एते सप्त बलोपादानकाला इति व्याख्याता इति शेषः।

[२७]एषु सप्तसु अमित्राग+.........बलयोर्भृ(भृ)तौ विशेषमाह—तेषामिति। कुप्यं वस्त्रकांस्यलोहादि तद्भू (भृ) तम् । विलोपह

* अत्र हि 'यथा बिल्वफलं बिल्वफलान्तरेण' इति पाठो भवेत्।

† 'अनेकजातीयस्थम्' इति डा. जौली. मूलपाठः।

‡ अत्र कदाचित् 'विलोपः (म) परविषय०' इत्यानुपूर्वीकः समञ्जसः पाठो भवेत्।

+ अत्र हि 'अमित्राटवीबलयोर्भृतौ' इत्यानुपूर्वीकः पाठो भाति।

( भृ ) तमिति, विलोपः परविषयादिलुण्ठनद्रव्यं तद् भू ( भृ ) तमिति । उपसंहरति--इति बलोपादानकाला इति, व्याख्याता इति शेषः ।

[२८] एवं साहाय्यार्थमागतस्य शत्रुबलस्य भृत्याद्यप्रदानेनो ( ना ) पचयकारणमुक्त्वा तस्य युद्धावसरे तद्बलासन्निधानेकप्रकारैस्तद्वैयर्थ्यापादनमाह—अमित्रस्य वेति । शत्रोर्बलोपादानकाले प्राप्त तत्स्यात् ( तस्य ) सहायतया पूर्वाव (?) गतमे ( म ) वगृह्णीयात् न तदानीं विसृजेदित्यर्थः ।

[२९] लाभादिना प्रलोभ्य कार्यान्तरे वा प्रेषयेदित्यत्राह*—अन्यत्रेति ।

[३०] [३१] विक्षिप्तं वेति । ततो विप्रकीर्णं वा वासयेत् ।—अफलं वा कुर्यादिति । शत्रोर्दण्डादानार्थं पणितं द्रव्यं न दद्यादित्यर्थः । अथवा शत्रुबलं कुप्यादीनां भरणीयमिति प्रागुक्तं, सम्प्रति भृतिमेव दद्यादिति पक्षान्तरमुक्तमिति ग्राह्यम् † ।

[३२] काले वेति । बलसमुद्दानकाले निवृत्ते विसृजेदित्यर्थः ।

[३३] एवमात्मनो बलसमुद्दानमुक्त्वा परस्यैतदुपायैः पार्ष्णिग्राहादिभिः घातयेदित्याह—परस्य वेति‡ ।

[३४] सम्पादयेदिति, परकृतप्रशमनादिनेति शेषः ।

एवं मौलादीनामौत्साहिकान्तानां सप्तानां बन्धा ( ला ) नामुपादानकालानुक्त्वा तेषामेवान्योन्यतः श्रेयस्त्वादिप्रतिपादनार्थं सूत्रम्—सन्नाहगुणाश्चेति । सन्नाह उद्योगः, तस्य गुणाः श्रेयस्त्वप्रकाराः, त एवोच्यन्ते बलसमुद्दानान्तर्भूतत्वादिति भावः ।

[३५] तत्र मौलादिषु पूर्वपूर्वश्रेयस्त्वं प्रतिजानीते—पूर्वं पूर्वश्चेति । सन्नाहयितुमिति, युद्धे प्रवर्त्तयितुम् । श्रेय इति, कार्यसाधकमित्यर्थः ।

[३६] पूर्वपूर्वस्योत्तरोत्तरश्रेयस्त्वं..........पुरस्कारेण प्रतिपाद-

---

* अत्र 'प्रेषयेदित्याह' इति पाठो युक्तो भवेत् ।

† अनयोः ( ३०, ३१ ) सूत्रयोः स्थानविपर्ययः समजनीति प्रतीयते । जौली सम्पादितमूलपुस्तके विक्षिप्तं वेति एकत्रिंशत्तमं सूत्रम्, अफलं वा कुर्यादितित्रिंशत्तमञ्च । आदर्शपुस्तकस्थिते तद्विपर्यये कारणन्तु सुधिय एव विभावयन्तु ।

‡ 'परस्य च' इति डा. जौली. मूलपाठः ।

याति—तद्भावेत्यादिना। तस्मिन्त्सति भावादसति चाभावादित्यर्थः। नित्यसत्कारानुरागाप्ये ( च्चे ) ति*, स्वामिनो मौलेषु सत्कारस्य मौलानां स्वाम्यनुरागस्य चानागम†.........यित्वादित्यर्थः। न चेदं भू ( भृ ) तादिष्विति भावः।

[37]नित्यानन्तरमित्यादि। नित्यानन्तरमिति, अव्यवहितत्वात्सदा सन्निहितम्। क्षिप्रोत्थायीति, अवेक्षणदशायामेव सद्यः सज्य ( ज्ज ) मित्यर्थः। वश्यं विधेयम्। अतः श्रेणीबलादिदं श्रेय इत्यर्थः।

[38]जानपदमित्यादि। जानपदमिति, आसन्नाभिमानवच्चेति भावः। एकार्थेनोपगतमिति‡, यदुद्देशेनैकः प्रवर्त्तते तत्र सर्वोऽपीति अन्योन्यतः सङ्घातत्वेनैकप्रयोजनमित्यर्थः। मित्रबलस्य त्वेकार्थोपगतत्वं वक्ष्यमाणं नान्योन्यतः, किन्तु मित्रस्य विजिगीषुणा सहेति महान् भेदः। तुल्यसंघर्षेत्यादि, सङ्घर्षः स्पर्धा, अमर्षः क्रोधः, सिद्धिर्विजयादिः, लाभो नैमित्तिकं फलम्, येन सहैकस्य सङ्घर्षादिः तेन सर्वेषामपीति सङ्घवृत्तितया तुल्यं सङ्घर्षादित्वं सर्वसाधारणसिद्धिलाभत्वञ्चेति भावः।

[39]अपरिमितेत्यादि। शत्रुबलं हि दीर्घह्रस्वादिदेशस्य+......... च नियमेन साहाय्यं कुर्यात्, मित्रबलन्तु सर्वत्र सर्वदा वेत्यर्थः। एकार्थोपगमाच्चेति, विजिगीषोः प्रयोजनं मित्रस्यापि तुल्यमेवेत्यर्थः।

[40]आर्याधिष्ठितत्वादिति§। आर्यस्य विश्वास्यत्वात्तदधिष्ठितस्य श्रेयस्त्वमिति ग्राह्यम्।

[41]तदुभयमिति। अनन्तरोक्तममित्रबलमाटविकबलञ्च द्वयम्। विलोपार्थमिति, विलोपः परविषयलुण्ठनं तदर्थं युद्धार्थम्।

[42]अत्र हेतुमाह—अविलोप इत्यादि। अविलोपे विलोपव्यतिरिक्ते युद्धादिकार्ये स्वव्यसनापत्तौ ताभ्यामन्तर्भेदः स्यादित्यर्थः।

* अत्र 'नित्यसंस्कारानुगमाच्च' इति डा. जौली. मूलपाठः।

† अत्र हि '०गमापायित्वा०' इत्यानुपूर्वीकः पाठो भवेत्।

‡ अत्र 'एकार्थोपगतं' इति डा. जौली. मूलपाठः।

+ अत्र 'कालस्य' इति पाठांशस्त्रुटितो भाति।

§ 'आर्याधिष्ठितम्' इति डा. जौली. मूलपाठः।

[४३]एवं मौलादिभेदेन बलानां श्रेयस्त्वं निरूप्य ब्राह्मण्यादिजाति द्वारापि तन्निरूपयति—ब्राह्मणेत्यादिना। तेजःप्रधानादित्यादि*, सत्य सन्धत्वकृतज्ञत्वादिरूपः तेजः, तस्य च ब्राह्मणादिषु पूर्वः प्रकर्ष-स्तस्मादित्यर्थः।

[४४]एतन्निषेधति—नेतीति।

[४५]प्रणिपातेनेत्यादि। अभिहारयेदिति, ब्राह्मणान् प्रणिपातेन वशी-कुर्यात् शत्रुरित्यर्थः।

[४७]बहुलसारमिति। बहुशूरम्। सन्नाहगुणा इति प्रकरणम्।

एवं बलानां श्रेयस्त्वं निरूप्य..............सन्नाहगुणप्रकरण-मुक्त्वा परबलमभिभवसामर्थ्यमेषामभिधातुं सूत्रम्—प्रतिबल-कर्मेति। परबलस्याभिभवशब्दं यद्बलं तत्प्रतिबलं तस्य कारणप्रकार उच्यत इत्यर्थः।

[४८]प्रतिबलस्य बलापेक्षानिरूपणत्वात् तन्निरूपणप्रकारमाह—यस्मादित्यादिना†। एवं बल इति, एवमिति बुद्धिस्थप्रकारविशेष-कथनम्, मौलत्वादिना वा ब्राह्मणत्वादिना वा गजाद्यन्यतमाङ्ग-भूयिष्ठत्वादिना वा ज्ञातस्य परबलस्य अभिभवनं शक्तस्य बलस्य समुद्दानं कुर्यादित्यर्थः। पर एवम्भूतबलो यस्मात्तस्यैवंभूतं बलं अभिभवनशक्तिमिति बुध्वेति योजना। बलसमुद्दानं कुर्यादिति वचनं शक्यादिषु आपदन्तेषु ससाहसगुणानां प्रतिबलकर्मणश्चानुद्दिष्टबले-नाप्रकृतत्वशङ्कामन्तर्भावेति निरसितुमिति ग्राह्यम्।

[४९]प्रतिबलान्यभिदधत् तत्र रथानामधिष्ठातृबुद्धिमात्राधीना प्रवृत्तिः, हस्तिनान्तु स्वबुद्ध्यापीति प्रथमं तद्बलस्य प्रतिबलमाह—हस्तियन्त्रेत्यादिना। अत्र समस्तपदान्तास्थितेन प्रशंसामतुपा प्रशस्त-हस्त्यादिमदित्यर्थः सिद्ध्येत्। यन्त्राणि..............दीनि। अथवा हस्तियन्त्रमिति, अट्टास्त्युपरिक्लृप्तं‡ जातघ्न्यादियन्त्रं तद्वदित्येकं

* डा. जौली. मूलपुस्तके 'तेजः प्राधान्यात्' इति पाठो वर्त्तते।

† अत्र 'तस्मात्' इति डा. जौली मूलपाठः।

‡ कदाचिदत्र 'हस्त्युपरिक्लृप्तं जातघ्न्यादियन्त्रं' इत्याकारकः पाठो भवेत्।

विशेषणम् । शकटगर्भवदिति, शकटान्ये गर्भो मध्यं तद्वदिति । वक्ष्यति हि:—

"खरोष्ट्रशकटानां वा गर्भमल्पगजोरणः" इति ।

कुन्ता दण्डाः, उक्तं हि:—

"हस्ताः सप्तोत्तमाः कुन्तः*..........स्तश्चैव मध्यमः ।
कनिष्ठः पञ्चहस्तस्तु दण्डप्रासश्च द्व्यङ्गुलः" ॥

स द्विविधः—सर्वलोहः, काष्ठदण्डश्चेति । हाटकं† त्रिकण्टकं कुन्तप्रमाणम्, वेणवो दीर्घप्रतोदाः, शल्यः सर्वतोऽयःशङ्कुमान् लोहदण्डः, एभिर्हस्तिनिपातकमित्यर्थः ।

[५०] रथप्रतिबलमाह—तदेवेति । पाषाणाः महाशिलाः, लगुडाः ह्रस्वगदाः तमावरणवत अङ्कुशा दीर्घलोहमयाः, सृणयः कचग्राहिण्यो दीर्घफलाः साङ्कुशा वेणवो रथानाम् । हस्तियन्त्रादिभिः प्रतिघातः कुन्तादिभिर्विमुखीभावश्च स्यादिति भावः ।

[५१] तदेवेति । रथप्रतिबलमेवाश्वानां प्रतिबलमिति केचित् । तदेवेति हस्तिबलं परामृश्यते, अश्वानां हस्तिभिरुक्तमित्याहुः ।

[५२] एवमायुधद्वारा प्रतिबलमुक्त्वा सन्नाहभावाभावाभ्यां चतुरङ्गस्यापि प्रतिबलत्वमाह—वर्मिण इत्यादिना‡। पत्तयश्चेति, आवरणीत+ इत्यनुषङ्गकरणार्थश्चकारः§, अतः सन्नद्धस्य सन्नद्धं प्रतिबलमिति वचनलाघवमुपेक्ष्य हस्त्याद्यङ्गानामेकैकश उपादानं असन्नद्धस्य हस्तिबलस्य सन्नद्धहस्तिबलमेव प्रतिबलमित्यादिनियमविवक्षयेति ग्राह्यम् ।

[५३] बलसमुद्दानमेवाध्यायार्थ इति ज्ञापयन्नुपसंहरति—एवमित्यादिना । अत्रैवं बलसमुद्दानमित्यनेन सन्नाहगुणप्रतिबलकर्मणोरपि अत्रैवान्तर्भावं द्योतयति । परसैन्यनिवारणमित्यनेन प्रतिबलभावसा-

---

* अत्र कदाचित् '॰त्तमाः कुन्ताः षड्हस्तश्चैव' इत्याद्यानुपूर्वीकः पाठः स्यात् ।

† 'खर्वटक' इति डा. जौली. मूलपाठः ।

‡ 'वर्मिणः' इति पदं जौली सम्पादितमूलपुस्तके एकपञ्चाशत्तमसूत्रस्यैवाङ्गभूतम् ।

\+ अत्र 'आवरणिनः' इति मूलसूत्रानुसारी पाठो भाति ।

§ डा. जौली सम्पादितमूलपुस्तके ऽत्रसूत्रे चकारो न दृश्यते ।

मर्थ्यम् । विभवेन स्वसैन्यानामित्यनेन मौलभृत्यादिप्राभृत्यानुगुण्यं सूचयति । अङ्गविकल्प इत्यनेन हस्त्याद्यङ्गप्राभृत्याद्यानुगुण्यमिति ज्ञापयतीति ग्राह्यम् । योजना स्फुटैव ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अभियास्यत्कर्मणि नवमे ऽधिकरणे द्वितीयोऽध्यायः ।

## ९ अधि., ३ अध्या., १४०–१४१ प्रक.

सू. पश्चात्कोपचिन्ता, बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारश्च ।

एवं बलसमुद्दानमुक्त्वा यास्यतो विजिगीषोः पश्चात्कोपो यदि स्यात् तदा किं कर्त्तव्यमिति विचारार्थं सूत्रम्—पश्चात्कोपचिन्तेति । यातुं प्रवृत्तस्य विजिगीषोः पश्चाज्जनपदादौ पार्ष्णिग्राहाटविकदूष्यादि- कोपो दाहविलोपादि तस्य पुरस्ताल्लाभात् गौरवादिविचारः क्रियत इत्यर्थः ।

[1] पश्चात्कोपपुरस्ताल्लाभयोः गौरवादिकं यानार्थं विमृशति—अल्प इत्यादिना ।

[2] निश्चयमाह—अल्प इत्यादि ।

[3] तत्र युक्तिमाह—अल्पमित्यादि । दूष्या राजापग्रहेण चरन्तो मुख्याः । सर्वत इति, पश्चात् पार्ष्णिग्रहादौ जातमपि कोपं पार्श्वयोः पुरस्ताच्च वर्धयन्तीत्यर्थः ।

[4] प्रकृतिकोपो वेति । अभ्यन्तरकोपो वेत्यर्थः । एवञ्च पुरस्ताल्लाभ एव न स्यात्, यदि कथञ्चित्स्यात् तदा महानप्ययं तत्कोपप्रशमनार्थं भृत्यमित्रादिषु क्षयव्ययातिरिक्तो न स्यादित्याह—लब्धमपीति ।

[5] एवम्भूत इति । पश्चात्कोपे जाते वर्धिते चेत्यर्थः । युक्तिमुक्त्वा याननिषेधमुपसंहरति—तस्मादिति, याने (न) कार्येषु पुरस्ताल्लाभस्य सिद्धिपक्षांशा एकोन................सहस्रं, असिद्धिपक्षांशस्त्वेक एव..............यानमेव पश्चात्कोपरूपानर्थागमाभावसन्देहे ऽपि प्रवर्त्तितव्यम्, अनर्थसन्देहे तु निवर्त्तितव्यमितिन्याययोरेकविषय- तया समुपनिपाते पश्चादन्यायस्यैव बलीयस्त्वादित्याशयः ।

पश्चात्कोपरूपो ऽनर्थस्तावच्छतक्रियतया ऽल्पयोगित्वादल्पः पुरस्ताल्लाभाभावस्तु सहस्रक्रियतया ततो दशगुणाधिकाल्पत्वयोगादल्पतरः । एवञ्च याने प्रवर्त्तितव्यमेवेति प्राप्ते सति तन्निषेधति—न यायादिति ।

[६]नेदमुपपद्यतेदं सर्वलोकसिद्धत्वादित्याह—सूचीमुखा हीति। अल्पोपक्रमा हीत्यर्थः । केचिदिमं ग्रन्थमन्यथाप्यपेक्षन्ते-सहस्रैकीया इति, पुरस्ताल्लाभस्सहस्रं तस्यायोगो विनाशः एकश्चेति जिते न यायादिति । एवं शतं पुरस्ताल्लाभः प्रसाद्यते पश्चादेकः कोप्यत इति तत्र हेतुमाह..........।

[७-८]..........तर्हि पश्चात्कोपे क्रियाननिवृत्तिरेवात्र नेत्याह—पश्चात्कोप इति । पश्चात्कोपेसति राजा स्वयमप्रयातः सामाद्युपायैः तं प्रतिकूलात् पुरस्ताल्लाभार्थन्तु सेनापतियुवराजयोरन्यतरं दण्डस्य नेतारं कृत्वा तमपि लभेतेत्यर्थः ।

[९]विजिगीषुर्बलवांश्चेत् पश्चात्कोपप्रशमनार्थं बलैकदेशं पश्चान्निवेश्य स्वयमेव यायादित्याह—बलवान् राजेति । पश्चात्कोपावग्रहसमर्थ इति, अवग्रहः प्रतिविधानम् ।

[१०]एवं पार्ष्णिग्राहप्रतिविधानमुक्त्वा ऽभ्यन्तरकोपशङ्कायामाह-अभ्यन्तरेत्यादि । 'मन्त्रिपुरोहितसेनापतियुवराजानामन्यतरकोपो ऽभ्यन्तरकोपः' इत्यग्रे ( सू. १३ ) वक्ष्यति । तच्छङ्कायां शङ्कितान् सम्भावितकोपान् स्वयमादाय यायात्, स्वसन्निधिना तेषां कोपस्याशक्यत्वादिति भावः ।

[११]बाह्येत्यादि । 'राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपो बाह्यकोपः' इति ( सू. २६ ) वक्ष्यति । तच्छङ्कायां तेषां पुत्रान् दारांश्चाभ्यन्तरप्रकृतिहस्तगतान् कृत्वेति यायादित्यागामिना सम्बन्धः। अभ्यन्तरकोपस्य पापीयस्त्वात् पुनस्तत्प्रतिविधानार्थमाह—शून्यपालमित्यादि, शून्यपालो ऽत्र स्वप्रयाणे स्थानीयरक्षकस्तम् । अनेकबलवर्गमिति, परोपजापपरिहारार्थं मौल भृ (भृ) तादिवर्गेष्वनेकवर्गबलसन्निहितम् । अनेकमुख्यञ्चेति, अनेकबलाध्यक्षयुक्तञ्चेत्यर्थः ।

१२आसन्नाभ्यन्तरकोपः किं करिष्यतीत्यत्राह—अहिभयादित्यादि* । अहेरासक्तिरेव भयहेतुरितिन्यायादित्यर्थः ।

१३केषां कोप आभ्यन्तर इत्यत्र परिभाषामाह—मन्त्रीत्यादि ।

१४तत्परिहारप्रकारमाह—तमित्यादि । तत्कोपो यः स्वदोषाद्वा तदपराधाद्वा स्यादिति विकल्पाभिप्रायेणाद्ये तावदाह–तमात्मदोषेत्यादि, अर्थलोभादिजं तद्दानादिना प्रतिकुर्यादित्यर्थः । द्वितीये त्वाह–परशक्त्यपराधवशेन वेति, परस्य मन्त्रा (न्त्र्या) द्यन्यतमस्य शक्तिरर्थदण्डादियोग्यता वापराधस्तत्कृतराजविरुद्धाचरणादिर्वा यायात् तदनुगुणं प्रतिविदध्यादित्यर्थः । साधयेदिति,†..........दित्यर्थः ।

१५पुरोहिते ऽप्यपराधप्रसक्तं वधादिकं निषेधति—महापराधेऽपीति । संरोधनमपस्रावणं वा सिद्धिरिति, बन्धनं देशान्निष्कासनं वा दण्ड इत्यर्थः ।

१६निग्रह इति वधः । राजसन्तत्युच्छेदभयादाह—गुणवतीति, निर्गुणस्यासङ्कल्पत्वादिति भावः ।

१७पुरोहितस्य दण्डं मन्त्रिणि युवराजस्य दण्डं सेनापतौ चातिदिशति—ताभ्यामिति ।

१८प्रकृतस्याभ्यन्तरकोपस्यैव प्रभेदमाह—पुत्रमित्यादिना । पुत्रादिष्वन्यतमो यदा राज्यग्रहणमिच्छेत् तदा तं‡......ल्यमुत्साहेन नतु विक्रमेण साधयेत् प्रशमयेत् ।

१९उत्साहशक्तौ तत्परिगृहीतस्य भूम्यादेरनुवर्त्तनेनाभ्युपगमेन सिद्धिकर्मणा च साधयेत्, अन्यथा शत्रुणा सह (सहायं ?) सन्दध्यादिति भयादित्यर्थः । कुल्यान्तरेभ्यो विमर्शेभ्यो भूमिदानादिभिर्निर्भयी कुर्यादित्याह—अन्येत्यादिना ।

---

* डा. जौलीसम्पादितमूलपुस्तके 'अहिभयादिति' प्रतीकमत्र सर्वथापि नोपलभ्यते । तत्र 'अभ्यन्तरकोपो बाह्यकोपात्पापीयानित्युक्तं पुरस्तात्' इत्येतावत्सूत्रं वर्त्तते । पुरस्ताच्च अष्टमाधिकरणान्तर्गतद्वितीयाध्यायस्य तृतीयसूत्रे 'अहिभयादभ्यन्तरः कोपो बाह्यकोपात्पापीयान्' इत्युक्तं वर्त्तते । अत्र तु 'अहिभयादिति' प्रतीकं कुत आपतितमिति न ज्ञायते ।

† 'वशीकुर्यादित्यर्थः' इति 'प्रशमयेदित्यर्थः' इति वा पाठो ऽत्र भवेत् ।

‡ अत्र कदाचित् 'तं कुल्य०' इत्यादिपाठो भवेत् ।

[२०] पक्षान्तरमाह—तद्विशिष्टमिति । तस्मात्कुल्याद्विशिष्टं तदाक्रमणक्षमं येन यदत्र गृहीतं तत्तस्यैव स्वमिति राज्ञोक्ते तदर्थं यद्विक्रामति तत्स्वयंग्राहबलं तत्तस्योपरि प्रेषयेदित्यर्थः ।

[२१] सामन्तान् स्वविधेयीकृतान् भूम्यनन्तरानाटविकान्वा प्रेषयेदित्यर्थः । तद्विशिष्टमित्यस्य तदधिष्ठितं तत्सुहितमित्यर्थः, इति केचित् । स्वयंग्राहे मिथो विरोधः स्यादिति तेषामभिप्रायः । प्रेषण फलमाह—तैर्गृहीतं* स्वयं स्वयंग्राहदण्डादिभिः विरोधमपि† सन्दध्यात् गृह्णीयादित्यर्थः ।

[२२] कथमभिसन्धानं कार्यमित्यत्राह—अवरुद्धेत्यादि । तैरवरुद्धस्य यन्त्रितस्य ग्रहणं वा दुर्गलम्भोपायोक्तं पारग्रामिकाख्यं वा योगमातिष्ठेत् प्रयुञ्जीतेत्यर्थः ।

[२३ २४] अभ्यन्तरकोपस्यैव प्रकारान्तरे प्रतीकारमाह—एतेन मन्त्र्यादि । इयमपि परिभाषाऽन्तरमात्यानाश्चेति । दौवारिकान्तर्वंशिकादयोऽन्तरमात्यास्तेषाम् ।

[२५] यथार्हमिति, पञ्चदशोपायप्रकारेषु यथोचितमित्यर्थः ।

[२६] अभ्यन्तरकोपानुक्त्वा बाह्यकोपपरिभाषामाह—राष्ट्रेत्यादि ।

[२७] तमिति—बाह्यकोपम् । अन्योन्येनेति, राष्ट्रमुख्यस्य कोपमन्तपालादिना वान्तपालादेश्च राष्ट्रमुख्येनेत्यर्थः । अवग्राहयेदिति, शमयेत् ।

[२८ २९] राष्ट्रमुख्याद्यन्यतमस्य शक्यं वा दुर्गं वावष्टभ्य स्थितत्वेन परस्परतो दुरवग्रहे सामन्तादिना स्वमित्रेण वा संश्लेषयेदित्याह—मित्रेण वेति ।

[३०] मित्रेणोपगृहीतत्वस्य फलमाह—यथा नामित्रमिति । यथा शत्रुणा च्छिन्द्यादित्यर्थः ।

[३१] शत्रुसंश्लेषाकरणस्योपायान्तरमाह—अमित्रा वेति‡ ।

[३२] एवमाटविकादिषु अन्यतमभेदप्रकारमाह—अयञ्चेत्यादिना+ ।

---

* अत्र 'तैर्विगृहीत' मिति डा. जौली. मूलपाठः ।

† 'अतिसन्दध्यात्' इति डा. जौली. मूलपाठः ।

‡ 'अमित्रात्सत्री' इति डा. जौली. मूलपाठः ।

\+ 'अयं त्वां' इति डा. जौली. मूलपाठः ।

अयममित्रः स्वं विजिगीषुप्रयुक्तं गूढपुरुषं मन्यमानः तच्छङ्कापरीत्तार्थं भर्त्तर्य्येव विक्रमं कुर्वीति नियोक्ष्यते।

[33] तत्र लब्धविक्रमब(फ)लो यदि स्यात् तदा फलितविक्रमं त्वां मित्राटविकसाधनार्थं दण्डचारिणं स्वसेनात्रिनेत्रतायां वा पराभियोगार्थं दुष्करे*........प्रेषयिष्यति।

[34] पुत्रदारं वेति†। पुत्रान्दारांश्च गृहीत्वा तद्रहिते विषयसन्धौ वासयिष्यति।

[35] अथ भर्त्तरि ते विक्रमो यदि निष्फलः स्यात् तदा प्रतिहतविक्रमं त्वां भ‡............करिष्यति, अर्थमादाय विक्रेष्यति।

[36] त्वामेव पण्यतया दत्त्वा सन्धिमुखेन भर्त्तारं प्रसादयिष्यति वा।

[37] एवं स्थिते विजिगीषोर्मित्रं वा उपकृष्ट तस्यासन्नं कश्चिद्वागच्छेत्येवमेनं सत्रि भेदयेदित्यर्थः। तत्र प्रतिपन्नवत्कृताभ्युपगमं तदिष्टस्यार्थस्याभिप्रायैः प्रापणैः सत्कुर्यादित्यर्थः।

[38] यदैवमुपजापेप्यमित्रमेवायं जिगमिषति तदा तमेवास्य संश्रयणीयममित्रं भेदयेदित्याह—असौ त इत्यादिना।

[39] सत्री चैनमित्यादि। अभित्यक्ता+ वध्यतया निश्चिताः, तद्धस्तप्रहितैः शासनैः विजिगीषुणा गूढशत्रुवधकरणार्थं प्रेषितैर्गूढोल्लेखैः अमित्रेण घातयेदित्यर्थः।

अत्र (थ) वादि (भि) त्य (व्य) क्तानां शासनं वेषादिलिङ्गं धारयद्भिरमित्रप्रेषितैः गूढपुरुषैर्घातयेदेनम्। तथाहि सन्धि.........
.......त्यक्तानां दण्डतया वधश्च गूढानाह.........पश्चस्यादि......।

[40] गूढपुरुषैर्वेति। विजिगीषुप्रक्तैर्गूढैस्तीक्ष्णादिभिर्वा घातयेदित्यर्थः। अस्य सहचारिणो ये प्रवीरपुरुषास्तांस्तदभिप्रेतकारणेनावाहयेदिति गूढपुरुषैरित्यनुषङ्गः। यथाभिप्रायकरणेनेति, यथैषामभिप्रायः इच्छा तथाकरणेन।

---

* अत्र 'प्रवासे' इति पाठांशस्त्रुटितः प्रतीयते।

† 'विपुत्रदारंवा' इति डा. जौली. मूलपाठः।

‡ अत्र कदाचित् 'भर्त्तरि पण्यं करिष्यति' इत्यानुपूर्वीकः पाठो भवेत्।

+ 'अभिव्यक्त' इति डा. जौली. मूलपाठः।

[४१] तेन प्रहितानीति* । अमित्रेणास्य प्रवीरपुरुषाण्यानाय प्रहिता ये गूढपुरुषास्तान् सत्ये (त्ये) व तस्य ब्रूयादित्यर्थः । इति सिद्धिरिति, एषा तत्कोपप्रतिक्रियेत्यर्थः ।

[४२] [४३] एवं बाह्यान्तरकोपांस्तत्प्रतीकारांश्चोक्त्वा तान् परत्रोत्पादयेदात्मनि शमयेच्चेत्याह--परस्य चेत्यादि ।

[४४] कोपप्रतीकारादित्योक्तस्योपजापस्य विषयमाह—यः कोपमित्यादिना ।†......................वेस्य हि जननार्थं वोपजापः कार्यः । तत्रोभयोरपि उपजापविषयो युक्त इत्याशयः ।

[४५] प्रतिजापस्तु तद्व्युपगतः तस्यापि विषयमाह--यः सत्यसन्ध इत्यादि । विश्वसनीयस्य शक्त्यादिमतो हि वाक्यमनुतिष्ठेयमिति भावः । उपजीवतस्तर्हि शाठ्यं संभाव्यं ततो विचार्यमभ्युपगतः कार्य इत्याह--तर्कयितव्यश्चेति, उपजापितेति शेषः ।

[४६] उपजापिता हि स्वान्योऽभ्यन्तरमभ्यन्तरो वा बाह्यमुपजपति, तत्र शठस्य बाह्यस्याभिप्रायानाह--शठो हि बाह्य इत्यादिना । एवमिति, वक्ष्यमाणाभिप्रायभेदैरित्यर्थः, बाह्याटविकाद्यन्यतमः, अभ्यन्तरमिति, मन्त्र्याद्यन्यतमम् । एवमिति, वक्ष्यमाणैरभिप्रायभेदैरुपजपेदित्यर्थः ।

[४७] कथमित्यत्राह--भर्त्तारश्चेत्यादि । अयं मन्त्री विजिगीषुं हत्वा मां यदि प्रतिपादयिष्यति राज्यं प्रापयिष्यति तदा शत्रोरस्य वधः राज्यप्राप्तिश्चेति लाभद्वयं स्यात् ।

[४८] अथ विजिगीषुरेव यदि मन्त्रिणं हन्यात् तदाह–अथवा शत्रुरिति ।

[४९] [५०] तस्यमन्त्रिणो बन्धुवर्गस्तथा‡..............ण दण्डेन निहतः तत्तुल्यदोषः क्रुद्धादिवर्गश्चेति, मे बहुतरः कृत्यः पक्षः क्षिप्येत् + ।

[५१] विजिगीषुश्च स्वयमपि तत्तुल्यदोषोऽन्यास्मिन् वर्गेऽपि विश्वस्तो न स्यात् ।

---

* 'तेन प्रणिहितान्' इति डा. जौली. मूलपाठः ।

† कदाचित् 'शमनार्थं वा कोपस्य हि' इत्यादिपाठोऽत्र भवेत् ।

‡ अत्र 'तुल्यदोषेण' इति पाठः कदाचित्स्यात् ।

+ पङ्क्तिरियमविस्पष्टार्थेव भाति ।

५२ एवमन्यतरस्य मुख्यमभित्य (व्य) कहस्तेप्रेषितैर्विजिगीषुवध-बन्धनाद्यर्थतया मत्प्रहितैर्लेखैः प्रकाशीकृतैरेकं घातयिष्यामि, एभिरभिप्रायैः शठो बाह्याभ्यन्तरमुपजपेदित्यर्थः ।

५३ बाह्ये च शठस्याभ्यन्तरस्योपजापाभिप्रायानाह—अभ्यन्तरो वेत्यादिना ।

५७ प्रतिपन्नं वेति* । भर्तृघातने कृताभ्युपगमनं प्रथमं भर्तृसहायमाचरत्स्वामित्राटविकेषु विक्रमिष्यामि† ।

५८ तैस्सहास्य‡..............तस्य सैन्यस्य सङ्गः कोपं+ वा स्यात् ।

५९ तैर्वैरं वातिगाढं स्यात् ।

६० तथा मदधीनो वाऽयं भवेत् ।

६१ तद्विधेये चास्मिन् भर्त्तुरहं प्रसादपात्रं स्याम् ।

६२ अथवा बाह्यस्य राज्यं स्वयं ग्रहीष्यामि ।

६३ अथवैनं निगलितं कृत्वास्य भूमिं भर्त्तुश्च भूमिमुभयमप्य§............मि ।

६४ अथवास्य विरुद्धं कञ्चिदाहूय विश्वस्तमेनं तेनैव घातयिष्यामि ।

६५ अथवास्मिन्नाटविकाद्यभिमुखे याते शून्यमस्य मूलस्थानं हरिष्यामीत्येभिरभिप्रायैरभ्यन्तरो बाह्यमुपजपेदित्यर्थः । एवं शठस्योपजपितुर्बुद्धिभेदसम्भवात् ।

६७ योगं तेन निश्चितः तेन कल्याणबुद्धिना सन्दधीत, तदुक्तमनुतिष्ठेदिति ।

६८ शठन्तु तथा करिष्यामीत्यभ्युपगम्यातिसन्दध्यादित्यर्थः । इतिः समाप्तौ ।

६९ ७० एवं बाह्याभ्यन्तरकोपानामुपायानुक्त्वा तत्स्वयमुपलब्धा-

---

* डा. जौली. पुस्तके 'प्रतिपन्नं' इत्येव पाठः । तत्र 'वा' इति नास्ति ।

† 'विक्रमयिष्यामि' इति डा. जौली. मूलपाठः ।

‡ अत्र कदाचित् 'समस्तस्य सैन्यस्य' इत्यादिपाठो भवेत् ।

+ कदाचिदत्र ' कोपो वा' इति पाठो वा भवेत् ।

§ अत्र '०प्यवाप्स्यामि' इत्यादि पाठः कदाचित्स्यात् ।

दात्मनः तदुपलम्भश्च न कस्यचिदाचक्षीतेत्याह—एवमुपलभ्येति*। परे परेभ्य इत्युत्तरग्रन्थस्य शेषतयाऽयं योज्यः । एवमुक्तप्रकारेण बाह्याभ्यन्तरयोः शठकल्याणबुद्धित्वं स्वयमुपलभ्य दुर्हृदौ च सुहृद्दुर्हृदौ च तं यथा मिथो न जानीयुः तथात्मानं रक्षेत् न प्रकाशयेदित्यर्थः । स्वत इति तेभ्यः । अथवा परशब्देन बाह्याः स्वशब्देनान्तराश्चोच्यन्ते । तथा चोपजाप्यमानो बाह्यो बाह्यमभ्यन्तरं वान्यमुपजप्यमानं यथानु(न)जानीयात् । एवमभ्यन्तरोऽप्युपजप्यमानो यथा बाह्यमभ्यन्तरं वान्यमुपजप्यमानं न जानीयात् तथा विजिगीषुर्गोपायेत, उभयोरपि तैर्बाह्याभ्यन्तरैः यथा स्वयमुपजापयितेति न ज्ञायेत तथात्मानमपि रक्षेयदित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अभियास्यत्कर्मणि नवमे ऽधिकरणे तृतीयोऽध्यायः ।

---

## ९ अधि., ४ अध्या., १४२ प्रक.

### सू. क्षयव्ययलाभविपरिमर्शः ।

एवं यास्यतो यानाङ्गतया बाह्याभ्यन्तरकोपतत्प्रतीकारानुक्त्वा ऽनन्तरं यानमिति तयोः क्षयव्यययोः स्वरूपतो यानफलात् भूम्यादिलाभात् गौरवादितश्च निरूपणं कार्यतया ऽभिधातुं—क्षयव्ययाभिमर्श† इति । युग्यपुरुषापचयः क्षयः, धान्याहिरण्यापचयो व्ययः, इति भाष्यादेवार्थो ज्ञेयः । तयोर्या हानिस्तन्निरूपणं क्रियत इत्यर्थः ।

१ २
क्षयव्ययावेव लक्षयति—युग्येत्यादिना । युग्यानि वाहनानि, पुरुषाः कर्मकारादयः, तेषां हानिः क्षयं(यः) । हिरण्यं हेमादि, धान्यं व्रीह्यादि, तयोर्हानिर्व्ययः ।

३
तयोः प्रकृते तूपयोग इत्यत्राह—ताभ्यामिति । ताभ्यां तदपेक्षया, बहुगुणविशिष्टे लाभे यायात्, गुणनं गुणः न द्विगुणत्रिगुणादौ

---

* 'एवमुपलभ्यम्' इति डा. जौली. मूलपाठः ।

† मूलसूत्रं तु 'क्षयव्ययलाभविपरिमर्शः' इति वर्तते । अत्र कदाचित् 'क्षयव्ययविपरिमर्शः' इति वा पाठो भवेत् ।

अपित्वष्टादशादिगुणतया विशिष्टप्यवृत्ते अथवा बहुभिरदेयत्वादिभिर्नवभिर्गुणैस्ताभ्यां विशिष्ट इत्यर्थः।

[4]लाभस्य गुणानाह—आदेय इत्यादि। लाभसंपदिति, लाभगुणः।

[5]स्वयमेवैतान् क्रमेण लक्षयति—सुप्राप्येत्यादि। सुखेन प्राप्योऽनुपाल्यश्च पश्चात्परैरशक्यप्रत्यादानश्चेत्यर्थः।

[6]विपर्यय इति। आदेयस्य.................त्यादिस्वसमुदायो लक्षणं तत्र तदेकदेशस्याप्रदेयत्वस्य विपर्ययः प्रत्यादेयत्वमादेयत्वविपर्यये अनादेयत्वे सतीत्यर्थः। अथवा विपर्यये प्रत्यादेय......... उक्तलक्षणाभावे प्रत्यादेयः अनादेय इत्यर्थः।

[7]ततः किमित्यत्राह—तमाददान इति। अनादेयमाददानः तदादानं वा तदुपजीवनं कुर्वन्न ततो नाशयेदित्यर्थः।

[8]अत्र विषयविशेषेऽप्यपवादमाह—यदि वा पश्येदित्यादिना। प्रत्यादेयत्वं नाम पश्चात्तरेणैव पश्चादन्तरुद्धरणनियमः तदर्थश्च परस्सर्वानपि स्वशक्त्यनुगुणस्यार्थानुत्पादयेदेवेत्यतः प्रत्यादेयत्वं नाददीतेत्युक्तम्। यदा तु प्रत्यादेये गृहीते तल्लाभ(भे)नान्यापरस्य कोशे दण्डादिहानिर्वा तद्वाराख्यन्यादिसारोद्धरणं न वा परस्य क्षयो वा तदुपचयभुजां प्रकृतीनां कर्शनं वा प्रकृतिकोपो वा परस्य राज्याद्युच्छेदनयोग्यता वा आत्मनो मित्रस्य वा देशतस्करामित्रादिजन्यपीडापरिहारो वा परस्य प्रजापीडनामित्रादिष्वस्य वैगुण्यप्रकाशनं वा प्रत्यादेयतः तस्य पुनः स्वयमेव परस्मै प्रत्यर्पणे तन्मैत्रीसम्पादनं क्रियेत, पश्येत् तदा तदपि आददीतेति वाक्यार्थः।

[9]अथावयवार्थव्याख्याः—प्रत्यादेयमादेयेत्यादि। कोशदण्डौ स्फुटौ, निचयोऽप्रीत्यादिसञ्चयः, रक्षाविधानं प्राकारादि, अस्ये(वस्त्रे)ति, परस्यावस्रावणं भञ्जनम्।

[10]खनीत्यादि। गृहीतां भूमिं परो यावन्न प्रत्याददीत तावत्तत्रत्यानां खन्यादीनां साराण्युद्धरिष्यामि वेत्यर्थः।

[11]प्रकृतीरस्येति। प्रकृतीनां तल्लाभपोष्यत्वादिति भावः।

[12]लब्धभूमावेव प्रकृतीरप्यावाहयिष्यामि वेत्यर्थः। आयोगेनेति, तत्रत्याः प्रकृतीस्तदुपचयाग्रहणेनानुकूलयिष्यामि वेत्यर्थः।

[13] तां इत्यादि। ताः प्रकृतीः परः पश्चाद्भूमिग्रहणे प्रतियोगेन कर्शनेन कोपयिष्यति, अतः प्रकृतिकोपार्थं ग्रहणमित्यर्थः।

[14] प्रतिपद्ये वेत्यादि। एतल्लाभहरणात् क्षीणमेनं शत्रोरादायार्पयिष्यामि वेत्यर्थः।

[15] क्षीणदशायामिवास्य तुल्यमवरुद्धं पुत्रं वास्य प्रतिपादयिष्यामि राज्ये स्थापयिष्यामि वेत्यर्थः।

[16] मित्रस्येत्यादि। इहास्मिन् मित्रस्यात्मनो वा चोरामित्राद्पीडात् * प्रतिकरिष्यामि वेत्यर्थः।

[17] मित्रमित्यादि। परस्य मित्रं योवास्यापाश्रयः† अवष्टम्भकः मध्यमादितालस्य‡ वैगुण्यं ग्राहयिष्यामि वा। लब्धभूमावनुग्राहादिकरातिशयात् परो निर्गुण इति ज्ञापयिष्यामीत्यर्थः। अथवा भूमिं दत्त्वा कृतसन्धिरयं पुनरन्यथा चिकीर्षतीति तद्वैगुण्यं प्रकाशयितुमित्यर्थः।

[18] किं मतमित्यत्राह—तदमित्रेत्यादि+। तदमित्र(त्रं)विरक्तं मित्रं प्रतिपत्स्येत् इति पाठे अमित्रस्य तान्मित्रं अमित्रे विरक्तं पुनरहं मित्रं प्राप्स्यामीत्यर्थः। प्रतिपत्स्यत इति पाठे तदमित्रमित्रे विरक्तं तत्प्रतिपत्स्यते तस्य राज्यं ग्रहीष्यतीत्यर्थः। इत्य..............तथा प्रतिपत्स्यत इत्यस्यापि राज्यं ग्रहीष्यतीत्यर्थः स्यादेवेति। सत्कृत्य वेत्यादि, लब्धावे(मे)व भूमिमस्मै कन्यादानादिना सत्कृत्य दास्यामीति मैवं परिग्राह्यदानेनेत्यत्राह—संहितेत्यादि, संहितं कृतसन्धानं समुत्थितं सम्भूय कार्येषु व्याह्रियमाणं एतस्मिन् मित्रं चिराय स्थिरं भविष्यतीत्यर्थः। इति प्रत्यादेयमपीत्यादि, इत्युक्तप्रकारान् हेतून् यथा वा पश्येदिति सम्बन्धः।

[19] उपसंहरति—इत्यादेयप्रत्यादेयौ व्याख्याताविति। आदेयानादेयावित्यर्थः। प्रसादक§......कौ व्याख्याताविति वक्ष्यमाणवत्।

---

* 'चोरामित्रादिपीडाम्' इति पाठोऽत्रार्थानुसारी भाति।

† 'आश्रय' इत्येतावन्मात्रः पाठो डा. जौलीसम्पादितमूलपुस्तके दृश्यते।

‡ अत्र 'मध्यमादिर्वा तस्य' इत्यानुपूर्वीकः पाठः सम्भाव्यते।

+ 'तदमित्रं' इति डा. जौली. मूलपाठः।

§ अत्र हि 'प्रसादककोपकौ' इति पाठः सूत्रानुसारी भवेत्।

(अं ?)प्रसादत्वगुणमाह—अधार्मिकादित्यादि ।

[२१]कोपमाह—विपरीत इति । धार्मिकादधार्मिकस्येत्यर्थः ।

[२२]कोपकमुदाहरणान्तरैरपि दर्शयति—मन्त्रिणामित्यादि । मन्त्रिवचनात् क्षयव्ययौ कृत्वा लाभार्थं व्यापृतस्य तदभावः कोपको भयहेतुः ।

[२३]कथमित्यत्राह—अयमित्यादि । अयं स्वामी अस्माभिः क्षयव्ययौ कारितौ* न च किञ्चिल्लब्धवानिति बिभ्यतीत्यर्थः ।

[२४] [२५]दूष्येत्यादि । दूष्याणां स्वामिनां अवग्रण्य† चरतां मन्त्रिणामनादरे ऽपि यातस्य लाभसिद्धौ तेपि बिभ्यति, लब्धलाभो ऽयमस्मान्नाशयिष्यतीत्यर्थः । विपरीत इति, मन्त्र्युपदेशाल्लब्धस्तेषां प्रसादहेतुरित्यर्थः ।

[२६]आद्यप्रसादकयोर्द्वयोस्स्वयं विपर्ययाभ्यां सह व्याख्यात(त)त्वकथनमनयोर्विपर्ययौ‡ तदभावमात्ररूपौ, किन्तु भावतया भिन्नप्रकारौ दर्शितौ, गुणान्तराविपर्ययाणां तत्तदभावरूपत्वमेवेति द्योतयितुमिति ग्राह्यम् ।

[२७]गमनेत्यादि । लाभस्य ह्रस्वकालत्वं नाम तत्सिद्धितद्व्यापारलभ्यत्वमिति भावः ।

[२८]मन्त्रेति । उपजापादिसाध्यत्वाद्युग्यपुरुषा ऽपचयो ऽल्प इति भावः ।

[२९]भक्तमात्रेति । अर्थादानं विनैवाशामात्रेण बलैः साध्यत्वादल्पव्ययः ।

[३०]तदात्वेति । य(प)तिं विना तत्कुले प्रभूतत्वात् ।

[३१]महानर्थेत्यादि+ । तात्कालिकलाभानुबन्धिलाभभूयस्त्वाद् वृद्ध्युदयः ।

---

* अत्र 'क्षयव्ययौ कारितः' इति पाठोऽर्थानुसारी भाति । डा. जौलीसम्पादितमूलपुस्तके तु 'क्षयव्ययो ग्राहितः' इत्यानुपूर्वीकः पाठो वर्त्तते ।

† कदाचित् 'अवैगुण्यं' इत्यर्थानुसारी पाठोऽत्र भवेत् ।

‡ अत्र स्थले 'न' कारो ऽपेक्षितः, अन्यथार्थो नैव सङ्गच्छते ।

\+ डा. जौलीसम्पादितपुस्तके 'महान्' इति पदं त्रिंशत्तमसूत्रस्यैवान्तिमो भागः ।

[32]निराबाध इति । निर्विघ्नात् कल्यः ।

[33]प्रशस्तेति । प्रकाशयुद्धादिन्यायाधि(क?)गतत्वाद्धर्म्यः ।

[34]सामवायिकानामित्यादि । सम्भूय प्रस्थायिनां स्वस्वलाभोत्कर्षनिबन्धाभावात् पुरोगः भागान्तरोत्कृष्टः ।

[35]एवं लाभस्य यानोद्देश्यतौपयिकान् गुणानुक्त्वा तत्स्वाम्यस्वादानयोग्यतौपयिकान् विशेषानाह—तुल्ये लाभ इत्यादिना । देशकालाविति, देशभेदेन हि द्रव्यं श्लाघ्यं स्यात्, यथैकं द्वीपोत्पन्नं द्वीपान्तरे । एवं लाभभेदेनापि, यथा चन्द्रमौक्तिकादि ग्रीष्मादौ । शक्त्युपायाविति, मन्त्रप्रभावोत्साहादीनां पूर्वपूर्वसाध्य उत्तरोत्तरः श्रेयान्, एवं सामादीनामपीति ग्राह्यम् । प्रियाप्रियाविति, यथा हिरण्यादिकं सर्वेषां प्रियमिति । जयाजयाविति*, यथोक्तं य(स) स्यादि सद्यः फलम्, सामीप्यविप्रकर्षाविति, यथा स्वविषयान्तानन्तरभूमिः दूष्यव्यवाहिताया: श्रेयसी । तदात्वानुबन्धाविति, कालमात्रपर्यवसितात् सानुबन्धः श्रेयानिति । †सारत्वसातत्य इति, यथा ह्याकरोत्पन्नानां रत्नादीनां सारत्वं, लवणादीनान्तु सातत्यं, सातत्यञ्च श्रेय इति प्रागेवोक्तम् । बाहुल्यबाहुगुण्ये इति, बाहुल्यं संख्यापरिमाणादिना प्रभूतत्वं बाहुगुण्यमल्पस्यापि बहुगुणत्वं श्लाघाहेतुः ।

[36]एवमुपादेयत्वे हेतून्विशेषानुक्त्वा परिहरणीयान् लाभविघ्नानाह—लाभविघ्ना इति । काम इति स्त्रीषु प्रसङ्गः । तत उत्साहनिरोधात् क्रोध इति । तस्य क्षमाकालतदितरविरोधित्वात् लाभ इति, क्षयव्ययादिसाध्येऽर्थे प्रवृत्तिविघातात् । साध्वस इति अप्रागल्भ्यम्, न स(स्व)मित्रादिषु व्यवहाराशक्तिरिति । कारुण्यमिति, अनेकजन वधादिसाध्यायामिति बुद्ध्यादावप्रवृत्तेः । सापराधेपि सामप्रयुञ्जाने परे अभियोक्तुं लज्जमानस्य लाभासिद्धः । अनय इति‡, नयस्यैव सिद्ध्युपायत्वादिति भावः । अनार्यभाव इति, विश्वस्तघातादिकर्मत्वं अनार्यस्य सहायासिद्ध्या लाभासिद्धेः । मान इति, अभिमानिनोपि सहायासिद्धेरिति भावः । सानुक्रोशतेति, प्राभृत्यताद्युप-

---

* अत्र 'जवाजवौ' इति डा. जौली. मूलपुस्तके पाठः ।

† डा. जौलीसम्पादितमूलपुस्तके 'सारत्वासारत्वसातत्ये' इत्यानुपूर्वीकः पाठो वर्त्तते ।

‡ इदं प्रतीकं मूलपुस्तकेऽत्र न दृश्यते ।

हरणात् दयमानस्येत्यर्थः। परलोकापेक्षेति, परजनपक्षेऽपि दाहाविलोपादिकरणे ब्राह्मणगोहत्यादिसम्भवाशङ्कया तद्भीरोरिति भावः। दाम्भिकत्वमिति*, विश्वस्तातिसन्धातृत्वं तेन सहायासिद्धेरिति भावः। अत्यागित्वमिति, साधारणे लाभे स्वयमादित्सा ततोऽपि सहायासिद्धेरिति भावः। दैन्यमिति, नीचेष्वनुचितप्रार्थनादि तेनापि रूपहान्या सहायासिद्धेः। असूयेति, स्वलाभार्थं कृतक्लेशेषु मित्रादिषु दोषाविष्करणम्। हस्तगतावमाननेति, सिद्धप्रायार्थस्योपेक्षा। उदारात्म्यमिति†, संश्रितासंश्रिताद्यविभागेन पीडाजनकत्वं ततोऽपि सहायासिद्धेः। अविश्वास इति, विश्वसनीयेष्वपि अविश्वासः। भयमिति, पराभियोगादौ भङ्गादिशङ्काभयं ततश्चाप्रवृत्त्या लाभासिद्धेः............‡प्रतीकार इति, प्रवर्त्तमानस्य मध्ये विनिपाते सति तदपरिहार इति। शीताद्यक्षमत्वमिति, शीतादिदुःखसहनप्रवृत्तेरिति भावः। मङ्गलतिथिनक्षत्रेष्टित्वमिति, प्रवृत्तगृहदहस्याग्नेर्निर्वापणे वा बुभुक्षोर्भोजनकरणे वा मुहूर्त्तबुभुक्षावदिति भावः।

37 एवञ्च विंशतीर्लाभविघ्नानुक्त्वा चरमस्यातिपातित्वाभिप्रायेण निन्दामाह—नक्षत्रमित्यादि। अतिपृच्छन्तमिति, प्रतिपन्ने झटिति निर्वर्त्ये कार्ये दिनवारादिबुभुक्षानक्षत्रमिति पृच्छन्तमपि असाध्ये कार्ये पृच्छन्तमक्षमर्थः कार्यफलमतिक्रामति असिद्धिदशां प्राप्नोति। कार्यसिद्ध्यनुकूलमुपकरणं नक्षत्रं नाम, तत्तु केवलं तदनुगुणे(णो) व्ययः, अश्विन्यादयस्त्वकिञ्चित्करा इत्यर्थः।

38 साधनतया प्रसक्तस्य लाभकरणत्वं व्यतिरेकमुखेनाह—नरा इत्यादि। नन्वयं व्यतिरेकव..............सार्वकारणो नाम विशिष्टमन्यथा करणत्वस्यैवासिद्धेः। तथा चार्थस्य कारणान्तरात् कोऽतिशय उक्तः स्यादित्यत्राह—अर्थैरित्यादि, अत्र तृतीययार्थानां करणत्वं द्योतयन्त्या फलायोग्यव्यवच्छेदत्वादितरेभ्योऽतिशय उक्तः स्यादिति

---

* डा. जौलीसम्पादितमूलपुस्तके तु अस्य प्रतीकस्य स्थाने 'धार्मिकत्वम्' इति पाठो वर्त्तते।

† अत्र उदारात्मिकम्' इति डा. जौली. मूलपाठः।

‡ कदाचिदत्र 'अप्रतीकारमिति' इत्यात्मकं प्रतीकं भवेत्। मूलपुस्तके तु 'नयमप्रतिकारः' इत्यानुपूर्वीकः पाठो दृश्यते।

ग्राह्यं हृदयं यथा गृह्य(ह्या)अपि गजास्साजात्यबुद्ध्या प्रतिद्वन्द्वितया दर्शितैः प्रतिगजैर्गृह्यन्त एव, तथा करणभूतैरर्थैः अर्था गृह्यन्त एवेत्यर्थः।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अभियास्यत्कर्मणि नवमे ऽधिकरणे चतुर्थो ऽध्यायः।

---

## ९ अधि., ५ अध्या., १४३ प्रक.

### सू. बाह्याभ्यन्तराश्चापदः।

एवं क्षयव्यययोर्लाभस्य विमर्शमुक्त्वा यानाङ्गतयैव उपजापप्रतिजापरूपाणामापदां प्रशमनाभिधानार्थं सूत्रम्—बाह्याभ्यन्तराश्चापद इति। राष्ट्रमुख्यान्तपालादिजा बाह्या, मन्त्रिपुरोहितादिजा आभ्यन्तरा आपद उच्यन्ते इत्यर्थः। तत्प्रतीकाराश्चेति चकारार्थः।

[1]द्विविधानामप्यापदामनुत्पादार्थं कारणप्रतिबन्धः श्रेयानित्याशयवान् कारणं तावदाह—सन्ध्यादीनामिति। सन्ध्यादिषड्गुणानामयथोद्देशमयथास्थानमवस्थापनं प्रयोगोऽपनयः।

[2]तस्मादापदो जायन्त इत्यर्थः।

[3]बाह्याभ्यन्तरतया द्विविधास्ता उपजापप्रतिजापक्रियाभेदाच्चतस्रः स्युरित्याह—बाह्योत्पत्तिरित्यादिना। प्रतिजापो यथोपजापं करणाभ्युपगमो यस्याः सा तथा, इयमापत्प्रथमा। द्वितीयामाह—बाह्योत्पत्तिरित्यादि*, बाह्यैककर्तृकोपजापेत्यर्थः। चतुर्थीमाह—आभ्यन्तरोत्पत्तिरित्यादि, मैत्र्याद्यन्यतमैकोपजपितृप्रतिजपितृकेत्यर्थः।

[4]तत्र प्रथमाद्वितीययोः प्रतीकारनिदानमाह—यत्र बाह्या इत्यादि। उभययोगे इति, बाह्याभ्यन्तरयोरप्यतिक्रमश्चेति प्रतिजपितुरुपजापाभ्युपगन्तुस्सिद्धिः सोमाभि प्रतिक्रिया विशेषवती उपजपितृसमाधानाच्छ्रेयसीत्यर्थः।

---

* द्वितीयामापद व्याख्यातुन्तु 'आभ्यन्तरोत्पत्तिर्बाह्यप्रतिजापा' इत्ययं सूत्रभागः प्रवर्त्तते। उपर्युक्तमिदं प्रतीकन्त्वत्र युक्तमिव न भाति।

[५]युक्तिमाह—सुव्याजा हीति । अभ्यापगमनिमित्तानि बहूनि व्यपदेष्टुं शक्यानीत्यर्थः । उपजपितृ..........नावश्याभ्युपगन्तव्यापराधा(रा ?)इत्यर्थः । नोपजापितार इति, उपजापितृणान्तु उपजापकरणे व्याजमशक्याभिधानमित्यर्थः ।

[६]नन्वेकस्मिन् प्रतिजापितरि समाहितेऽप्यन्येषां केचिदुपजप्याः स्युः, तत्कथं प्रतिजापितृप्रतीकारस्य श्रेयस्त्वमित्यत्राह—तेष्वित्यादि । कतिपयनिवृत्तावुपजापस्य प्रकाशत्वापत्तेरिति भावः ।

[७]बाह्यानामभ्यन्तराणाञ्च विप्रकीर्णसंस्तवादिभिः उपजापो दुष्कर इत्याह—कृच्छ्रेत्यादिना । तेषामितरे वेति, अभ्यन्तराणां बाह्या वेत्यर्थः । यदि बाह्याभ्यन्तराणामन्योन्यस्योपजापो दुष्करः न हि त्याज्यमे(ए)वायामित्यत्राह—महतश्चेत्यादि, उपजापेन परोत्साहस्वोत्साहफलातिशयश्च स्यादित्यर्थः ।

[८]ननु सन्तु प्रतिजापितारोऽत्र विषये समाधेयाः, तदुपायस्तु क इत्यत्राह—अभ्यन्तरेष्वित्यादि ।

[९]ते अपि किंरूपे इत्यत्राह—स्थानमानकर्मेति । स्थानकर्माधिकारप्रदानम्, मानकर्मच्छत्र*..........दिप्रदानम् ।

[१०]दानमाह—अनुग्रहेत्यादि । अनुग्रहश्च स्वकोशाद्दानं, परिहारो देयानादानं, आयोग†.................. ।

[११]अभ्यन्तरप्रतिजापे विधिमुक्त्वा बाह्यप्रतिजापेऽप्याह—बाह्येष्वित्यादि ।

[१२]तत्र भेदप्रकारमाह—सत्रिण इत्यादि । बाह्यानां मित्रास्थिताः सत्रिण एषां बाह्यानां राज्ञश्चारः उपधायोगं क्रियमाणतया ब्रूयुः ।

[१३]कथमित्यत्राह—अयं व इत्यादि । वः युष्मद्दूष्यव्यञ्जनैरिति, राजाप्रियमहामात्र(त्य)च्छद्मभिरित्यर्थः । आतसन्धातुकाम इति भावः परीक्ष्यार्थी बुध्यध्वमिति निरूपयतेत्यर्थः ।

[१४]बाह्यभेदने प्रकारान्तरं ब्रुवाण एवाभ्यन्तरविशेषाणां दूष्याणामपि भेदनमाह—दूष्येषु वेत्यादि । दूष्येषु राजाप्रियमुख्येषु स्वयमपि

---

* अत्र कदाचित् '०च्छत्रचामरादिप्रदानम्' इत्यानुपूर्वीकः पाठो भवेत् ।

† सम्भाव्यते कदाचिदत्र 'आयोगः कर्मसु नियुक्तिः ।' इत्यात्मकः पाठो भवेत् ।

राजाप्रियतामभिनयन्तो गूढास्तद्भेदयेयुः। कथं भेदनमित्यत्राह--बाह्यै-रिति, उपजपितृबाह्यानेव राजप्रणिहिततयापदिश्य तैः करणभूतै-रित्यर्थः। यथापि दूष्यास्तदुपजापं न शृणुयुरिति भावः। बाह्यान्वा दूष्यैरिति, दूष्यैः राजप्रणिहिततया व्यपदिश्यमानैः बाह्यानपि भेद-येयुः, तथा ते ( षु? ) दूष्यकृतोपजापं न शृणुयुः। एवञ्च दूष्यजनै-रेव बाह्यानां दूष्याणाञ्चोभयेषामपि भेदनात् बाह्यभेदनार्थं न मित्र... .........अपेक्षावित्याशयः।

[१५]एवं बाह्येषु भेदमुक्त्वा दण्डप्रकारमाह—दूष्याननुप्रविष्टा वेत्यादि। आसन्नकार्यकारितयाऽनुप्रविश्य तीक्ष्णाः शस्त्रेण विषेण वा दूष्यान् हन्युरित्यर्थः।

[१६]उपजापं प्रतिगृह्यागतान् बाह्यानपि घातयेयुः तीक्ष्णा इत्याह-आहूय वेत्यादि।

[१७]एवं बाह्यैरान्तराणामान्तरैर्बाह्यानाञ्चेति बाह्याभ्यन्तरयोः साङ्क-र्यरूपेऽभ्युदययोगे देशविप्रकर्षादिभिरुपजापस्यासुकरत्वाद्विरलावे-वोपजापप्रतिजापौ; तत्र च प्रतिजपितुर्वा...........श्शक्त्या उप-जापाभ्युपगमाभिनयेन अनेकातिसन्धानादिप्रकारसम्भवेन फलस्य तद्बुद्ध्यधीनत्वात् प्रतिजपितर्येव तत्प्रतिक्रिया श्रेयसी। एकयोगे तु देशासन्निकर्षादिरुपजापस्य सुकरत्वे सत्यपि उपजपितर्येव प्रती-कारः कार्यः, दोषाभावादेव दूष्याणामसत्त्वासिद्धेः, प्रतिजपितृणा-न्त्वसम्भवादेवेति सारम्।

[१८]दोषशुद्धौ हीति। उपजपितृगतो हि दोषः, तच्छोधने दूष्या न स्युः।

[१९]कतिपयदूष्यशुद्धौ तु दोषपरिशोधितोऽन्यं दूषयेत्। दोषश्चा-त्रोपजाप एवेति भावः। पूर्वमुभययोगे बाह्येषु प्रतिजपत्सु भेददण्डा-वुक्तौ। इदानीमेकयोगे तेषूपजपत्सु तावुक्ताविति विवेकः।

[२०]तस्मादिति। यस्मादुपजापरूपो दोष एव शोधनीयः, तस्माद् बाह्येषु दोषशुद्ध्यर्थं उपजपत्स्वेव भेददण्डौ प्रयुञ्जीतेत्यर्थः।

[२१ २२]भेदप्रकारमाह--सत्रिण इत्यादि। असौ राजा युष्मान् गृहीतुकामः प्रतिजपितृव्यञ्जनैर्गूढैः करणैः करणभूतैः अनेन राज्ञा

सह विग्रहीकृतविरोधावगमात् तत् बुध्यध्वमिति सत्रिणो ब्रूयुरित्यर्थः ।

[२३] मित्रव्यञ्जना वेत्यत्र वा शब्दो वक्ष्यमाणपक्षो(क्षा)पेक्षया, तत्पक्षमाह--प्रतिजपितुर्वेत्यादि । ततः तस्मात् प्रतिजपितृसकाशादभ्युपगमसूचकतया ये प्रेषिता..........वा दण्डांश्च बलस्कन्धापातान् । ननु प्रविश्य तन्मित्रभूताङ्गत्वात् तीक्ष्णानुपजापितॄन् बाह्यान् हन्युरित्यर्थः ।

[२४] ततः तीक्ष्णः कृतमुपजपितृवधं प्रतिजपित्रा कारितमिति तस्मिन् परिवादं क्षिपेयुः, यथान्येऽपि प्रतिजपितारो न विश्वसनीयाः स्युरित्यर्थः ।

[२५] एवं बाह्येषूपजापमुक्त्वा आभ्यन्तरैरभ्यन्तरेषूपजापेऽपि प्रतिविधानमाह--अभ्यन्तरेषूपजपत्स्वित्यादिना* । उभयैकयोगयोरुभयत्रापि बाह्यानां भेददण्डाविव प्रतीकारतयोक्तौ, इदानीमेकयोगोऽभ्यन्तरेषु चतुरोऽप्युपायान् योग्यतानुगुणं प्रयुञ्जीतेत्याह—यथार्हमुपायानिति† ।

[२६] यथार्हमित्युक्तम्, तत्राभ्यन्तरेषूपजपितृषु योग्यं साम दर्शयति-तुष्टलिङ्गमित्यादिना । विपरीतमिति, अतुष्टेर्लिङ्गतुष्यस्याप्यर्थतया सामोक्तिः संभवेदिति भावः । अत्राभ्यन्तरेण बाह्यकृतोपजापप्रतिग्रहस्य लब्धाधिकारादेरधिकतराधिकारादिलिप्सानिमित्तत्वात् तत्र स्थानमानकर्मसामेत्युक्ताभ्यन्तरेण तु लब्धान्यस्योपजापोऽनुष्ठि......
...निमित्त एवेति तुष्टिलिङ्गविपरीतं वा सामोच्यत इति ग्राह्यम् ।

[२७] एवं दानमपि पूर्वत्रानुग्रहपरिहारादिरूपमुक्तं, अत्र तु शौचादि वा व्यसनादि वा निमित्तीकृत्य ससत्कारवस्त्रभूषणादिदानरूपमित्यनुसन्धेयः ।

[२८] भेदप्रकारमाह—मित्रव्यञ्जनो वेत्यादि । एतानिति‡, अभ्यन्तरान् मन्त्र्यादीन् ।

---

* अत्र 'अभ्यन्तरानभ्यन्तरेषूपजपत्सु' इति डा. जौली. मूलपाठः ।

† 'यथार्हमुपायम्' इति डा. जौली. मूलपाठः ।

‡ अत्र 'एतान्' इति डा. जौली. मूलपाठः ।

[२९] उपधास्यति, परि (री) वोपायप्रणेयाङ्गं करिष्यति ।

[३०] तदस्येति । तत्स्वचित्तमस्य राज्ञ आख्यातमिति । एवमुक्ते हि प्रतिजपितारोऽभितानोपजापं प्रतिगृह्णीयुरिति भावः ।

[३१] अभ्यन्तराणां मिथो भेदने सति उपजापो न स्यादित्याशयवान् पक्षान्तरमाह--परस्पराद्वेति । एनानिति, अभ्यन्तरान् ।

[३२] भेदप्रकारमाह—असौ चासौ चेत्यादि* । एवं नामायुष्मन् राजनि उपजपन्ति दोषं ग्राहयन्तीति मिथो भेदप्रकारो...मीत्यर्थः । दण्डप्रकारमाह–दाण्डकार्मिकवच्चेति, उपांशुदण्डः कार्य इत्यर्थः ।

[३३] एवमापदो विभज्यात्रोपजापस्य दोषतया कारणत्वात् सोऽभ्यन्तरकर्तृको यत्र तत्र दुस्साधत्वलक्षणं गुरुत्वमित्याशयवानाह-एतासामित्यादि । अभ्यन्तरानिति, अभ्यन्तरोपजपितृकामित्यर्थः । पूर्वं साधयेदिति, गुरुत्वात्प्रथमं प्रतिकुर्यादिति ।

[३४] तत्र पूर्वोक्तोपपत्तिं स्मारयति—अहिभयादित्यादि ।

[३५] आपदां मध्ये उभययोगैकयोरुभयत्रापि† द्विकयोः पूर्वां पूर्वां बाह्योपजपितृकामपरां बाह्योपजपितृप्रतिजपितृकाञ्चापदं बह्वीं बि... .........रित्यर्थः । अस्यापवादमाह—उत्थितामित्यादि, बलवद्भ्य उत्थिता बाह्याभ्यन्तरा विभागेन बलवदुपजपितृका । विपर्यय इति, दुर्बलेभ्य उत्थितामित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अभियास्यत्कर्मणि नवमे ऽधिकरणे पञ्चमोऽध्यायः ।

## ९ अधि., ६ अध्या., १४४ प्रक.

### सू. अथ दूष्यशत्रुसंयुक्ताः ।

एवं बाह्याभ्यन्तरकृतोपजापप्रतिजापरूपा आपदः तत्प्रतीकारांश्चाभिधाय, इदानीं दूष्यशत्रुनिमित्तास्तास्तत्प्रतीकारांश्चाभिधातुं

---

* 'असौ च वो राज०' इत्यादिपाठो डा. जौलीसम्पादितमूलपुस्तके दृश्यते ।

† अत्र 'उभयैकयोगयोरुभयत्रापि' इत्यानुपूर्वीको हि पाठः कदाचित्संगतो भवेत् ।

सूत्रम्—दूष्यशत्रुसंयुक्ता इति। राजानमवग्राह्योपजीवन्तो मुख्या दूष्याश्शत्रवः सहजादयः तत्संयुक्तास्तन्निमित्ता बाह्याभ्यन्तराश्च आपद इति विशेष्यतयाऽनुवर्त्तनीयं तदा उच्यन्ते इत्यर्थः।

¹सूत्रार्थमेवाह—दूष्येभ्य इत्यादि। द्विधा शुद्धेति*, प्रथमस्तावदियं द्विधा शुद्धा मिश्रा चेति। आद्या द्विधा-दूष्याशुद्धा शत्रुशुद्धा चेति। दूष्यामात्रनिमित्तत्वात् शत्रुमात्रनिमित्तत्वाच्च शुद्धा असंकीर्णेत्यर्थः।

²आद्यायाः प्रतीकारमाह—दूष्यशुद्धायामिति।

³अतो दण्डो वर्ण्यत इत्यत्राह—दण्डो हीत्यादि। महाजनविरोधस्याप्रतीकार्यत्वादिति भावः। उक्तं हि—'शतमवध्यं सहस्रात्मा दण्डः' इति।

⁶ननु दण्डभयाभावे सामादयोऽप्यकिञ्चित्कराः स्युरित्यत्राह-मुख्येष्वेषामिति†। पौरजानपदानाम्। दाण्डकार्मिकवदिति, दाण्डकार्मिकप्रकारेणोक्तविधिनोपांशुदण्डं कुर्यादित्यर्थः।

⁷शत्रुशुद्धायां प्रतीकारमाह—शत्रुशुद्धायामित्यादिना। शत्रुमात्रजन्यत्वेनासंकीर्णनिमित्तायामापदीत्यर्थः। यत इति, शत्रुनिमित्ता ह्यापच्छत्रुणा साक्षादेव क्रियेत मान्त्रिणा वा तदमात्यादिना वा, तस्य या साक्षादेव यदस्य मिश्रं यो वाश्रयादः ततः सामादिभिः प्रतिक्रियामिच्छेत्, मन्त्रिकृतायाः स्वामिनैव, अमात्यादिकृतायां मन्त्र्यमात्याभ्याम्, सम्भूयकृतायां स्वामिमन्त्रिभ्यां सम्भूयेति समुदायार्थः। अत्र शत्रुः सामन्तः प्रधानो मन्त्री कार्यते नियुज्यते इति। काया वेत्यादि, एते यतः यदधीनाः ततः तत्..............तावत्प्रतिक्रियामिच्छेदित्यर्थः।

ननु मन्त्र्यमात्यादिप्रतिक्रिया कथं शत्रुशुद्धेत्युच्यते? इत्यत्राह स्वामिनीत्यादि। मन्त्र्यादीनामपि स्वाम्यायत्तत्वात् तयोरपि प्रतिक्रियायाः स्वाम्यधीनत्वादित्यर्थः। नन्वेवं तर्हि मित्राद्यधीनत्वान्मित्रादिशुद्धेति वाच्यं स्यादिति चेन्न, आपदत्र...........तत्परिकर-

* 'द्विविधाः शुद्धाः' इति डा. जौली. मूलपाठः। तथासति 'द्विविधाः शुद्धा इति' इत्यात्मकं प्रतीकं युक्तमिव स्यात्।

† अत्र 'मुख्येषु त्वेषाम्' इति डा. जौली. मूलपाठः।

व्यतिरिक्ताजन्यत्वात् आपज्जननिमित्तसंज्ञा चेत्यलम् । प्रधानसिद्धि-र्मन्त्रिप्रतिक्रिया ।

[९] आयत्तासिद्धिरिति, अमात्याप्रतिक्रिया (?)

[१०] ननु मन्त्र्यमात्योभयजन्या तावत्कथं प्रतीकार्या न तावन्मन्त्रिणा तस्यापद्धेतुभूतत्वे प्रतिकारकत्वायोगात् । नचामात्ये तत एवेत्यत्राह-उभयेत्यादि । मन्त्र्यमात्ययोः सम्भूयापद्धेतुत्वे तत्प्रतिक्रिया स्वामि-मन्त्रिभ्यां सम्भूय प्रतीकार्येत्यर्थः ।

[११] दूष्यैरदूष्यैश्च सम्भूय जन्यत्वादित्यर्थः ।

[१२] तस्याः प्रतिक्रियामाह—आमिश्रायामिति। अदूष्यतः प्रतिक्रिया स्यादित्यर्थः ।

[१३] अत्रोपपत्तिमाह—आलम्बनेत्यादि । बन्धुवधादिरूपः क्रुद्धत्वा-दिति कोपस्यालम्बनं तदभावे हि तमालम्ब्य उत्पत्तौ ( एवं कामज-चतुर्वर्गस्य क्रमानन्तर्येण द्विकद्विकमादायान्योन्यतो गरीयस्त्वं निरू-पितम् । इदानीं सर्वनिकृष्टयोर्द्वयोर्व्यसनयोः मतभेदेनोभयोरपि गरीयस्त्वमित्याह—द्यूतमद्ययोरित्यादिना । एकेषामिति, आचार्य-मतमिति शेषः । हेतुमाह—पणनिमित्तो हीति । पणः पणनीयं द्रव्यं निमित्तं यस्य स तथा, पणितद्रव्यलाभार्थो जयः, तद्धानार्थः पराजयो हि कोपो न स्यादित्यर्थः ।* ) आलम्बनभूतानां अदूष्याणां प्रतीकाराद-भावे सति...............दूष्ये तस्मादित्यर्थः ।

[१४] शत्रुमित्रानाह—मित्रमित्राणामित्यादि । एकीभावादित्यादि, एकीभावादिति एकमनस्कत्वादित्यर्थः ।

[१५] कथं मित्रतः सिद्धिरित्यत्राह—सुकरो हीति ।

[१६] मित्रमपि सन्धिमानिच्छ†...........तदुपजपेदित्याह—मित्र-कश्चेदिति‡ ।

---

* अयं कोष्ठान्तर्गतः पाठो व्यसनाधिकारिकान्तर्गततृतीयाध्यायनिविष्टषट्षष्टितम-सूत्रस्य व्याख्यानरूपः । लेखकप्रमादवशादत्राप्यापतित इति प्रतीमः । परं तत्र त्रुटितः कश्चन पाठांशोऽत्र समुपलब्ध इति समीचीनमेव जातम् । अध्येतृभिस्तु स्थलद्वयपठितो-यं पाठो मिथः संयोज्य संगमनीय इति ।

† अत्र कदाचित् '०च्छन्नभीदणं तदुप०' इत्याद्यानुपूर्वीकः पाठो भवेत् ।

‡ डा. जौलीसम्पादितमूलपुस्तके 'मित्रश्च' इत्येतावन्मात्र एव पाठः।

[२०]उपजापात् सत्रिभिरमित्राद् भिन्नं कृत्वा मित्रं लभेतेत्याह—तत इत्यादिना।

[२१]भूम्येकान्तरत्वाभ्यां क्रमात् परम्परावस्थितस्य मित्रसङ्घस्यान्तेऽवसाने स्थितः तं लभेत, तथासति मध्यगतास्सर्वेऽपि तद्द्वारं भिन्नानि स्युरित्याह—मित्रसङ्घस्य वेत्यादिना।

[२१]मध्यस्थायिनि लब्धेऽप्यन्तस्थायिनो भिद्यन्त इत्याह—मध्यस्थायिनि वेति।

[२२]मित्रादीनां ये आश्रयभूतास्तस्मादेव..................तस्माच्च परस्परतश्च वा भेदकान् सामादीन् प्रयुञ्जीतेत्याह—यथा वैषा* मित्यादिना।

[२३]धार्मिकस्य सामप्रयोगप्रकारमाह—धार्मिकमित्यादि। जातेस्तपोस्तै कर्यादिना कुलस्यादितत्वादीनां श्रुतस्य बहुसच्छास्त्रविषयत्वादिना वृद्धस्य निषिद्धवर्जनादिना सम्बन्धेन यौवनादिना पूर्वेषां कुलवृद्धानां त्रैकाल्ये कियद्द्रव्यापकारश्चापकाराभावश्च, भाविनौ दुर्ज्ञानतया न स्तुतिविषयौ तथाप्य( सं ? न ? )नुमेयौ सुज्ञेयत्वात्तथोक्ताविति ग्राह्यम्। एभिः धार्मिकं सान्त्वयेदित्यर्थः।

[२४]साम्ना भेदनयोग्यमाह—निवृत्तेत्यादिना। उत्साहो विक्रमः ( पूर्वतोऽन्यं कञ्चिन्मित्रतया लिप्समानमित्यर्थः। अन्यस्माद्वेति, पूर्वस्मान्मित्रादविश्वासेन बिभ्यन्तम्। मैत्रीप्रार्थनमिति, सर्वैरविरोधरुचिम्†।) सन्नि(नि)वृत्तोस्येति तथा। विग्रहश्रान्तमिति, विग्रहेण चिरयुद्धेन श्रान्तम्। प्रतिहतोपायमिति, शत्रौ निष्फलीभूतसामादिप्रयोगम्। क्षयव्ययाभ्यामित्यादि, युग्यपुरुषापचयेन दीर्घयाध्वयात्रया विषण्णम्। शौचेनेत्यादि, सत्यसन्धत्वादिना शौचवन्तं अन्यममित्रं मित्रतया लिप्समानम्। अन्यस्माद्वेति, विजिगीषुतोऽन्यस्मान्मित्रादपि अविश्वासेन बिभ्यन्तम्। मैत्रीप्रधानमिति, सर्वैरविरोधरुचिम्। कल्याणबुद्धिमिति, अशठमतिम्। साधयेदिति, उपगृह्णीयादित्यर्थः।

---

* अत्र 'यथा चैषाम्' इति डा. जौली. मूलपाठः।

† अयं कोष्ठान्तर्गतः पाठो भ्रमादेवात्र लिपिकृत इति प्रतीयते। अत्रैव सूत्रव्याख्यायां यथास्थानमस्य सन्निहितत्वात्।

[25]दानमाह—लुब्धमिति। स्वार्थेष्वपरितुष्टं क्षीणं कृशम्। तपस्वि-मुख्यावस्थापनापूर्वामिति, तपस्विनां महात्मनां प्रधानञ्च प्रमाणीकरण-पूर्वमित्यर्थः। साधयेदिति, स्वीकुर्यात्।

[26]परस्वत्वापादनफलकः प्रदत्तो दानमिति सामान्यलक्षणस्य स्फुटत्वात्तस्य विभागमाह—तत्पञ्चविधमिति। तद्दानम्।

[27]देयाविसर्ग इति, दानयोग्यस्य विमोक्षः, यथा परस्माद् गृहीतायां भूमौ ब्रह्मदेयादीनां अदण्डकराणां यथापूर्वं विमोक्षः। गृहीतानुवर्त्तनमिति, यस्याः स्वकुर्या(ल्या)दिभिर्गृहीतस्य भूम्यादेरनिषेधनम्। आत्तप्रतिदानमिति, आत्मनागृहीतस्यैव पुनः प्रतिपादनम्। स्वद्रव्येत्यादि इति पूर्वमदत्तस्य तदनुभुक्तपूर्वदानम्। परस्वेष्वित्यादि, परशोदिकमवस्तस्य गृहाण तच्च वै स्वतमस्तीति*।

[28]दानभेदमाह—परस्परेत्यादि। द्वेषितादात्मिकात् पापकारजो दोषः रोषपञ्चकार पौनः पुन्येनानुबन्धभूमिहरणं महापराध इति विवेकः। मित्रामित्राणां मध्ये ऽन्योन्यस्य द्वेषादिशङ्काविषयीभूतं सामवायिकेष्वन्यतम..........दोषादिष्वन्यतमेनैव भेदयेदित्यर्थः।

[29]प्रकारान्तरमाह—भीरुं वेत्यादि। परस्य बलीयस्त्वेन स्वाभियोगस्य कुण्ठीभावः स्यादिति भेदयेदित्यर्थः।

[30]प्रकारान्तरमाह—कृतसन्धिरित्यादि। मिथस्सन्धाय त्वदुच्छेदायोद्योद्यत इति।

[31]अत्रैव लिङ्गमाह—मित्रमस्येति। अस्य मित्रं विजिगीषुणः सन्धानार्थं प्रहितं हीत्यर्थः।

[32]प्रकारान्तरमाह—यस्य वेत्यादि। यस्यैषां मित्राणामन्यतमस्य स्वतो ऽन्यस्माद्वा देशात् पण्यादिना गच्छेयुः, तानि यातव्यात् गूढं संहितादानेन लब्धानीति वा भेदयेदित्यर्थः। सत्रिणश्चारयेयुरिति, एवं मिथ्याप्रसिद्धिं कुर्युरित्यर्थः।

[33]ततः किमित्यत्राह—बहुलीभूत इति। एवमस्मिन् प्रसिद्धे सतीत्यर्थः। अभिव्यक्तेनेति, सर्वथा वध्यतया निश्चिते न केनचिल्लेखं प्रेषयेत्।

---

* विपर्यस्तपदवर्णत्वात्पङ्क्तिरियमविस्पष्टार्था सर्वथापि प्रतीयते।

[34]लेखार्थमाह—एतत्त इत्यादि । इदमप्यपण्यादिकं गृहाण सन्ध्यर्थम् ।

[35] [36]पणितस्यार्थस्य शेषं पुनर्लप्स्यसे । आढ्यसामवायिकादिषु विरुद्धे विक्रमः स्वापातततो ऽपगच्छेदेवेति ।

[37]एनं लेखं चरेषु सामवायिकान्तरेषु अन्तपालादिभिर्ग्राहयेयुः, यथैतच्छासनं तैर्गृहीतं स्यात् तथा कुर्युः ।

[38]अरिप्रेषितः अरिविजिगीषुः ।

[39]प्रकारान्तरमाह--शत्रुप्रख्यातं वेत्यादि । सामवायिकेष्वन्यतमरूपस्य शत्रोरसाधारणतया प्रसिध्येत् । पण्यं रत्नाद्यभिज्ञानमङ्गुलीयकादि वा तत्तत्सुरादिभिर्हारयित्वा विजिगीषुः स्वहस्ते कुर्यात् ।

[40]अथ तस्मात् वैदेहकव्यञ्जना गूढपुरुषाः शत्रुगुणानां सामवायिकान्तराणां मध्येषु विक्रीणीरन् ।

[41]तच्च सत्रिणः परेषु सामवायिकान्तरेषु गृहीतं रक्षकैः कुर्युः ।

[42]एतदरिप्रदत्तं विजिगीषुणा विक्रयार्थं दत्तमिति वदन्तः भावे सत्येकस्य सामवायिकस्य विजिगीषुणा सह सन्धिजात इति सामवायिकान्तराणां बुद्धिः स्यादिति भेदफलम् ।

[43]प्रकारान्तरमाह—महापराधानित्यादि । विजिगीषुरात्मनो महापराधकृतोमात्यानर्था( र्थ )दानेन सत्कारेण स्वीकृत्य शस्त्रेण विषेणाग्निना वा युष्माभिर्व्यापादनीय इति निगूढं प्रेषयेत् ।

[44]तत्र प्रथमं तेभ्योप्यन्यतमममात्य..............ना शत्रुसकाशं गमयेत् ।

[45]तस्मिंश्च गते तस्य पुत्रांश्च दारांश्च निगूढमन्तर्हितं कृत्वा रात्रौ राज्ञा हत इति ख्यापयेत् ।

[46]ततः शेषानपि क्रमेण हतानेकैकशः शत्रोः प्रथमगतोऽमात्यः प्ररूपयेत् प्रदर्शयेत् ।

[47]ते चेद( म ? )मात्या यथोक्तं शस्त्रादिना शत्रोर्व्यापादनं कुर्युः नैतान् ग्राहयेत् । शत्रुप्रयुक्ता गूढपुरुषा एते इत्यादिभयावेदनैर्न ग्राहयेत् ।

[48]अशक्तिमतो वा शत्रोः गूढवधासमर्थात् तैरेव ग्राहयेत्, ते हि महापराधत्वात् विजिगीषोर्वध्या एवेति भावः ।

[४९] तस्यैवामात्यस्यान्यतममपि भेदेनोपायं कार्यमाह—आप्तभावेत्यादि। क्रमेणामित्रस्याप्तभावं गतस्सोऽमात्यस्तेषां सामवायिकानां यो मुख्यः प्रधानभूतः स सर्वदा त्वया शङ्कनीयो घातनीयश्चेत्युपजपेत्।

[५०] तस्य ( स्या ) मुख ( ख्य ) वधाय सामवायिकेष्वन्यतमं प्रत्यमित्रशासनं नियमनं मुख्याद् विजिगीषुतश्चोभयतो वेतन.........भ्युभयचे( वे )तनो मार्गरक्षकैः ग्राहयेत्। ततः सामवायिकानां मुख्यात् भेदः स्यादित्यर्थः।

[५१] पक्षान्तरमाह—उत्साहेत्यादि। उत्साहशक्तिर्विक्रमसामर्थ्यम्, तद्वतः सामवायिकस्य वा शासनं प्रेषयेत्।

[५२] अमुष्य प्रधानभूतस्य राज्यं गृहाण यथास्थितोऽयं सन्धिः नेष्ट इति।

[५३] तं लेखं परेषु सामवायिकान्तरेषु सत्रिणो ग्राहयेयुरित्यर्थः।

[५४] पक्षान्तरमाह—एकस्येत्यादि। स्कन्धावारमिति, शिबिरम्। वीवधमिति*, स्वदेशात्..................म्। आसारमिति, मित्रबलागतिम्। घातयेयुरिति, सत्रिण इत्येव।

[५५] इतरेषु मैत्रीवचनं तेभ्यो भेदनार्थम्। त्वमिति, सामवायिकेष्वेकस्त्वम्। एतेषामित्यादि, एतेषां सामवायिकानां त्वमेको घातयितव्यः कथमेभिः सन्धिरिति उपजपेयुरित्यर्थः।

[५६] पक्षान्तरमाह—यस्य वेत्यादि। सामवायिकेषु यस्य प्रसिद्धवीरो वा हस्त्यादिर्वा स्वयंभूतो वा विजिगीषोर्गूढपुरुषैः हतो हृतो वा स्यात्। तं सत्रिण इत्यादि, तं राजानं प्रति परस्परेण सामवायिकैरेव कुतोऽयमुपघात इति सत्रिणो ब्रूयुरित्यर्थः।

[५७] ततः शासनमित्यादि। येनेदं कृतमिति प्रागुक्तवन्तं...........
......तस्याभिशस्तस्य विजिगीषुरमित्रलेखतया शासनं प्रेषयेत्।

[५८] भूयोऽप्येवं कुरु हस्त्यादिवधं ततः पणशेषं दास्यामीति।

[५९] तदुभयवेतना इति। तच्छासनमभिशब्दादमित्राश्चोभयवेतनग्राहिणः विजिगीषुप्रयुक्ता ग्राहयेयुरित्यर्थः।

[६०] एवमभेदेन प्रकारानुक्त्वा तत्फलमाह--भिन्नेष्वित्यादिना।

* अत्र 'विविधम्' इति डा. जौली. मूलपाठः।

६१ एवं मित्रामित्रेषूक्तं भेदप्रकारं सेनापत्यादिष्वतिदिशति—तेनेति। अमात्यानिष्पादनादिरूपभेदविषयीकृतेन मित्रामित्रादिना सेनापत्यादयो विभेदतया व्याख्याता इत्यर्थः।

६२ साङ्घिकश्चेत्यादि। सङ्घवृत्ते च वक्ष्यमाणं सङ्घानां मिथो भेदविधिमत्र प्रयुञ्जीतेत्यर्थः।

६३ दण्डस्य विषयं प्रकारश्चेत्याह—तीक्ष्णमित्यादिना। अमर्षः तीक्ष्णः, उत्साहो विक्रमशक्तिः व्याधिना मृगयादिसक्तः, स्थितः शत्रुर्दुर्गवान् यस्य एतान् गूढपुरुषाः तीक्ष्णरसाग्निशस्त्रादिभिर्हन्युः। तत्र तीक्ष्णोत्साहिनो घाते शेषा निस्सारा भीताश्च स्युः, व्यसनिनोपघातस्तु सुकरः शेषाणामभीतिप्रदश्च। दुर्गवतो घाते शेषा भग्नाः स्युरित्यतः एषां वध्यत्वकथनम्। गूढपुरुषाः सम्भूयैनानुपायैर्हन्युरित्युक्तम्। तेष्वेक एव साधयेदित्याह—सौकर्यतो वेति, येन तद् घातः सर्वोपायशक्तेन सुकरः स एक एव वा तत्कुर्यात् निगूढनार्थमिति भावः।

६४ गूढपुरुषेषु क एवं शक्तिमानित्यत्राह—तीक्ष्णो हीति। साधयेदिति, (अ)मित्रादिकं हन्यादित्यर्थः।

६५ सर्वसन्दोहेति, गूढपुरुषैः सर्वसन्दोहेन यत्कर्म क्रियते ततो विशिष्टमेव करोत्येकोऽपि स इत्यर्थः। इत्युपायचतुर्वर्ग इति, उपायानां चतुर्भिः सम्मितो वर्ग एवं प्रकार इत्यर्थः।

६६ सामदानभेददण्डाः क्रमादेवमुक्ताः, तेषां पूर्वापेक्षा च उत्तरानपेक्षा च प्रयोगे नियतेत्याह—पूर्वः पूर्वश्चास्येति। चतुर्वर्गस्य। लघिष्ठ इति, अल्पाल्पावयवतया सुकर इत्यर्थः।

६७ लघिष्ठतामिवाह—सान्त्वमित्यादि। एकगुणमित्येकावयवम्।

६८ द्वैगुण्यप्रकारमेवाह—सान्त्वपूर्वकमिति।

६९ इत्यभियुञ्जानेष्विति, यातव्यं प्रति प्रस्थितेषु शिबिरगतेषु मित्रामित्रेषु एते सामादिप्रकारा उक्ता इत्यर्थः।

७१ प्रयाणात्प्राक् स्वभूमिष्ठेष्वपि तेषु तत्प्रयोगास्तुल्या एव।

७२ तत्र विशेषाङ्ग उच्यत इत्याह—विशेषस्त्विति।

७३ विशेषमेवाह—स्वभूमिष्ठानामित्यादि। स्वभूमिष्ठानां मित्रा-

मित्राणामन्यतमं प्रभूतैः सह पुरापि तद्विदितनाममुख्यान् दूतान् स्वमुख्यांश्च वा प्रेषयेत्।

[७४ ७५] ते च दूता एनं विजिगीषुणा सह न(नः)सन्धिरिति मिथ्या वदेयुरित्याह—अप्रतिपद्यमानमिति।

[७६] तमितरेषामित्यादि। तमिति, विजिगीषोर्मित्राद्यन्यतमेन सह कृतसन्धिम्। इतरे ये मित्रामित्रादयस्तेषां सङ्क्रामयेयुः प्रकाशयेयुः, विजिगीषुतो मित्रामित्राद्यन्यतमाच्चोभयतो वेतनग्राहिणो गूढपुरुषास्तदुभयरहस्यवेदितया सन्धिमितरेषां सन्धेयानां सङ्क्रामयेयुः।

[७७] युष्माकं मित्रामित्रान्यतमो योऽयं राजा स दुष्टः, विजिगीषुणा सह कृतस्यापि सन्धेर्गोपनाय। एवञ्च मित्राद्यन्यतमादितरेषां भेदः स्यादिति भावः।

[७८] यस्य वेत्यादि। यस्माद्भयमिति, येन वैरं यस्मिन् द्वेष इति च द्रष्टव्यम्। तस्मादिति, भयादिति हेतोः। भेदयेयुरिति, गूढपुरुषा इति शेषः।

[७९] भेदनप्रकारमाह—अयं त इत्यादि। शत्रुणेति, विजिगीषुणेत्यर्थः।

[८०] पुरा अतिसन्धत्ते इति। अचिरेणैवातिसन्धानं स्यादित्यर्थः। सन्धीयस्वेति, विजिगीषोः सन्धानविषयो भवेत्यर्थः।

[८१] अस्येति, मित्राद्यन्यतमस्य निग्रहे प्रयतस्व चेत्यर्थः।

[८२] भेदन एव प्रकारान्तरमाह—आवाहेत्यादि। आनमावाहः कन्यायाः, तस्या एव दानं विवाहः, ताभ्यां वा सम्बन्धं कृत्वा असंयुक्तान् तत्सम्बन्धरहितान् भेदयेदित्यर्थः।

[८३] एवं स्वभूमिष्ठेषु भेदप्रकारमुक्त्वा दण्डमप्याह—सामन्तेत्यादि। सामन्ता भूम्यनन्तराः, आटविका वन्याधिपतयः, तत्कुलीनाः स्वकुल्याः, अवरुद्धा नियन्त्रितपुत्राः, तेषां मित्रामित्राणां जनपदादीनि विजिगीषुर्घातयेदित्यर्थः।

[८४] सार्थव्रजाटवीयेति। घातयेदित्येव। य एषां सार्थाः नधनसंभारवाहिवृन्दानि, व्रजाः गोधनानि, अटव्यो द्रव्यहस्तिवनादीनि,

एतानि वा घातयेत्। दण्डश्चेति*, अभिसृतं वनाजीवना (जीवना ?) जीवादिप्रसक्तं बलञ्च घातयेदित्यर्थः। अटवीभिरिति तृतीयान्तपाठे सार्थादभिसृतं तद्रक्षकतया नियुक्तं बलस्कन्धमित्येकवाक्यतया योज्यम्। न केवलं तत्पदादिनिघातः कार्यः किन्तु तेषामपीत्याह--परस्परेत्यादि, अन्योन्यारक्षतया ऽन्यैर्दुरभिभवा जातिसङ्घा वक्ष्यमाणा राजशब्दोपजीविनः पिच्छिलिकादयः सङ्घाश्चैनान् मित्रान्(?) मित्रादीन् प्रहरेयुरित्यर्थः।

गूढाश्च तीक्ष्णरसादिभिश्च प्रहरेयुः। अग्निरसशस्त्रेणेति द्वन्द्वैकवद्भावः।

शत्रुमित्राव(?)प्रतीकारमुपसंहरति--पीतं सगिलवच्चेत्यादि†। पीतं..........शाकुनिकानां पक्षिविश्वासार्थं पक्षिरूपालक्ष्ययोगिदेहाच्छादनपटः, गिलो गिल्यते भक्ष्यत इत्यामिषं, ताभ्यामिव विजिगीषुः शठो गूढमि(म)ति भू(भू)त्वा अनुष्ठितैर्योगैः गूढोपायः पीतं सविश्वासनेन गिलवत् बडिशवदामिषेण च परमिश्रायामापद्यरीन् घातयेदित्यर्थः।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अभियास्यत्कर्मणि नवमे ऽधिकरणे षष्ठो ऽध्यायः।

## ९ अधि., ७ अध्या., १४५--१४६ प्रक.

### सू. अर्थानर्थसंशययुक्ताः तासामुपायविकल्पजाः सिद्धयश्च।

एवं बाह्याभ्यन्तरयात्रया उपजापप्रतिजापरूपा अपनयप्रभावा दूष्यादिशुद्धा मिश्राश्चापदो ऽभिहिताः। तत्र तासां स्वरूपतो हेतुभावात् अर्थानर्थतत्संशयहेतुतया तथात्वमभिधातुं सूत्रम्--अर्थानर्थसंशययुक्ता इति। आपदः कृततया ऽत्र विशेष्याः, अर्थो भूम्यादिलाभः अनर्थः तेषां शरीरादेर्वा विनाशः, तयोः संशयः; तैः फलभूता युक्ता आपदः उच्यन्त इत्यर्थः। प्रथमतस्तावदापदः षोढा, अर्थरूपाः

* अत्र 'दण्डं वा' इति डा. जौली. मूलपाठः।

† 'सगलवच्च' इति डा. जौली. मूलपाठः।

अनर्थरूपाः अर्थसंशयरूपाः अनर्थसंशयरूपाश्चेति, ताश्च पुनर्मिथो ऽनुबन्धभावाभावाभ्यां षड् वक्ष्यन्ते। अथ समन्तत उभयत एकत इति देशतोऽपि प्रत्येकं षड् भवेयुः। अथ यात्रादौ मध्येवा अन्ते चेति कालतोऽपि प्रत्येकं षडिति सम्भूयाष्टचत्वारिंशदिति भावः। *

[1]अत्र बाह्याभ्यन्तरभेदौ कारणे विशेषं व्यञ्जयन् प्रागुक्तमेव कारणमनुवदति—कामादिरित्यादि । कामक्रोधादिषड्वर्गः। स्वा इति अभ्यन्तरात्।

[3]कथमनयोः कोपहेतुत्वमित्यत्राह—तदुभयमासुरी वृत्तिरिति। कामादिरपनयश्च....................चार इत्यर्थ।

[4]स्वजनकोपस्य कथमापत्त्वमित्यत्राह—स्वजनेत्यादि।

[5]स्वजनकोप एव शत्रुवृद्धिहेतुषु स्यापत्स्यादित्यर्थः । आपदेव किं स्वरूपेत्यत्राह--अर्थ इत्यादि।

[6]कोप एव शत्रुवृद्धिहेतुषु...............आपदि च कारणमुक्तं, तदभिसन्धिनैवाह—योऽर्थ इत्यादि। योऽर्थ उपेक्षितः शत्रोरेव वृद्धिहेतुः स्यात् सोऽर्थोऽप्यापत्स्यादिति प्राप्नोति । यस्तैः प्रत्यादानयोग्यः स्यात् प्राप्त्यर्था या प्रभूतक्षयव्ययोत्पत्तिः स्यात् सापदित्यर्थः। आपदर्थ इति, आपद्धेतुरापद इवा...............र्थ इत्यर्थः।

[7]उदाहरति—यथेत्यादिना । आमिषभूत इति, अनेकैः स्पृहणीय एकगृहीतः सन् पुनः प्रत्यादेयः स्यात् । एवं शत्रोर्गुणान् प्रतिलोम्यादिव्यसने वा (ब) लात्प्राप्तोपि तदुपरमे तेनैव ग्राह्यः स्यादिति, एवं..........स्त्वितोपि प्रार्थनां विनैव स्वतः प्राप्तुं योग्यो ऽपि यः शत्रुणापेक्षितः शत्रोर्वृद्धिकरश्च सोऽप्यापदर्थः, पुनः प्रत्यादेयत्वादित्यर्थः। पश्चात्कोपेनेत्यादि,..............मूले दूष्यादिकोपो वा पार्ष्णिग्राहेण वा विरोधितः पुरस्तात् यातव्यात् लाभ इत्यर्थः। मित्रोच्छेदेनेत्यादि, मित्रस्य भूम्यादिभरणेन वा सन्धौ कृतेपि तदुल्लङ्घनेन वा प्राप्तः, तदभावमण्डलानभिमतो लाभ इत्यर्थः।

[8]अनर्थानप्याह—स्वत इत्यादि । स्वतो गृह्यमाणादर्थादेव वा, तन्निमित्तमन्यतो वा भयमित्यर्थः।

---

* अष्टचत्वारिंशत्वमापदां कया रीत्या संपन्नमिति सन्दर्भेणानेन नावगतमस्माभिः । सुधिय एव सम्यङ् निभालयन्तु।

[९]तयोः संशयमाह—तयोरनर्थ इत्यादिना । अर्थेन चे ( वे ) त्यर्थः तद्भावविषयः अनर्थो नवेति अनर्थतदभावाविषयः ।

[१०]अर्थोऽनर्थ इति । अर्थानर्थविषयः ।

[११]अनर्थोऽर्थ इति । अनर्थार्थविषय इति ग्राह्यम् ।

[१२]अर्थतदभावसंशयादीन् क्रमेणोदाहरति—शत्रुमित्रमित्यादिना । शत्रोर्मित्रं शत्रोरेवोपरि भेदादिनोद्योजयितुमर्थो नवेति संशयः, नत्व(न)र्थशङ्केति भावः ।

[१३]शत्रुबलमित्यादि । शत्रोर्मन्ये*ऽर्थसत्काराभ्यामावाहयितुमनर्थो नवेति संशयः, न त्व ( र्थ ) शङ्केति भावः । बलवदित्यादिभूमेर्बलवत्सामन्तत्वात् अनर्थशङ्का भूमिग्रहणं स्वरूपतोऽर्थतश्चेति भावः । ज्यायसेत्यादि बलाधिकौ सहैकमार्गेण यातव्याभियानं महादोषमिति वचनात् अनर्थो वा लाभः संभवात् अर्थो वेति संशय इत्यर्थः ।

[१४]तेषामिति । संशयानाम् । अर्थसंशयमिति, येषु योऽर्थो नवेत्यर्थः,स्पर्शरहितः संशयः तत्र प्रवर्त्तेतेत्यर्थः ।

[१५-२०]तयोरनुबन्धभावाभावं षड्वर्गमाह–अर्थोऽर्थानुबन्ध इत्यादि । अर्थः आपदर्थः योऽर्थः शत्रुवृद्धिमप्राप्तः करोतीत्यादिनोक्तः, तेनानुबन्धस्यापद्रूपत्वं निर्बाधम्, प्रथममर्थस्यार्थेनैवानुबन्धः, अर्थार्थानुबन्धाभावः, अर्थानर्थेनानुबन्ध इति; एवमनर्थस्याप्यनर्थेनैवानुबन्धः, अथानुबन्धाभावः, अथार्थो ( र्थे ) नानुबन्ध इति षडित्यर्थः ।

[२१]क्रमेणोदाहरति—शत्रुमुत्साद्येत्यादि† । शत्रूत्सादनवत् तदनुबन्धिनः पार्ष्णिग्राहादानस्यापि अर्थत्वात्तथोक्तः ।

[२२]अर्थं निरनुबन्धमुदाहरति—उदासीनस्येत्यादि । उदासीनात्फलं हिरण्यादि गृहीत्वा तस्य चतुरङ्गादिबलेन सहकारः निरनुबन्धोऽर्थः तस्यार्थानर्थयोरुभयोरपि अहेतुत्वादिति भावः ।

[२३]अर्थमनर्थानुबन्धमुदाहरति—परस्येत्यादि । दुर्बलो बलवतः प्रतिघातो ह्यन्तर्धिरिति ह्युक्तम्, तस्योच्छेदनम्, तदात्वेऽर्थो बलवतो निवारणभावादनर्थानुबन्धः ।

[२४]एवमर्थत्रयमुक्त्वाऽनर्थत्रयमाह–शत्रुप्रतिवेशस्येत्यादि । शत्रोर्यः प्रतिवेशो भूम्यनन्तरः तस्य शत्रुणा विरोधे कोशेन बलेन चानुग्रह-

* अत्र कदाचित् 'शत्रोर्बलमर्थसत्का०, इत्यादिपाठो भवेत् ।

† 'शत्रुमुत्पाद्य' इति डा. जौली. मूलपाठः ।

स्तदात्वेनर्थोऽप्यर्थानुबन्धः। अनर्थस्यानर्थानुबन्धस्य उदाहार्यं ते क्रमातिक्रमः पूर्वपूर्वस्य श्रेयस्त्वकथनविरोधो माभूदिति । अर्थानुबन्ध इति, तस्य शत्रुभङ्गफलत्वादिति भावः।

[25] हीनमित्यादि* । हीनं स्वतो दुर्बलं, शत्रुनिरासे स्वसहकारितयोद्योजयतया स्वयं निवृत्तिरनर्थो निरनुबन्धः। उत्साहनमर्थसाध्यतया ऽनर्थ एव, हीनस्य तु कुपितस्याप्यकिञ्चित्करत्वात् निरनुबन्ध इति भावः।

[26] ज्यायांसमित्यादि। प्रबलं शत्रुनिरासे स्वयं सहकरिष्यामीत्युत्साह्य निवृत्तिरनर्थो ऽनर्थानुबन्धः । प्रबलकोपे बाधनीयं स्यादिति भावः।

[27] एतस्मिन्ननुबन्धषड्वर्गे पूर्वः पूर्वो ऽपरिहार्यो ऽर्थः, पूर्वः पूर्वः परिहर्त्तव्यश्चानर्थ इत्याह—तस्येत्यादिना†। तस्येत्यनुबन्धषड्वर्गस्योपसंप्राप्तुं परिहर्त्तुञ्चेत्यर्थः।

[28] इति कार्यावस्थापनमिति । कार्ययोः प्राप्यपरिहार्ययोरर्थानर्थयोः स्वरूपतो व्यवस्थापनमित्यर्थः।

[29] देशतस्तयोर्व्यवस्थापमाह—समन्तत इत्यादि। देशस्य समन्तत उभयत एकत इति भेदमभिसन्धाय प्रथमं समन्तत इति देशविशेषिते अर्थसंशयापदौ दर्शयति-समन्तत इत्यादिना । देशप्रदर्शनेपि युगपदिति कालग्रहणं तयोः रूपत्वासिद्ध्यर्थमन्यथा समन्ततः प्राप्तानाममप्यर्थानां क्रमेण कर्त्तुं शक्यत्वादिति।

[30] सैव पार्ष्णिग्राहेत्यादि । सैव-समन्ततो युगपदर्थोत्पत्तिरेवेत्यर्थः। पार्ष्णिग्राहविगृहीतेति, पार्ष्णिग्राहेण विरोधितेत्यर्थः।

[31] द्वयोः प्रतीकारमाह—तयोरिति। समन्ततोऽर्थतः संशयापदोः। मित्राक्रन्दोपग्रहादिति, मित्रस्याक्रन्दस्य च सुकरसन्धानत्वेन तदालीककरणादिति भावः। सिद्धिरिति, प्रतिक्रिया।

[32] यद्यपि समन्ततो युगपदर्थं तत्संशयापदोरनन्तरं समन्ततो युगपदर्थानर्थसंशया वक्तव्याः, तथापि तावदुभयोर्थानर्थसंशयाया-

* अत्र 'हीनशक्तिम्' इति डा. जौली. मूलपाठः ।

† 'तेषाम्' इति बहुवचनान्तः पाठो डा. जौलीसम्पादितमूलपुस्तके ।

मतिदेशे वक्रमौरस्समन्ततो युगपदर्था( वह ? )पदमाह—समन्तत इति। समन्ततो युगपद् भयहेतुः सन्निधिः समन्ततोऽनर्थापदित्यर्थः।

[33]सैव मित्रेत्यादि । समन्ततोऽनर्थापदेव । मित्रविगृहीतेति, स्वानुकूलमित्रेण परिह्रियमाणेत्यर्थः ।

[34]द्वयोः प्रतिक्रियामाह—तयोरिति । समन्ततो युगपदनर्थतत्संशयापदोः । चलामित्राक्रन्दोपग्रहादिति, चलस्य दुर्गरहितस्य शत्रोः सुकरसन्धानत्वादाक्रन्दस्य च पार्ष्णिग्राहकप्रतिबन्धकत्वात्तत्प्रतिक्रियेत्यर्थः ।

[35]प्रतिक्रियान्तरमाह—परमिश्रेति। प्रागुक्तायाः परमिश्राख्याया आपदो यः प्रतीकारो मित्रसन्धादिद्वारक उक्तः, स एवात्रापि वा स्यादित्यर्थः। यद्यप्यनन्तरं समन्ततोर्थानर्थसंशया वक्तव्याः, तथापि तामुभयतोऽर्थानर्थसंशयायामतिदेक्ष्यन्तू( न्नु )भयते थ( र्था )माह-इतो लाभ इत्यादिना ।

[36]उभयतो( या ? )र्थायाः प्रतिक्रियामाह—तस्यामिति । यद्यपि समन्ततोर्थापदो मित्रतदुपग्रहात्सिद्धिरिति प्रागुक्तम्, तथापि अस्यापि तत्प्रतीकारत्वं ज्ञापयितुमाह—समन्ततोऽर्थायाश्चेति। लाभगुणयुक्तमिति, आदेयप्रसादका ये प्रागुक्ता लाभगुणाः तद्युक्तमित्यर्थः ।

[37]समन्ततो ऽर्थानां लाभगुणेपि तुल्ये किंकृतमित्याह—तुल्य इत्यादि । प्रधानमिति, श्लाघ्यफलेतरहेतुभूतं वा । आसन्नमिति, देशतः कालतः। अतिपातनमिति आत्ययिकम्। ऊनोपायेन भवेदिति, येन लाभेनावश्यंभाविना स्वयं हीनो भवति तमाददीतेत्यर्थः ।

[38]उभयतोऽनर्थमाह—इतोऽनर्थ इत्यादि ।

[39]तत्प्रतीकारमाह—तस्यामिति । यद्यपि समन्ततो ऽनर्थायाः प्रतीकारश्चलामित्राक्रन्दोपग्रहः प्रागुक्तः, तथापि मित्रेभ्यः सिद्धिमित्यादेरपि प्रतीकारत्वं ज्ञापयितुमाह-समन्ततो ऽनर्थायाश्चेति । सिद्धिमिति, अनर्थप्रतिक्रियाम् ।

[40]अत्र यद्यप्येकतोऽर्थाया अप्यापत्त्वमप्राप्तौ शत्रुवृद्धिकरणादिरूपं सम्भवेदित्येव, तथापि तस्या न भेदप्रयुक्तमापत्त्वमिति सा

नोद्दिष्टा; एवमेकतोऽनर्थाया अपि न देशनिमित्तमापत्त्वं स्वरूपत एवानर्थत्वेनापत्त्वात्, अतस्तस्याः प्रतीकार एवं वक्तव्य इति मन्वानो देशनिमित्तप्रकरणे मित्राभावे प्रकृत्यवयवत्यागप्रतीकार्यमन्तर्भावनेन तत्प्रतिक्रियामाह—मित्राभाव इति । प्रकृतीनां लघीयस्येति, लघुतरया क्षुद्रया प्रकृत्येति क्षुद्रप्रकृतित्यागेन प्रतिकुर्यादित्यर्थः ।

[41] उभयतो ऽनर्थायाः प्रतीकारमाह—उभयत इत्यादि । ज्यायस्येति, प्रकृतीनां प्रशस्यतरया मुख्यप्रकृतित्यागेनेत्यर्थः । समन्ततोऽनर्थायाः प्रतीकारमाह—समन्तत इत्यादि । मूलेनेति, स्थानीयत्यागेनेत्यर्थः ।

[42] अशक्ये इति । उक्तप्रकारत्यागैः अशक्ये प्रतीकारे स्वदेहस्यातिरिक्तं सर्वमप्युत्सृज्यापगच्छेत् ।

[43] ननु सर्वत्यागादपगमः कथमिति स्यादित्याह—दृष्टा हीति । जीवितमात्ररक्षणमपि नीतिरेव, पुनरपि आवृत्तिसम्भवादित्यर्थः । तथापि कथमयं सत्पुरुषाचार इत्यत्राह—यथा सुयात्रोदयनाभ्यामिति, सुयात्रो नलः, उदयनो वत्सराजः, ताभ्यामपि सर्वत्यागेन देहमात्रं रक्षितमिति भावः। सर्वत्यागेनापसृत्यया जीवतः पुनरावृत्तिः सा दृष्टैव लोके, यथा नलवत्सराजाभ्यामपक्रम्य पुनरावृत्तिः कृतेत्यर्थः ।

[44] एवमुभयधार्थामुभयधानर्थाञ्चाभिधाय उभयतोऽर्थानर्थामाह—इतो लाभ इत्यादिना । राज्याभिमर्श इति, जनपदाद्यवस्कन्दनादित्यर्थः। ननु समन्ततोऽर्थसंशया समन्ततोऽनर्थसंशया च यथा दर्शिते तथा पार्ष्णिग्राहविग्रहादुभयतोऽर्थसंशया च किं न दृश्यते इति चेत्, सत्यम्, समन्ततोऽर्थसंशयायामिव उभयतोर्थसंशयायामपि मित्राक्रन्दोपग्रहस्य प्रतीकारस्य तुल्यतया तस्या गतार्थत्वात्; एवमुभयतोऽनर्थसंशयायामपि चलामित्राक्रन्दोपग्रहस्य परिहारस्य तुल्यत्वात् न पृथग्ग्रहणमिति द्रष्टव्यम् ।

[45] उभयतोऽर्थानर्थायां प्रतीकारमाह—तस्यामनर्थेत्यादिना । अनर्थसाधक इति, अनर्थस्यापि प्रतीकारहेतुभूतो योऽर्थः, यस्यार्थस्यादाने शङ्कितोऽर्थो न स्यात् तमाददीतेत्यर्थः ।

[४६]यदि तु तथाविधोऽर्थो न स्यात् तदा राज्याभिमर्शात्मकमनर्थमेव प्रतिकुर्यादित्यर्थमाह—अन्यथा हीति ।

[४७]नन्वेवमुभयतो ऽर्थानर्थापदि समन्ततो ऽनर्थानर्थापद.........
.........तत्प्रतीकारश्च किं नोक्तावित्यत्रातिदेशमेव परिहारमाह—एतया समन्तत इति । साप्यस्त्येव, तत् प्रतीकारोऽप्ययमेवेति ग्राह्यमित्यर्थः ।

[४८]अनर्थार्थसंशयमाह—इतो ऽनर्थ इत्यादि । इतो ऽनर्थनिश्चयः अन्यतोऽर्थसंशय इत्युभयतोऽनर्थसंशयेत्यर्थः ।

[४९]प्रतीकारमाह—तस्यामिति । पूर्वमनर्थमेव साधयेत् प्रतिकुर्यात् ।

[५०]तत्सिद्धाविति । तस्यानर्थस्य प्रतीकारे सतीत्यर्थः । अर्थसंशयामिति, साधयेदित्येव ।

[५१]पूर्वमन्ततो ऽनर्थार्थसंशयाया अवसरे अनुक्तत्वात् तमप्युभयतो ऽनर्थानर्थसंशयायामतिदिशति—एतयेति ।

[५२]एवमनर्थनिश्चयवतीमुक्त्वा ऽनर्थसंशयवतीमाह—इतोऽर्थ इत्यादि ।

[५३]एतया समन्ततो ऽर्थानर्थसंशया व्याख्यातेति । साप्येतत्तुल्यरूपा ग्राह्येत्यर्थः ।

[५४]प्रतीकारप्रकारमाह—तस्यामिति । सामान्यतः सर्वप्रकृतीनामर्थसंशये प्राप्ते ततो मोचनावश्यंभावः पूर्वपूर्वायाः प्रकृतेः प्रथमं स्वामिनस्ततोऽमात्यादेरित्यर्थः ।

[५५]अत्रोपपत्तितया प्रधानाङ्गस्यानर्थापत्तिः सह्येति निदर्शयति—श्रेयो हीति । सर्वापराया मित्रप्रकृतेस्तदनन्तरपूर्वस्य दण्डस्य वानर्थसंशयप्राप्तौ स्वदण्डमित्रस्यैव सह्यत्व इत्यर्थः । एवं दण्डकोशयोर्दण्डस्यानर्थप्राप्तिः सह्या नतु कोशस्येत्याह—दण्डो वा न कोश इति, श्रेयानित्यनुषङ्गः ।

[५६]प्रकृतिर्हि द्विविधा—पुरुषरूपा द्रव्यरूपा च, तयोः साकल्येन मोचन(ना)शक्त्या तदवयवमोचनप्राप्तौ तदनुगुणं विशेषमाह—समग्रमोक्षणाभाव इति ।

[५७] तत्र पुरुषप्रकृतीनामिति । अनर्थतो मोचनात् बहूनां मोचनं ज्यायः । एवमनुरक्तो..............स्येत्याह—बहुलमनुरक्तं वेति । वर्जनीयानाह—तीक्ष्णलुब्धवर्जमिति, तयोराविश्वसनीयत्वादिति हृद्यम् । द्रव्यप्रकृतीनामवश्यमोचनीयत्वमाह—द्रव्येत्यादि । सारमिति, गुरुमूल्यं यथा कोशादौ रत्नादि । महोपकारमिति, यथा प्राणधृतिहेतु व्यूहादि युद्धे गजाश्वादिर्वा । द्रव्येष्ववश्यं मोचनीयत्वे प्रयोजनकमुक्त्वा मोचनीयद्रव्यलाघवाद्यनुगुणमुपायलाघवाद्यपि स्यादित्याह-सन्धिनेत्यादि । मोचनीयद्रव्यलाघवे तदुपायगुणलाघवमपीत्यर्थः । गुरूणि द्रव्याणि विग्रहाभ्यां मोचयितुं यतेतेत्याह—विपर्ययेणेति* । विपर्यये इत्यपपाठः ।

[५८] एवं मोचनीयं तदुपायभूतं सन्ध्यादिलाघवञ्चोक्त्वा इदानीमापन्मोचनस्यैव प्रकारमाह—क्षयेत्यादिना । क्षयो नामा...वं प्राप्तिः, ततः स्थानं प्रकृतिस्थतां लिप्सेत, स्थानाच्च वृद्धिः, न पुनः क्षयाद् वृद्धिमित्यर्थः ।

[५९] वृद्धिप्राप्तस्यैव ततः स्थानक्षयप्राप्त्या यदि विशेषवृद्ध्यतिशयः प्राप्येत, तदा क्षयस्थानवृद्धय इति क्रममपहायानवद्दतोऽपि वृद्धित एव स्थानक्षयौ प्राप्नुयादित्याह—प्रतिलोम्येन वेत्यादिना । विशेषं पश्येदिति, वृद्ध्यतिशयं लिप्सेतेत्यर्थः ।

[६१] एवं देशापदमुपसंहृत्य कालद्वारकापदामपि देशादुक्तप्रतीकारमतिदिशति—एतेनेति । देशनिमित्तापदां प्रतिविधानकथनेनेत्यर्थः । यात्रादिमध्यान्तेष्विति†, कालद्वारकापदामित्यर्थः । उपसम्प्राप्तिरिति, प्रतिविधानसहितेति भावः । व्याख्यातेति, यथा समन्ततो युगपदर्थोत्पत्त्यादयो देशापदः पार्ष्णिग्राहाक्रन्दमित्रोपग्रहादिसन्ध्याः तथा यात्रायाः आदिमध्यान्तरूपकालावस्थानिमित्ता अप्यापदः प्रतीकार्या इत्यर्थः । ननु समन्ततो युगपदर्थत्यादिषु देशनिमित्तता न भेदकः (?) यात्रायास्तु आदिमध्यान्तावस्थानां भेदकतया कालभेदनिमित्तत्वमुक्तमित्यलम् ।

---

* डा. जौलीसम्पादितपुस्तके तु 'विपर्ययैः' इति बहुवचनान्तः पाठो दृश्यते ।

† अत्र 'यात्रामध्यान्तेषु' इति डा. जौली. मूलपाठः ।

६२ ननु यात्रादिमध्यान्तेषु अर्थानर्थसंशया युगपत्सम्भवेयुः, तदा तत्रार्थोपादानादिनियमः शक्यः स्यात् तद्यौगपद्यमेव न सम्भवतीत्यत्राह—निरन्तरेत्यादि । तत्र यात्रादाविति*, अर्थानर्थः आपदर्थः प्राप्तुं श्रेयान् भवतीत्यन्वयः । निमित्तमाह—पार्ष्णिग्राहासारप्रतिघातेति, अर्थेन पार्ष्णिग्राहादयः प्रतिबद्धुं शक्या इति भावः । आधा-(सा)रो यातव्यस्य मित्रबलं तयोः प्रतिघातान्निमित्ततयेत्यर्थः । न केवलं तत्प्रतिबन्धार्थं किं तर्हि क्षयव्ययार्थमपीत्याह—क्षयव्ययेत्यादि, यात्रायां क्षयव्ययावर्थसाध्यौ; तथा प्रवासो दूरगमनमपीति, आदेयमपि यातव्यगृहीतं भूम्यादिकमप्यर्थोपगृहीतसाहाय्यप्रत्यादेयम्, एवं प्रयातस्य मूलं स्थानीयाद्यप्यर्थेन रक्ष्यमिति तन्निमित्ततयार्थः श्रेयानित्यर्थः ।

६३ तथानर्थस्तत् संशयोऽपि यात्रारम्भे स्वभूमिषु सुखप्रतीकार्य इत्याह—तथानर्थ इत्यादिना ।

६४ एतेनेति । यात्रामध्येऽपि उक्तानां निमित्तानां तुल्यत्वादिति भावः ।

६५ यात्रान्तेत्वर्थ एव श्रेयान्..............नर्थादित्याह—यात्रान्तेत्विति । यात्रान्ते तु यातव्यस्य कर्शने वोच्छेदने वार्थः प्राप्यः नानर्थः तत्संशयो वा ।

६६ परभूमिषु...†...................यात्, बद्धवैरस्य शत्रोः छिद्रान्वेषणपरत्वादिति भावः ।

६७ अस्यापवादमाह—सामवायिकानामिति । सामवायिकैः सह प्रयातस्य तत्प्रधानस्येदं विधानं, अपुरोगस्यत्वप्रधानभूतस्य विशेषोऽस्तीत्यर्थः । तमाह–यात्रेत्यादि, यात्रामध्यान्तयोरप्रधान........तत्संशयो वा । प्रकृतकार्य एव हेतुमाह–अनिबन्धगामित्वादिति‡, साम-

* डा. जौली. मूलपुस्तके तत्ररहितो 'यात्रादौ' इत्येतावन्मात्र एव पाठो वर्त्तते ।

† अत्र कदाचित् "पराबाधभयात्' इत्यानुपूर्वीकः पाठो भवेत् । सूत्रप्रतीकन्त्वत्र न दृश्यते । वस्तुतस्त्वित्थमनुक्रमो भवेत्पाठस्य:—"पराबाधेति । परभूमिषु पराबाधभयात्, बद्धवैरस्य शत्रोः" इत्यादि ॥

‡ 'अनुबन्धगामित्वात्' इति डा. जौली. मूलपाठः ।

वायिकैः सम्भूय गमने तत्प्रधानभूतस्य ततोऽन्यत्र च गमनमप्यशक्यम्, सम्भूयागमने तु तत्प्रधानस्य निष्प्रतिबन्धमन्यत्रापि गमनं शक्यमित्यर्थः।

[६८]एवमर्थानर्थसंशयानामन्योन्यप्रेषया प्रतिकार्यत्वाद्यभिधाय तेषामेव प्रत्येकं वर्गभेदप्रदर्शनेनापि तारतम्यमाह—अर्थ इत्यादिना। प्रयोजनवाचिनो ऽर्थशब्दस्य त्रिभिः समितोऽयं वर्ग इत्यर्थः।

[६९]अर्थवर्गस्य प्राप्यत्वे तारतम्यमाह—तस्येति। पूर्वः पूर्व इति, अर्थारम्भश्रेयस्त्वमित्यर्थः।

[७०]अर्थधर्मकामानामपि पर्यायैरनर्थत्रिवर्गः, तस्य क्रमात् पूर्वपूर्वत्वप्रतीकार्यत्वमित्याह—अनर्थ इत्यादिना।

[७२]अनर्थादयो नार्थाद्यभावमात्ररूपाः, किन्तु विरोधिरूपा इत्याशयवान् संशयत्रिवर्गमाह—अर्थो ऽनर्थ इत्यादि। संशयत्रिवर्गे ह्यर्थादयः पूर्वपक्षाः, अनर्थादयश्चोत्तरपक्षाः।

[७३]तत्रानर्थानां सन्धौ प्रतिक्रियायां कृतायां अर्थादयः प्राप्या इत्याह—तस्येति।

[७४]उपसंहरति—इति कालावस्थापनमिति। यात्रादिमध्यान्तवदर्थानर्थादित्रिवर्गेष्वपि पौर्वापर्यद्वारकमेव कालान्वय इति भावः (ह्यम्)।

एवमापदो ऽभिधाय तासां सामादिरूपां प्रतिक्रियामवतारयितुं सूत्रम्—तासामुपायविकल्पजाः सिद्धय इति। तासामापदां सामाद्युपायप्रभेदजाः प्रतिक्रिया उच्यन्त इत्यर्थः।

[७६]तदर्थमाह—एतासां सिद्धिरिति*। ननु समन्ततो ऽर्थादीनां सर्वापदामपि मित्राक्रन्दोपग्रहादिरूपा सिद्धिरिति......स(त्र) त्रोक्तैव, पुनः किमनेनारम्भेणेति चेन्न, तत्र सामादिविषयभूता मित्रादय एवोक्ताः, न तु तदुपायभूताः सामादयः, तेषामत्राभिधानमिति क्व पौनरुक्त्यम्।

[७७]तत्पुत्रादिविषये तूपायविशेषान् नियमयति—पुत्रेत्यादिना। बान्धवा ज्ञातिसम्बन्ध्यादयः। अनुरूपेति, पुत्रादयो विधेयत्वगुण-

* 'तासां सिद्धिः' एतावन्मात्र एव पाठो डा. जौली. मूलपुस्तके।

त्वाद्युपेता इति ह्युत्सर्गः, तत्र सामादय एव यथायथमुचिताः, कार्यकरत्वादित्यर्थः । पौरेत्यादि, पौरादीनामनुरागादिमतां विधेयानाञ्च सामदण्डानौचित्यात् दानभेदाभ्यां सिद्धिरित्युक्तं सामन्तेत्यादि(ना ?), सामन्तादीनामभव्यतया सामान्यविषयत्वादुक्तं भेददण्डाभ्यामिति ।

[७८]इत्यनुलोमेति* । सामदानभेदाद्यभ्युपाया क्रमावस्थिताः, तत्र पूर्वपूर्वाणौ( नौ )चित्ये सति उत्तरोत्तरप्रयोग इति क्रमानुरूपा प्रतिक्रियेत्यर्थः । विपर्यये प्रतिलोमेति, अत्रादिक्रमे सामादिक्रमनियमोऽनुलोमत्वं, तेषां पुत्रादीनां विपर्यये यथोक्तोचितविधेयत्वादिस्वराद्यभावे सामन्तादीनां सौजन्यादिना वैरकारणाद्यभावे पुत्रादिषु भेददण्डादिः सामन्तादिषु सामदानादिरिति च प्रतिलोमत्वम् ।

[७९]मित्रामित्रेष्विति । भूम्येकान्तरत्वेपि कुतश्चिन्निमित्ताद् विकृतास्तेषु । व्यामिश्रा सिद्धिः सर्वोपायप्रयोगो न्याय्य इत्यर्थः ।

[८०]मिथो विरुद्धप्रायाणां सामादीनां कथमेकत्र प्रयोग इत्यत्राह—परस्परेति । अन्योन्यस्य ये विषयास्तेषां मिथो विरुद्धा अप्येते साधकाः सहकारिणः सत्त्वादिगुणत्रयवदित्यर्थः ।

[८१]अस्यापवादतया विषयभेदेन क्वचित् व्यवस्थामाह—शत्रोरित्यादि । शङ्कितेषु क्रुद्धत्वभीतत्वादिना कृत्यभूतेषु शत्रोरमात्येषु साम्नैव सिद्धिः स्यात् नापदेत्यर्थः ।

[८२]दूष्येत्यादि । शत्रोरिति च शेषं निर्वर्त्तयतीति† चानुवर्त्तनीयमिहोत्तरत्रापि । शक्तिमत्स्विति, उत्साहादिशक्तिमत्स्वमात्येषु दण्ड एव प्रयोज्य इति नियम इत्यर्थः ।

[८३]एवमुपायानां विषयभूतपुरुषापेक्षया व्यवस्थासङ्करौ प्रदर्श्येदानीमापदां गुरुलघुत्वानुगुण्येनापि नियोगविकल्पादिप्रकारानाह—गुरुलाघवेत्यादि । गुर्विति भावप्रधानो निर्देशः, गौरवलाघवयोगादित्यर्थः ।

[८४]नियोगादीन् स्वयमेव दर्शयति—अनेनैवेत्यादिना । नान्येनेति, अत्र सिद्धिरिति शेषः ।

* अत्र 'एषानुलोमा' इति डा. जौली. मूलपाठः ।

† एकाशीतितमसूत्रे 'शेषप्रयोगं निवर्त्तयति' इत्यात्मकः पाठो डा. जौलीसम्पादितमूलपुस्तके दृश्यते ।

[87]एषां नियोगादिभिर्यावन्तो भेदाः स्युः तान् दर्शयति—तेषामित्यादिना। एकैकतैव योगः प्रयोगो येषान्ते तथा, सामादयश्चत्वार एकैकशः प्रयोज्या इत्यर्थः। एवं द्वित्वेन त्रित्वेन चतुष्ट्वेन च प्रयोगो येषामिति व्याख्येयम्। अत्रैवं पञ्चदश प्रयोगाः, सामादय एकैकशस्तावच्चत्वारः, अथ त्रिकाण्यपि चत्वार्य्येव, यथा सामदानभेदाः सामदानदण्डाः सामभेददण्डाः दानभेददण्डाः इति।

[88]अथ द्विकानि षट्, यथा सामदाने सामभेदौ सामदण्डौ दानभेदौ दानदण्डौ भेददण्डाविति।

[89]अथैकं चतुष्कमिति।

[90]तावन्तः प्रतिलोमा इति। दण्डादारभ्य सामपर्यन्ता एकैकशश्चत्वारः। दण्डभेददानानि दण्डभेदसामानि दण्डदानसामानि भेददानसामानि। द्वित्रिद्विकानि च षट्—दण्डभेदौ दण्डदाने दण्डसामनी भेददाने भेदसामनी दानसामनी इति। व्युत्क्रमश्चतुर्योगो दण्डादिसामान्तः प्रयोज्यः, व्यक्रमेऽपि प्रयोगपौर्वापर्यभेदानुलोमप्रतिलोमभेदोपयोग इति ग्राह्यम्।

[91]एवं तथैव प्रतिक्रियया प्राप्तं सिद्धीनामपि चातुर्विध्यं दर्शयति—तेषामित्यादिना। तेषां सामादीनां दण्डादीनाञ्च मध्ये एकतो या सिद्धिः सैकसिद्धिरित्यादिरूपतया चतुर्धा सिद्धय इत्यर्थः।

[95]आपत्त्वेन प्रकृतेष्वर्थानर्थसंशयेषु अर्थस्य धर्मादित्रिवर्गतयोक्तत्वात् तेष्वप्यर्थस्यैव प्राधान्यात् तस्यैव त्रिवर्गानुबन्धतया सर्वसिद्धितयाख्यायत इत्याह—धर्ममूलत्वादित्यादि।

[96]यद्यप्यापत्सु सिद्धिशब्दः प्रतिक्रियापर्यायः प्रकृतः, तदुभयोरपि फलरूपत्वसाम्येन लाभपर्यायो ऽत्र प्रयुक्त इत्याशयवानुपसंहरति—इति सिद्धय इति।

[97]एवमपनये चामानुषीरापदोऽभिधाय दैवीराह—दैवादित्यादि। दैवं पूर्वकृतमदृष्टम्। प्रमारः सङ्कशो निर्व्याधिकं मरणम्। विद्रवो जनपदप्रपलायनम्। आसुरी सृष्टिः* मूषिकादीनां प्रभूतोत्पत्तिः।

[98]प्रणिपातो नमस्कारादिः, सिद्धिः प्रतिक्रिया उक्ता।

* 'आसुरी वृष्टिः' इति डा. जौली. मूलपाठः।

६६ एवं दैवापदोऽवश्यप्रतीकार्योपादानेनोपसंहरति—अतिवृष्टिरित्यादिना* । आसुरीसृष्टिः† मूषिकादिप्रभूतोत्पत्तिः । अतिवृष्ट्यादिकायां दैवापदि तत्प्रतीकारायाथर्वोक्तं शान्तिकादि प्रतिक्रिया स्यात् । तथा तपःसमाध्यादिसिद्धानामारम्भाः तच्छान्त्यर्थानुष्ठानानि च सिद्धयः प्रतिक्रियाः स्युरित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां अभियास्यत्कर्मणि नवमे ऽधिकरणे सप्तमो ऽध्यायः ।

पूर्णञ्चाभियास्यत्कर्म नवमाधिकरणम् ।



* डा. जौलीसम्पादितमूलपुस्तके 'अवृष्टिरतिवृष्टिर्वा' इत्यानुपूर्वीकः पाठो वर्त्तते । तथासति 'अवृष्टिरित्यादिना' इत्यात्मकं प्रतीकं स्यात् । सम्भाव्यते कदाचिदादर्शव्याख्यामूलपुस्तके 'अतिवृष्टिरवृष्टिर्वा' इत्यानुपूर्वीकः पाठो भवेत् ।

† 'आसुरी सृष्टिः' इति डा. जौली. मूलपाठः ।

# साङ्ग्रामिकं नाम दशमाधिकरणम् ।

## १० अधि., १ अध्या., १४७ प्रक.

### सू. स्कन्धावारनिवेशः ।

एवमभियास्यतः कर्त्तव्यं शक्तिदेशकालबलाबलज्ञानादिकमापत्प्रतीकारान्तमुक्त्वा अभियातस्य सङ्ग्रामे एव कार्यं इति तमधिकृत्य प्रवृत्तं साङ्ग्रामिकमित्यधिकरणम्। प्रस्थितस्य स्कन्धावारनिवेशनाद्यनेकावयवस्यापत्प्रतीकारवत् प्रमाणात्प्रागेव कार्यत्वात् आपत्प्रतीकारानन्तरं स्कन्धावारनिवेशमभिधातुं सूत्रम्—स्कन्धावारनिवेश इति । स्कन्धावारो युद्धभूमेरासन्नमावासस्थानं, तस्य निवेशो निर्माणादिविधिः, स उच्यत इत्यर्थः ।

ननु साङ्ग्रामिकस्य प्राथमिकावयवात् प्रयाणमेव प्रयातस्य निवेश इति स्थितं अतस्तदेव प्रथमं वाच्यमिति चेन्न, निवेशशब्दस्य निर्माणार्थत्वात् निर्मिते च स्कन्धावारैः(रे) पुनस्तत्र प्रयातस्य सबलस्यावासनस्थितेरिति । अतः स्कन्धावारनिर्माणं तावदाह—वास्तुकेत्यादिना । वास्तुका वास्तुविद्याविदः, वास्तुनि इति प्रदेश इत्यर्थः । नायकेत्यादि(ना ?), नायकः सेनाग्रयायी सहस्रपतिः, वर्द्धकिः स्थपतिः, मौहूर्तिकः मुहूर्तविधायकः, ते स्कन्धावारं शिबिरं वृत्तदीर्घचतुरश्रं वृत्तं दीर्घं वेत्यर्थः । कुत एवं विकल्प इत्याह–भूमिवशेनेति, निर्माणभूमेरनुगुणमित्यर्थः । चतुर्द्वारमिति, चतुर्दिक्ष्विति भावः । षट्पथमिति, त्रयः प्राचीना राजमार्गाः त्रय उदीचीना इति पूर्वोक्तप्रकारेणेति भावः । नवसंस्थानमिति, नवत्वचरमिति वा नवनवप्रविभक्तमिति वार्थः । मापयेयुरिति, निर्मापयेयुः मितया निवेशयेयुरिति वा ।

खातेत्यादि । खातः परिखा, वप्रं प्राकारमूढा(ला)धिष्ठानं, सालः प्राकारः, द्वारं गोपुरं, अट्टालकं प्राकाराद्बहिर्निर्गताः प्रदेशाः, एभिर्युक्तं कुर्यात् । पराघातभये चिरावस्थाने च संभाविते इति भावः । मध्यमस्येत्यादि, मध्यमस्य वास्तुहृदयस्य नाम उत्तरे उदीच्ये अवान्तरे नवभागे नवमांशे राजवास्तु राजगृहं, अर्धविस्तारमिति,

पञ्चाशद्धनुर्विस्तारम्, पश्चिमार्ध इत्यादि, तस्येति राजवास्तुनः पश्चिमार्धे अन्तःपुरं मापयेयुरित्यादिः । अन्तर्वंशिकेत्यादि, अन्तर्वंशिका अन्तःपुररक्षका, तत्सैन्यश्चान्ते तत्समीपे पश्चिमतो निवेशेतेत्यर्थः ।

[३]पुरस्तादिति । राजवास्तुनः पौरस्त्ये भागे उपस्थानं आस्थानमण्डपः कार्य इत्यर्थः । दक्षिणत इति, अत्र राजवास्तु इत्युत्तरत्र... ........भेदेष्वनिवर्त्तनीयम् । कोश इति रत्नादिस्थानम् । शासनकरणमक्षपटलं, कार्यकारणव्यवहारादिनिरीक्षणशाला, एतानि वास्तुनो दक्षिणतः कार्याणीत्यर्थः । राजोपवाह्यानामिति, राजवाहानाम् । एवं राजवास्तुनिवेशमुक्त्वा ततो बहिस्तद्रक्षाविधिः( धिं )तद्वर्तनश्चा( श्चा )ह—अतो धनुः शतेत्यादिना, अत इति धनुश्शतायामात्तदर्धविस्ताराच्चोक्ताद्राजवास्तुनः परस्ताद्धनुश्शतसमिता मिथोऽन्तरालाश्चत्वारः; (परीक्षाचास्याः ?) तत्र राजवास्तुनोऽनन्तरः शकटैः कार्यः, ततो धनुश्शतं मुक्त्वा मेधीप्रततीभिस्त्रिभिः, मेध्योनाम महत्यः कण्टकिवृक्षशाखाः तत्कृताभिः पूर्वतस्त्रिभर्वृत्तिभिः ततो बहिः स्तम्भैः सारदारुभिः, ततोपि बहिः प्राकारेणेत्यर्थः ।

[४]तत्र राजपरिघनिवेशक्रममाह—प्रथम इति । शकटपरिक्षेपे । पुरस्तादिति, प्राच्यां दिशीत्यर्थः । दक्षिणत इति, प्रथमपरिक्षेपे इत्येवं( व ) । कोष्ठागारमिति, धान्यस्नेहादिस्थानम् । महानसमिति, पाकस्थानम् । कुप्यायुधेत्यादि, कुप्यं शारिपर्याण..........लेणालाकादिगृहम्, आयुधशाला च ।

[५]एवं प्रथमपरिक्षेपेनिवेशमुक्त्वा द्वितीये अप्याह—द्वितीय इति । मेधिप्रतत्यवकाश इत्यर्थः । अश्वरथानामिति, अश्वानामजादित्वात्पूर्वनिपातः, तत्रापवाह्यव्यतिरिक्तानामिति शेषः । सेनापतेश्चेति, पत्तिदशकस्यैकः सेनापतिरिति वक्ष्यते तस्येत्यर्थः । अत्र वा नियमावचनात् यथासम्भवमिति ग्राह्यम् ।

[६]तृतीयपरिक्षेपेप्याह—तृतीय इति । श्रेण्य इति, काम्भोजकसौराष्ट्रकादयः । प्रशास्ता कण्टकशोधनाध्यक्षः । अत्र स्थानमित्यस्य निवृत्तत्वान्निवेश इति शेषो द्रष्टव्यः ।

[७]चतुर्थपरिक्षेपेप्याह—चतुर्थ इति । विष्टिरिति, कर्मकरवर्गाधिपतिः । नायक इति, सेनापतिदशकस्यैकः पतिः । मित्राणामटवि-

कानाञ्च बलमिति, स्वगुरुभैरधिष्ठितं निविशेतेत्यर्थ । अमित्रबलं क्रीतादितया प्राप्तमिति ग्राह्यम् ।

[8]चतुर्थपरिक्षेप एव वणिगा(जा)दयो वसेयुरित्याह—वणिज इत्यादि । रूपाजीवो जीविकैतासामिति, रूपाजीवा वेश्याः । अनुमहापथमिति, राजमार्गसमीप इत्यर्थः ।

[9]अथ सर्वतो बहिः प्रदेशे रक्षार्थं लुब्धकादयो निविशेरन्नित्याह—बाह्यक इत्यादिना । लुब्धका इति शबराः, श्वगणिन इति वृकधूयवन्तः । सतूर्याग्नय इति, बलापोतोऽश्वगणक्षोभेण ज्ञामार्थं तूर्यघोषैः अग्निधूमैश्च तत्प्रकाशनार्थमिति भावः । गूढाश्चारक्षा इति, गोपालादिव्यञ्जनाः प्रतिबला वा तज्ज्ञापनार्थं परावसर्पग्रहणार्थञ्चेत्याशयः ।

[10]शत्रूणामित्यादि । शत्रूणां येन प्रदेशेनापातशङ्का तत्र कूटकूपान् तृणच्छन्नकूपान्, अवपाता हर्त्तारः, कण्टकिनीरिति कण्टकिनीः फलकाश्चावस्थापयेदित्यर्थः ।

[11]अष्टादशवर्गाणामिति । यन्मौलभृतादिरूपं बलषट्कं तस्य प्रत्येकं पत्तिकसेनापतिनायकैः वर्गाधिपतिभिः त्रि( वा ? )धाभेदात् अष्टादशत्वं वर्गाणां, तेषामारक्षस्य रक्षाया विपर्यासं मुहुर्मुहुरन्यथाभावं कारयेदिति, परोपजापादिति भावः ।

[12]दिवायामञ्चेति । दिवासञ्चारनियमनमपि कारयेदित्यर्थः । तस्य फलमाह—अपसर्पेति ।

[13] .................निमित्तानि वर्जयेदित्याह—विवादेत्यादि । विवादो विप्रतिपत्तिः, सौरिकं सुराविक्रयः पानं वा, समाजो मेलकः, द्यूतं देवनम्, एतेषां वारणञ्च कारयेदित्यर्थः ।

[14]मुद्रारक्षणञ्चेति । मुद्रारक्षणं नाम प्रवेशनिर्गमनयोस्तत्प्रयोजकत्वव्यवस्थापनं कारयेदित्येष ।

[15]सेनेत्यादि । योद्धुं प्रयात.......... सैन्यान्निवृत्तमायुध... .........जीविनः, शासनेन लेखमुद्रादिचिन्हेन रहितम्, शून्यस्य सपरिकरराजरहितस्य स्थानीयस्य पालो बध्नीयात् इत्यर्थः ।

[16]एवं स्कन्धावारनिर्माणमुक्त्वाऽनन्तराध्यायार्थं प्रयाणमवतार-

यति--( तस्य स्थानीयस्य ? * ) पुरस्तादित्यादि । अध्वनो रक्षणानि विषमस्थलसमीकरणकण्टकापसरणप्रालोत्सारणादीनि, चकारादिन्धनानि च, निरुदकेषूदकानि सम्यक् कारयेत् । शास्ता वर्द्धकिविष्टिभ्यां सह सेनायाः पुरस्ताद् यायादित्यर्थः । वर्द्धकी स्थपतिः, विष्टिः खनकादिकर्मकराध्यक्षः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां साङ्ग्रामिके दशमे ऽधिकरणे प्रथमोऽध्यायः ।

---

## १० अधि., २ अध्या., १४८-१४९ प्रक.

### सू. स्कन्धावारप्रयाणं बलव्यसनावस्कन्दकालरक्षणञ्च ।

तदेवं निर्मिते स्कन्धावारे तत्र प्रयाणमभिधातुं सूत्रम्—स्कन्धावारप्रयाणमिति । स्कन्धावारं प्रति प्रयाणमुच्यत इत्यर्थः ।

[1]प्रयाणप्रकारमाह—ग्रामेत्यादि । स्थानीयादारभ्य स्कन्धावारं यावन्मध्ये ग्रामेषु वारण्येषु वा यावन्तो निवेशाः तृणकाष्ठजलवन्तस्तानिति, न केवलं निदेशप्रदेशान्नापि............वस्थानकालमपि परिसंख्याय प्रयाणकं दद्यादित्यर्थः । द्वित्रिमासावस्थानं स्थानम्, पञ्चषड्दिनाद्यवस्थानमासनम्, प्रकारात्रमात्र† स्थितिर्गमनम् ।

[2]देशकालपरिसंख्यानस्य फलमाह—तत्प्रतीकारेत्यादि । तयोः देशकालयोर्यः प्रतीकारस्तत्पर्याप्तभक्तोपकरणादि, ततो द्विगुणमुद्वाहयेत्, तत्र भक्तं तण्डुलस्नेहलवणादि, उपकरणं शयनासनवस्त्रादि । वाहयेदिति, अध्यक्षैरिति वा बलीवर्दादिभिरिति वार्थः ।

[3]सैन्येषु वा योजयेदिति‡, तेष्वेव निर्वाहतयार्पयेदित्यर्थः ।

[4]अन्तरेषु वेति । तत्तन्निवेशप्रदेशेषु प्रागेव निचितं कुर्यादित्यर्थः ।

---

* अयं कोष्ठान्तर्गतः पाठोऽधिको भाति । लेखकप्रमादवशात्कुतश्चिदापतित इति प्रतीयते ।

† अत्र हि 'एकरात्रिमात्रस्थितिर्गमनम्' इत्यर्थानुसारी पाठः सङ्गच्छते ।

‡ 'सैन्येष्वेव प्रयोजयेत्' इति डा. जौली. मूलपाठः ।

५गन्तॄणां क्रममाह—पुरस्तान्नायक इत्यादिना। नायकः सेनापतिर्दशकस्यैकः पतिः, स तु सेनाया पुरस्ताद्यायात्।

६मध्ये कलत्रं दारपुत्रादिकम्। स्वामी—राजा।

७पार्श्वयोरिति, अश्वाः पार्श्वयोर्गच्छेयुः। बाहूत्सारो भूत्वेति*, यथा पार्श्वयोर्द्वयोः बाहुभ्यामुत्सारकरो निरोधकप्रतिषेधार्थः य(त) था भूत्वेत्यर्थः।

८चक्रान्तेष्विति। सैन्यपश्चाद्भागे हस्तिनो गच्छेयुः। ९एवं परविषययाने बाधशङ्कायां यानप्रकारमुक्त्वा तद्भयाभावपक्षमभिप्रेत्याह—प्रसारवृद्धिर्वेति। एवञ्च भयाभावे प्रसारवृद्धिः, भये चासारवीवधादयो यथा स्युः तथा गच्छेयुरित्यर्थः, पुरो वा पश्चाद्वा पार्श्वयोर्वा सर्वतो वा।

१०अपि च वीवधोऽपि यथा न विहन्येत तथा यायादित्यभिप्रेत्य वीवधशब्दार्थमाह—स्वदेशादिति। स्वविषयादनुबन्धाविच्छेदाद्या द्रव्याद्यागतिः स वीवध इत्यर्थः। एवं मित्रबलं यथा निष्प्रतिबन्धमागच्छेत् यथा च कलत्रस्थानमपि सुरक्षितं स्यात् तथा गच्छेयुरित्यभिप्रेत्य तयोः संज्ञाद्वयमाह—मित्रबलमित्यादि। कलत्रस्थानमिति†, दारपुत्रादेः स्थानं अपसाराख्यमित्यर्थः। समेत्यादिना च रथादिभूमीर्वक्ष्यति।

११अत्र हेतुमाह—अभूमिष्ठानां हीत्यादिना। प्रतिलोमा इति, जेतार इत्यर्थः।

१२एकदिनगम्यस्याध्वनः प्रमाणभेदानाह—योजनमित्यादिना। योजनमिति गन्तव्ययोजनाद्यध्वावच्छिन्ना गतिरित्यर्थः। अध्यर्धयो-

* 'बाहूत्सारः' इत्येव डा. जौली. मूलपाठः। तत्र 'भूत्वा' इति नास्तीत्यर्थः।

† प्रतीतकमिदं जौली. पुस्तके न दृश्यते। कदाचिदियं व्याख्या षष्ठसूत्रस्य भवेत्, तथा सतीत्थं षष्ठसूत्रव्याख्यापाठः स्यात्—'मध्ये कलत्रं कलत्रस्थानमिति दारपुत्रादेःस्थानम्, अपसाराख्यमित्यर्थः'। अथवा पंक्तिरियमित्थं योज्या—'मित्रबलमित्यादि' इति प्रतीकावतरणिकायां 'कलत्रस्थानं सुरक्षितं स्या' दित्युक्तम्, किं तत्कलत्रस्थानमिति विवक्षायामाह—कलत्रेत्यादि। एवञ्च नास्य सूत्रप्रतीकत्वमिति सर्वं सुस्थम्।

जनमिति*, अर्धाधिकयोजनं षड्गोरुतमित्यर्थः । एतदपवादमाह—सम्भाव्या वेति, देशकालकार्याद्यानुगुण्येन वा या सम्भविनी सा वा गतिः कार्येत्यर्थः ।

[13]नायकस्य सेनापुरोगमनवत् सेनापतेस्ततः पश्चाद् गमनं निवेशनमपि नियतमेवेत्याह—पश्चादित्यादे ।

[14][15]अभ्याघातभये मकरादिव्यूहैर्यायादित्याह—पुरस्तादित्यादिना । दण्डभोगमण्डलासंहतेषु प्रकृतिव्यूहेषु भोगभेदो मकरः, शकटश्चासंहतभेदः, वज्रो मण्डलभेदः, सर्वतोभद्रो मण्डलभेदः, सूचीति वक्ष्यति, तैरित्यर्थः । अभ्याघात इत्यावर्त्तनीयम् । भयशङ्कायां मार्गेऽपि नियममाह—पर्श्वात्यादिना, स्वबलानुगुणभूमितद्विपर्ययाभ्यां क्षेत्रेत्यर्थः ।

[16]यात्रायां पथि विलम्बाविलम्बयोर्निमित्तभेदानाह—आश्रयकारीत्यादिना । तत्र शनैर्गमने हेतुमाह—आश्रयकारीति, आत्मनो वृद्ध्यर्थं कस्यचिदाश्रयं कर्त्तुमिच्छन् शनैर्यायादित्यर्थः । सम्पन्नघातीति, शत्रोः सम्पन्नं विषयं हनिष्यामीत्यपि तदर्थं शनैर्यायात् । पार्ष्णिरित्यादि, पार्ष्णिः पार्ष्णिग्राहः, आसारो मित्रबलम्, पार्ष्ण्यादिविकारप्रशमनार्थो वेत्यर्थः ।

[17]सङ्कट इत्यादि । तृणगुल्मविषमादिदुर्गमो मार्गः शोधनीय इति वेत्यर्थः ।

[18]कोश इत्यादि । कोशादिकस्य यावत्सम्पादनं प्रतीक्ष्यमिति वा । तत्र कोशो व्ययादि पर्याप्तोऽर्थः, दण्डः विक्षिप्तमागच्छत् स्वसैन्यं, स्वमित्राटविकयोरागच्छत् बलञ्च, विष्टिः कर्मकरबलं..............स्वबलयुद्धानुगुणः कालः, रात्रिवर्षादिकालभेदेन योधानामायोधनशक्तिभेदात् दोषान् ( ? ) प्रतीक्षणार्थं वेत्यर्थः ।

[19]कृतेत्यादि । पूर्वकृतानां दुर्गादिकर्मणां क्षयात् पुनस्तत्करणार्थं वेत्यर्थः । दुर्गस्य कर्मणा खण्डस्फुटितसंस्कारादेर्निचयस्य धान्यादिसंग्रहस्य रक्षायाः शून्यपालतया स्थापितबलादेर्वेत्यर्थः । मित्रेत्यादि, यत्साहाय्याय गतं यच्च कोशादिना वा क्रीतं वा बलं तस्य काल-

---

* 'अर्धार्धे' इत्येव डा. जौली. मूलपाठः । तत्र 'योजनं' इति पदं नास्तीति भावः ।

दैर्घ्यादिना निर्वेदो भावीति बुध्वा नेत्यर्थः । उपजापितार इत्यादि, ये शत्रोः दूष्याभियोगार्थमस्मानुपजपन्ति ते नातित्वरयन्ति वेत्यर्थः । शत्रुरित्यादि, यदुद्देशेन मयाभियोगः क्रियते तमभिप्रेतमर्थं शत्रुभिरभियोगमपि नैव दास्यतीत्येषु कारणेषु सत्सु शनैर्यायादित्यर्थः ।

[20]विपर्यय इत्यादि । उक्तकारणाभावे शीघ्रं यायादिति ।

[21]नद्यादिपूरप्रतिबन्धैस्तत्तरणोपायमाह—हस्तिस्तम्भेत्यादिना । स्तम्भोपरि घटितदारुफलकादिस्तम्भसङ्क्रमः । काष्ठेत्यादि, लघुकाष्ठानां वेणूनां वा सङ्घातैः । अलाबुभिरिति, तुम्बीफलकोशैः । चर्मकरण्डैः—चर्मावनद्धविदलभाजनैः । दृतिभिः भस्त्राभिः । प्लवैः, कोटिपात्रैः । गण्डिकाभिः, प्लवनकाष्ठैः । वेणिकादिभिः रज्जुभिस्तृणप(क)रण्डिकाभिरिति वा नद्यादींस्तारयेदित्यर्थः ।

[22]परैरुत्तरणमार्गप्रतिबन्धशङ्कायामाह—तीर्थाभिग्रह इति । शङ्कित इति शेषः । रात्राविति, अविज्ञातदशायामित्यर्थः । सत्रमिति, धान्ययवसादिकानि सत्राणीति वक्ष्यति । सत्रस्तीर्थो वा ।

[23]निरुद्ध उदके मार्गे कर्त्तव्यमाह—अनुदक इत्यादिना । चक्रीचतुष्पदमिति, चक्रमस्यास्तीति चक्री शकटं, चतुष्पदं करभबलीवर्दादयः तानुदकं वाहयेत् तान्वा प्रयुञ्जीत । अध्वप्रमाणेनेति*, यावन्निरुद्कोऽध्वा तावतः पर्याप्तं वा शक्त्यनुगुणं वेत्यर्थः ।

एवं स्कन्धावारप्रयाणमुक्त्वा मार्गादिषु येऽवस्कन्दकाला बलव्यसनानि च तत्र तद्रक्षणमभिधातुं सूत्रम्—बलव्यसनावस्कन्दकालरक्षणमिति । बलव्यसनानि अवमानितविमानितादीनि, अवस्कन्दकाला दीर्घपकान्तरयोः† वक्ष्यमाणाः, तेषु स्वबलरक्षणमुच्यत इत्यर्थः ।

[24]दीर्घकान्तारमित्यादि । दीर्घं कान्तारं गन्तव्याऽध्वतया यस्य तत् तथा एवं भूतं सैन्यं रक्षेदिति सर्वविशेषणानामागामिना सम्बन्धः । अनुदकमिति, नोदकमस्येति तथा । यवसेत्यादि, यवसं

* 'अध्वप्रमाणे' इति डा. जौली. मूलपाठः ।

† अत्र कदाचित् 'दीर्घकान्तारयोः वक्ष्यमाणाः' इति 'दीर्घकान्तारमित्यादयो वक्ष्यमाणाः' इतिवार्थानुसारी संगतः पाठो भवेत् ।

तृणं गजाद्याहारार्थम् । अनुदकमित्युक्तेपि पुनरिहोदकग्रहणं तस्य कष्टतमत्वद्योतनार्थम् । कृच्छ्राध्वगतमिति* दूरत्वादिना दुर्लङ्घ्याध्वमध्यगतम् । अभियोगप्रस्कन्नमिति†, चिरसन्नाहक्रान्तमित्यर्थः । क्षुत्पिपासाध्वक्लान्तमिति, कृच्छ्राध्वगतमित्यत्राध्वगतं कृच्छ्रत्वम्, अत्र तु सैन्यस्य क्लान्तत्वमिति भेदः । पङ्केत्यादि, गाढपङ्कतया गम्भीरतया वा दुस्तराणां नदीनां, अत्र तोयशब्दो लघुतोयाभिप्रायकम् । गम्भीरनदीति‡, अगाधतोयग्रहणादिति ग्राह्यम् । तथा दरीणां शैलानाञ्चारोहणे अपयाने अवरोहणे च व्यग्रमित्यर्थः । एकायनमार्ग इति, एकमात्रगम्ये एकमार्गे । शैलैः विषमैः गुल्मलतावगाहनादिसङ्कटतया वा दुर्गमे । बहुलीभूतं विप्रकीर्णमित्यर्थः । निवेशन+ इत्यादि, निवेशनदशायामप्रयाणदशायाम् । विसन्नाहं शस्त्रावरणादिरहितम् । भोजनेत्यादि, अशनपरम् । आयतेत्यादि, दीर्घाध्वगमनक्लान्तम्; कृच्छ्रश्रान्तमित्यत्राध्वगतो दोषः अत्र तु दीर्घगमनगत इति भेदो ग्राह्यः । अवसुप्तं निद्राणम् । व्याधीत्यादि, मरकः सङ्क्रामरणम् । व्याधितेति, व्याधिताः सञ्जातव्याधिकाः पत्त्यश्वादयोऽस्येति तथा । अभूमिष्ठमिति, स्वसैन्ययुद्धाननुगुणा वा भूमिः तत्र स्थितम् । बलव्यसनेषु चेति, अमानित्वादिषु वर्त्तमानमित्यर्थः । रक्षेदिति, रक्षितं कारयेत् ।

२५ परसैन्यञ्चेति । उक्तप्रकारमित्याशयः ।

२६ परबलस्येयत्तां ज्ञात्वा तदनुगुणं विक्रमे सन्धौ वा प्रवर्त्तितव्यमित्याशयवांस्तज्ज्ञानोपायमाह—एकायनेत्यादि । एकेनैव मार्गेण प्रयातस्य शत्रोः यः सेनानीश्वारः एकमार्गाद् बहिरेकैकशः परिघाभ्यां निष्क्रमणं तदा तत्संख्यानेन परबलस्येयत्ताज्ञानमित्यर्थः । एवं ग्रासाहारादिभिरपीत्याह—ग्रासाहारेत्यादि, ग्रासो गजाश्वादेर्भक्ष्यं आहारो मनुष्याणामुक्तमतण्डुलादि तद्भारसंख्यानेनेति । अथवा ग्रस्यत इति-

* अत्र 'कृच्छ्राध्वानम्' इत्येव डा. जौली मूलपाठः ।

† 'अभियोगप्रस्कन्दनं' इति डा. जौली. मूलपाठः ।

‡ जौलीसम्पादितमूलपुस्तके तु '०गम्भीराणां वा नदी०' इत्यात्मक एव पाठो वर्त्तते ।

+ 'निवेशे' इत्येतन्मात्र एव डा. जौली. मूलपाठः ।

ग्रासो ऽन्नादिकं तस्याहारो भोजनं तस्योच्छिष्टपत्रपुटिकादिसङ्ख्यानेनेत्यर्थः । शय्येत्यादि, शय्याया ये प्रस्तरणप्रदेशास्तत्संख्यानेन वा । अग्निनिधानेति, पाकार्थचुल्या ध्वजायुधयोर्वा संख्यानेन परबलयत्ताज्ञानं कार्यमित्यर्थः । परापसर्परक्षणेनात्मनो वा निश्चारादिकं निग्रहेदित्याह—तदात्मन इति, तदिति सेनानीश्चारादिकं स्वसेनानिश्चारादिकं यथा परापसर्पा न जानीयुस्तथा गूहेदित्यर्थः ।

प्रयाणानन्तरं निवेशयुद्धयोः कार्यत्वात् तदुचितायां भूमौ तौ कार्यावित्याह—पार्वतमित्यादि । पर्वतेषु भवं तथानुवनमिति, मरुभूमिरुपदुर्गं तद्वा वने दुर्गे वा* । सापसारप्रतिग्रहमिति, यात्राभङ्गादौ सति सुखेनापसर्त्तुं शक्यं स्यात् सोऽपसारः, यत्र स्थितश्च परबलापातं प्रतीच्छति स प्रतिग्रहः, पश्चाद् राजावस्थानं वा ताभ्यां सहितं उक्तदुर्गयोरन्यतरत् पृष्ठतः कृत्वा स्वबलोचितभूमौ युद्धनिवेशौ कुर्यादित्यर्थः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
नयचन्द्रिकायां कौटिलीयटीकायां साङ्ग्रामिके दशमे ऽधिकरणे
द्वितीयो ऽध्यायः ।

## १० अधि., ३ अध्या., १५०-१५२ प्रक.

सू. कूटयुद्धविकल्पाः स्वसैन्योत्साहनं स्वबलान्यबलव्यायोगश्च ।

एवं प्रयाणप्रकारे ऽभिहिते व्यूहविभागादिति प्रागपि परबलस्य प्रायाणादिषु सर्वावसरेष्ववस्कन्दसम्भवात् प्रथमं कूटयुद्धमभिधातुं सूत्रम्—कूटयुद्धविकल्पा इति । कूटं कपटं यद् युद्धं तस्य प्रभेदा उच्यन्त इत्यर्थः ।

[1] [2] तेषामवसरं दर्शयति—बलविशिष्ट इत्यादिना । सारबाहुल्याभ्यां बलेन शत्रुतः प्रकृष्टः प्रतीक्षितयोग्यकालः प्रोत्साहितशत्रुदूष्यमुख्यश्च यदा स्यात् तदा स्वबलोचितभूमौ प्रकाशयुद्धं कुर्यात् । कु(ब)लविशिष्टत्वाद्यभावे तु कूटयुद्धस्यावसरप्रदर्शनार्थमत्र प्रकाशयुद्धकथनमिति ग्राह्यम् ।

---

* पंक्तिरियं विभ्रष्टविन्यस्तपदवर्णत्वादविस्पष्टार्थेन ।

[३] एवमवसरमुक्त्वा तानेव दर्शयति—बलव्यसनेत्यादिना । बलस्य यदा व्यसनममानितत्वादि व्यसनाधिकारिके ऽभिहितं, ये चावस्कन्दकाला दीर्घका(ला ?)न्तारादयोऽत्रैवोक्ताः, तेषु परमभिहन्यादित्यर्थः ।

[४] यदा स्वबलोचितभूमौ स्वयं स्थितः, विपरीतः परः तदापि परमभिहन्यादित्याह—अभूमिष्ठं वेति ।

[५] स्वबलोचितभूमिष्ठमपि परमुपजापेन स्वीकृतपरप्रकृतिभिरभिहन्यादेवेत्याह—प्रकृतिग्रहो वेत्यादिना । आत्मनो ये दूष्या मुख्याः ये चामित्रा आटविकाश्च तेषां बलेषु भङ्गोऽनुभूयते तदसुधारेण विभूमिप्राप्तं बलमभिहन्यादित्याह—दूष्येत्यादि, भङ्गदानं भङ्गानुभवः ।

[६] यदा तु परबलं स्वभूमिष्ठं स्थानममुञ्चदेव संहतं तिष्ठेत् तदा तद्भेदनोपायमाह—संहतेत्यादि ।

[७,९] पूर्वं भङ्क्त्वेत्यादि ।*

[१०] तौभयां पार्श्वेति । एकपार्श्वेऽभिहत्य ततः क्षुभितं पार्श्वान्तरे हन्यादित्यर्थः ।

[११] यतो वेत्यादि । शत्रोर्ये दूष्यास्तेषां वा फल्गु निस्सारं वा बलं यत्र ततो ऽभिहन्यादेवेत्यर्थः ।–

[१२] एवं बन्धापेक्षयोक्त्वा भूम्यपेक्षयाप्याह—पुरस्ताद् विषमायामिति । विषमभूमावप(व)पातनार्थमिति भावः ।

[१४] इतरत इति, एकपार्श्वविषमायां पार्श्वान्तरेऽभिहन्यादित्यर्थः ।

[१५] अमित्राटवीत्यादि, पश्चाच्चाश्रान्तेन स्वबलेन श्रान्तं प्रतिबलं भञ्ज्येनेत्याशयः ।

[१६] दूष्यबलेन वेत्यादि । पूर्वं दूष्यादिबलेषु भङ्गानुभवः स्वभूमिष्ठस्य परबलस्य विभूमिप्रावरणार्थम्, इदानीन्तु दूष्यमात्रे भङ्गानुभवः परबलस्य प्रमादमापाद्य प्रहारार्थमिति न पौनरुक्त्यम् । सत्रापाश्रय इति, सत्राणि धान्वनवनादीनि वक्ष्यति ।

[१७] सार्थेत्यादि । सार्थो वणिगादिसङ्घः, व्रजो गोकुलं, स्कन्धावारः शिबिरं, तेषां संवाहनेन रक्षणेन विलोपेन विलुण्ठनेन वा प्रमत्तं परबलं स्वयमप्रमत्तो भूत्वा ऽभिहन्यादित्यर्थः ।

* इतः परं कश्चन पाठांशो भ्रष्ट इति प्रतीयते ।

[१८]फल्गुबलेत्यादि । अन्तस्सारं बलु..............शूरैः प्रच्छन्नाद्यनुप्रविश्याज्ञया शिथिलस्थितान् परवीरान्.........हन्यादित्यर्थः ।

[१९]गोग्रहणेनेत्यादि । गोकुलस्य बलादपहरणेन वराहादिश्वापदानां वधेन पराविषयावर्त्तिनां वधेन वा तत्प्रतीकारव्यग्रान् परवीराना कृष्य वनादिषु सत्रेषु छन्नो निर्गत्य हन्यादित्यर्थः ।

[२०]रात्रावितस्ततोऽवस्कन्दप्रदर्शनेन भयात् जागरयित्वा दिवा सुषुप्सून् सुप्तान् वाऽभिहन्यादित्यर्थः ।

[२१]( प्रतिसूर्येत्यादि ? ) परिहारार्थं दृढचर्मवेष्टितचरणैर्गजैः सुप्तं वा तं कुर्यादित्यर्थः ।

[२२]अहस्सन्नाहेत्यादि । पूर्वाह्णयुद्धोद्योगश्रान्तानित्यर्थः ।

[२३]शुष्कचर्मेत्यादि । शुष्कचर्मकृता वृत्तशर्करा गर्भाः कोशा येषां तैः, अतएवं शब्दायमानैर्गवादियूथैर्योधानां भयव्याकुलत्वेन कृतहस्त्यश्वं भिन्नं विद्विष्टं परबलं स्वयमभिन्नः प्रतिनिवृत्याभिहन्यादित्यर्थः ।

[२४]प्रतिसूर्येत्यादि । मुखं महावाताभिमुखं च सर्वमप्यधिकतुल्यहीनबलमप्यभिहन्यादित्यर्थः ।

[२५]एवं युद्धविकल्पानुक्त्वा...........त्रोक्तम्—सत्रापाश्रयो ऽभिहन्यादिति, तत्र सत्राण्याह—धान्वनेत्यादि । निरुदकस्तम्बमीरिणं वा धान्वनं स्तम्बं गहनं वनं..................गहनं, पङ्कादिश्रयं प्रतीतं, विषमं निम्नोन्नतं, एषां द्वन्द्वैकवद्भावः । गाव इति गोयूथानिति । रात्रिरिति त........;.......ति भावः ।

[२६]एवं कूटयुद्धे हेतुतया सत्रमयुक्त्वाऽवस्कन्दकालतया पूर्वोक्ता दीर्घकान्ताराद्योऽपि तथेत्युपसंहरति—( पूर्वे ? ) पूर्वेत्यादि ।

एवं कूटयुद्धविकल्पानुक्त्वा प्रकाशयुद्धार्थं स्वसैन्यप्रोत्साहनमभिधातुं सूत्रम्—स्वसैन्यप्रोत्साहनमिति* । स्वबलानां युद्धे प्रवर्त्तनमुच्यत इत्यर्थः ।

[२७]ननु कूटयुद्धमेवास्तु निश्चितफलत्वात्, कृतं प्रकाशयुद्धेनेत्याशङ्क्याह—सङ्ग्रामस्त्विति ।

[२८]निर्दिष्टदेशकाल इति । अस्मिन् देशे काले च सन्निधातव्यं

* अध्यायादौ तु 'स्वसैन्योत्साहनं' इत्यनुपसृष्ट एव पाठः ।

तत्र योत्स्याम इति पूर्वमेव प्रतिज्ञात इत्यर्थः । बलप्रोत्साहनमाह—संहत्येत्यादि, राजेति शेषः ।

२९ तुल्यवेतनोऽस्मीति । वेतनं लाभः, भवतां यो लाभः स एव ममापीत्यभिन्नलाभोऽस्मि भवद्भिरित्यर्थः ।

३० अत एवेदं राज्यं सह भोग्यमित्याह—सहेत्यादि ।

३१ ईयांस्तु विशेष इत्याह—मयाभिहितैरितिशेषः (?)* ।

३२ यदि युद्धे ऽभिहन्यात्तदा महानर्थ इत्याशङ्कयाह—वेदेष्वपीति । अनुश्रूयत इति, उपाध्यायमुख्येभ्य इति भावः । अनेनापौरुषेयतया वेदानामीश्वरोक्तत्वेन पाठप्रामाण्यशङ्कापि नेति द्योतयति ।

३३ दक्षिणापर्यन्ता हि यज्ञक्रिया तस्याः फलतया युद्धहतस्य शूरस्य गतिरेवाशास्यते तस्मिन्मन्त्र इति भावः ।

३४ मनुनीतावपि मनुगीततया पुराणोपीत्यर्थः ।

३५ यान्यज्ञेत्यादि । क्रतुशतकरणेनापीति भावः । तपसेति, आध्यात्मिकदुःखसहिष्णुत्वेन । पात्रचयैश्चेति, पितृमेध इति भावः । सुयुद्धेनेति†, धर्मेणेत्यर्थः ।

३६ नवमित्यादि । सुसंस्कृतमिति, कुलादिरि(?)ति शेषः । तत्तस्य मा भूदिति, तदपि तस्मै न देयमित्यर्थः । श्लोकद्वयेन क्रमाद् योद्धुः स्वर्गतिरयोद्धुर्नरकपातश्चोक्ताविति ग्राह्यम् ।

३७ शत्रुविजयमव्यभिचार्यं यं पूर्वमनुभूतो व्यूहः कृत इति मन्त्रिपुरोहिताभ्यां राजा योधान्युद्धार्थं प्रोत्साहयेदित्याह—मन्त्रीत्यादि ।

३८ दैवज्ञशाकुनिकाश्च स्वराज्ञो वर्ग इत्यर्थः । सर्वज्ञदैवसंयोगख्यापनाभ्यामिति, कस्यचित् सर्वज्ञत्वेन तदुक्तेन राज्ञो विजयाव्यभिचारिणो दैवानुकूल्येनेति । अथवा अस्यैव राज्ञः सर्वज्ञत्वेन भाविविशेषज्ञानेन देवतासाक्षात्कारेण चेत्यर्थः ।

४० वाहनश्चेति, औपवाह्यम् । अनुशयीतेति, गन्धमाल्यादिभिरभ्यर्च्य तदग्रतः स्वपेदित्यर्थः ।

४१ अथर्वभिश्चेति । जयावहैरिति शेषः ।

---

* अत्र कश्चन पाठांशस्त्रुटितो भाति, स्फुटितोऽर्थो न प्रतीयते ।

† 'सुयुद्धेषु' इति डा. जौली. मूलपाठः ।

[42]विक्रान्तस्य विजयो हतस्य स्वर्ग इति विवेक्तव्यम् । वाचयेदिति, ब्राह्मणैरिति शेषः ।

[43]ब्राह्मणेभ्यश्चेत्यादि । आत्मानमिति, शरीरम् । अतिसृजेदिति, दद्यात् रक्षार्थमिति भावः ।

[44]शौर्येत्यादि । शिल्पोऽस्त्रशिक्षा.........अर्थः ।

[45]तत्र राज्ञः स्थानमाह—पितृपुत्रेत्यादि । पितृत्वादिना मिथः सम्बन्धित्वेन तुल्ययोगक्षेमाणाम् । आयुधीयानामिति, राज्ञः सन्निधावविद्धार्थं रक्षार्थञ्च शस्त्रं दधताम् । अध्वजमिति, चिह्नभूतध्वजरहितम् । मुण्डानीकमिति, मुण्डमिव मुण्डं, यथा एकपक्षादिशिखारहि( हि )तमुण्डस्याविज्ञातब्राह्मण्यादिकत्वं, तथा चिह्नभूतध्वजविरहाद्राजन्यत्वेनाविज्ञातं राजाधिष्ठानाख्यमित्यर्थः । अथवा अङ्गेषु मुण्डवदनीकेषूत्तममिति वा तथोक्तम् । राज्ञोः..............मुक्त्वा तस्य वाहनमाह—हस्ती रथो वेत्यादि । अश्वानुबन्ध इति, रक्षार्थतयेति भावः । हस्तिरथोवेत्यस्यापवादमाह–यत्प्रायसैन्यो वेति*, वाहनेष्विति शेषः । गजाश्वादिवाहनेष्वात्मनः प्रभूतं यत् तद्वा यत्र शिक्षितस्तमारोहेतेत्यर्थः ।

[46]व्यूहानां यदधिष्ठानं सचिह्नं तत्र राजा न तिष्ठेत् किन्तु राजवेषधरः कश्चित्, परैरनुपलक्षणार्थमित्याशयः । अधिष्ठानमायोऽज्यमिति†, तदधिगमनीयः तत्र स्थानीय इति यावत् ।

[47]सूतेत्यादि । सूता इतिहासविदः । मागधाः स्तुतिपाठकाः । शूर........भिर्वो( र्वा )स्वर्गास्वर्गौ वर्णयेयुः । जातिः क्षत्रियत्वादिः, सङ्घः काम्भोजादिः, कुलमभिजनः, कर्म जीवितम्, वृत्तमाचारः, तेषां स्तवञ्च राजयुक्ता योधानां वर्णयेयुरित्यर्थः ।

[48]पुरोहितेत्यादि । कृत्यापचारमिति‡, स्वोत्पादिक इत्याद्यानामपचारः शत्रोर्विनाशकारणं ब्रूयुरित्यर्थः ।

---

* 'यत्प्रायः सैन्यो यत्र वा' इत्यानुपूर्वीको डा. जौली. मूलपाठः ।

† 'अनुष्ठानमायोऽज्यम्' इति डा. जौली. मूलपाठः ।

‡ अत्र 'कृत्याभिचारम्' इति डा. जौली. मूलपाठः ।

[४९] यन्त्रिकेत्यादि* । यन्त्रिका-जामदग्न्यादियन्त्रकारिणः, वर्धकिः तक्षा, मौहूर्त्तिको मुहूर्त्तविधायकः । एतेर्धकयन्त्रादिप्रयोगसिद्धिं परेषां कर्मासिद्धिञ्च ब्रूयुरित्यर्थः ।

[५०] सेनापतिरिति । सर्वबलाध्यक्षः । अनीकमाभाषेतेति, प्रकाश-युद्धार्थमिति भावः ।

[५१] शतसाहस्र इति । स्वर्णशतसहस्रलाभ इत्यर्थः । सेनापति कुमारवध इति, सेनापतिकुमारयोरन्यतरवध इत्यर्थः । प्रवीरेत्यादि, प्रवीरो वीरेषु प्रकृष्टतया प्रसिद्धः, मुख्यो महामात्रः । (प्राशास्त्रादि ? ) पत्तिमुख्यवध इति, पत्तिमुख्याङ्गदशकस्यैकः पतिक इत्यर्थः । शिरो विंशतिकमिति, छिन्नानि तं (?) योधमात्रशिरः पणविंशतिलाभ इत्यर्थः । एवं लाभभेदानुक्त्वा सर्वसाधारणं लाभमाह—भोगद्वैगुण्य-मिति, पूर्वव्यवस्थापितभक्तवेतनानां द्वैगुण्यलाभः स्यात् । स्वयंग्राह-श्चेति, परस्य गजाश्वकोशादिषु योऽयं गृह्णाति तत्तस्यैव स्वमित्यर्थः ।

[५२] तदेषामित्यादि । एषां योजनां राजवधादिकं यथाभिलाषिता-नुष्ठानं दशसम्मितवर्गाधिपतयः त्रयो जानीयुः । अङ्गदशकस्यैकः पतिः, पतिदशकस्यैकः सेनापतिः, सेनापतिदशकस्यैको नायक इति वक्ष्यते ।

[५३] एवमाभाष्य युद्धप्रवृत्तौ शस्त्रव्रणपरिहारार्थमाह—चिकित्स-का इत्यादि । चिकित्सकाः शल्यशास्त्रविदः । शस्त्रादिहस्ता इति, त (य)न्त्राणि मण्डलाग्र..............पत्राणि..............यन्त्राणि कङ्कमुखादीनि शल्योद्धारार्थानि, अगदान्यौषधानि, स्नेहा घृतादयः, वस्त्राणि बन्धपट्टार्थानि, एतद्धस्ताः युद्धभूमेः पश्चादेव तिष्ठेयुरित्यर्थः । स्त्रियश्चेत्यादि, योधानामन्नपानस्य दूषणादिपरिहारार्थं स्वदर्शनाद-भिमानजननार्थं चेति भावः । उद्धर्षणीया इति, उच्चैर्हर्षणहेतव इत्यर्थः ।

एवं स्वसैन्ये प्रोत्साहिते तस्य परिह...........विभागं विना जैत्रैकान्तत्वायोगात् तदभिधानार्थं सूत्रम्—स्वबलान्यबलव्यायोग इति । स्वसैन्यादिविशिष्टमायोजनं व्यवस्थापनं परसैन्यव्यूहापेक्षा प्रति-व्यूहकल्पनं तदुच्यत इत्यर्थः ।

[५४] तदाह—अदक्षिणामुखमित्यादि । अमङ्गलपरिहारार्थमिति

* अत्र 'सत्रिकनर्धकि०' इत्यानुपूर्वीको डा. जौली. मूलपाठः ।

ग्राह्यम् । अप्रतिसूर्यवातश्चेत्याह–पृष्ठत इत्यादिना । स्वभूमाविति, रथादीनां हि भूमय उक्ताः, योधानाञ्च जन( ल )स्थलाभियोधित्वेन तत्र स्वयं यत्प्रायः सैन्यस्तदुचितायां भूमावित्यर्थः ।

[५५] ननु परेणापि स्वसैन्योचितभूमौ व्यूहस्येति...............मौ व्यूहने विशेषो न स्यादित्यत्राह—परभूमीत्यादि । या परसैन्योचिता भूमिस्तस्यां परसैन्यव्यूहने प्रवृत्ते तन्निवर्त्तनार्थं तत्राश्वांश्चारयेयुरिति ।

[५८] यत्र स्थानमित्यादि । यत्रस्थानप्रजवश्च व्यूहस्येति पाठे व्याख्या तावत्—यत्र देशे स्थानमेव वा प्रजव एव वा कर्तुं शक्यते नतूभयं तत्र स्थाने प्रजवे चोभयथा विवरेण जीयेतेत्यर्थः । यत्र स्थानं प्रजवश्चाभूमिर्व्यूहस्येति पाठे तु यत्र देशे स्थानं प्रजवश्चाभूमिर्भूमिरहितः तत्र पराजयः स्यादित्यर्थः । स्थानं चिरावस्थितिः, प्रजवः शैघ्र्येण व्यापारः ।

[५७] विपर्यये इति । यत्रोभावपि शक्यौ सम्मते ( समाने ) भूमितन्त्र इत्यर्थः ।

[५९] स्थानप्रजवोचितभूमिव्यूहव्यवस्थापनाय भूमीस्तावत् विभजते–समेत्यादिना । समादित्वेन त्रिधा विभक्ताया भूमेः प्रत्येकं पुरः पार्श्वपश्चात्त्वभेदात् न सम्मते भूमितन्त्र इत्यर्थः ।

[६०] तत्र त्रिविधायां समायां व्यूहनियममाह–समायामिति ।

[६१] [६२] एवं विषमव्यामिश्रयोरपि त्रिविधयोरिति ग्राह्यम् ।

[६३] [६४] अधिकबलं भङ्क्त्वा स्वयं सिद्धिं याचेत, तुल्यबलं भङ्क्त्वा तेन याचिते सन्दध्यात्, हीनबलञ्च बन्धेन प्रहरेदेवेत्याह–विशिष्टबलमित्यादिना ।

[६६] हीनानुप्रहारे विवादमाह–नत्वेवेति ।

[६७] अत्र हेतुमाह–पुनरित्यादिना । भग्नं न पीडयेदिति, स्वयं शूरं शूलबलञ्चेति शेषः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां साङ्ग्रामिके दशमे अधिकरणे तृतीयोऽध्यायः ।



# १० अधि., ४ अध्या., १५३, १५४ प्रक.

सू. युद्धभूमयः पत्त्यश्वरथहस्तिकर्माणि च ।

एवं स्वबलस्य परबलाद्विशिष्टभूम्यादिपरिग्रहानुगुणान् उपायानुक्त्वा युद्धातिवेशयोरनुगुणा भूमीरभिधातुं सूत्रम्–युद्धभूमय इति । निवेशसहितस्य युद्धस्य भूमय उच्यन्त इत्यर्थः ।

स्वभूमेर्युद्धाद्यानुगुण्यं फलमाह–स्वभूमिरित्यादि ।

तत्राष्टविधानां पत्तीनां तावद्भूमीराह–धान्वनेत्यादि । मन्त्रं (?) धन्वा तत्रभवं धान्वनं दुर्गं वृक्षगहनं....................जय ( ? ) मध्यं निम्नं निरुदकं स्तम्भमुन्नतं स्थलं, एषु देशेषु युद्धशीलानां पत्तीनामेवं भूमिं खात्वा तत्र स्थिता ये युध्यन्ति ते खनयोधिनः, प्राकाराद् बाह्ये वा वृक्षादिरहिते एव वा देशे स्थिता ये युध्यन्ति ते आकाशयोधिनः, ये च दिवैव रात्रावेव तेषाञ्चेत्येवमष्टानां स्वस्वयुद्धशक्त्यनुगुणभूमिनियतकालाश्च सिद्धिदा इत्यर्थः । धान्वनयोधिनां धान्वनभूमिरिष्टा, एवं नादेयादीनां गताश्वादीनां नदीतीरादिभूमयः, तत्तद्भूम्यनुगुणा ऋतवश्चेत्यर्थः ।

एवं पत्त्यादीनां त्रयाणां विशेषतो भूमीरुक्त्वा रथानामुत्पत्त्यादिप्रकारैः देशेष्विष्टत्वनियमासम्भवात् सामान्यत एवोचितभूमिमाह–समा स्थिरेत्यादिना । अनिम्नोन्नता । स्थिरेति सुचिता । अभिकाशेति, तृणाद्यसञ्छन्नतया स्फुटावभासा । निरुत्खातिनीति, चक्रप्रतिघातरहिता । अचक्रखुरेति, चक्रनेमयश्च खुराश्च नास्यां प्रविशन्तीति तथोक्ता पांसुपङ्काभिविरहादित्याशयः । अनक्षग्राहिणीति, अक्षाणां सङ्गरहिता । निरुत्खातित्वादीनां हेतुमाह–अवृक्षगुल्मेत्यादि, गुल्मादिकरकमर्दिकादि गहनानि व्रतत्यो लता वेत्रा महाखदिरस्थासादयः केदाराः पापभूमयः*, श्वभ्राणि गर्त्तानि, वल्मीकानि प्रतीतानि, भङ्गुराणि वीचिप्रदेशाः, दराणि घर्मजनितक्षितिरेखाविलानि, एभिर्हीना रथभूमिरित्यर्थः ।

रथभूमिरेव शेषाङ्गानामपीष्टेत्याह—हस्त्यश्वयोरित्यादिना ।

---

* गुल्मादीत्यारभ्यायं पाठो विभ्रष्टविपर्यस्तवर्णादित्वात्सर्वथाप्यस्फुटार्थ इव भाति ।

[५]एवं हस्त्यश्व पत्तीनां सामान्यतो निविष्टेभ्यो रथभूमिगुणेभ्यो ऽन्यानपि तेषां भूमिगुणान् पश्चाक्रमणं( ? )दर्शयति—अण्वश्मेत्यादिना । अणवस्तनवो ह्रस्वाः वामना एव दक्षिण( ? )हीना रथभूमिरश्वानां आदिष्टा, इदानीन्तु मन्ददरणदोषापीष्टैवाश्वानामुच्यत इति न पौनरुक्त्यम् ।

[७]गम्येत्यादि । गम्या गन्तुं शक्याः, शैला अचलाः, निम्नानि जलानि, विषमाणि निम्नोन्नतप्रदेशानि यस्यां सा तथा । मर्दनीयेति, मर्दयितुं शक्या वृक्षा अस्यामित्यर्थः । भञ्जनीयव्रततीति*, शक्यभञ्जना वल्ली । पङ्क्त्यादि, ननु रथभूम्यतिदेशेनैव पङ्कादित्रयहीनतायाः सिद्धत्वात् पुनः किं तद्वचनेनेति चेत्, सत्यम्, हस्तिभूमेस्तद्गुणनियमार्थमित्यदोषः । स्थूलेत्यादि†, स्थूलस्था……………षट्कप्रतिपत्तिभूमिरित्यर्थः ।

[८]रथगजादीनां प्रतिलोमक्रमेणातिशयरूपं विशेषमाह—अकण्टकिनीत्यादि । बहुविषमेति, अनेकनिम्नोन्नतप्रदेशा । प्रत्यासारवती, प्रत्यासारं प्रतिनिवर्त्तनावकाशः तद्वती ।

[९]द्विगुणेत्यादि । द्विगुणप्रत्यासारा यावती पुरस्तात् प्रसारभूमिः अस्यामिति तथा । कर्दमेत्यादि, खञ्जनं पङ्कप्रायं जलम् । निश्शर्करेति, दृह्यत्तारा‌श्मा । वाजिनामिति, भूमेरिति शेषः ।

[१०]पांस्वित्यादि । पांसवः सिक्तानलाः शराश्च तृणविशेषास्तेषामाधानानि, आधीयते धार्यते ऽनेनेत्याधानमिति व्युत्पत्त्या मूलशङ्कवः क( न )लतृणाश्रितानां मूलशङ्कुरहितेत्यर्थः । श्वदंष्ट्रेति, गोक्षुररहिता । महावृक्षेति, महतां वृक्षाणां शाखाभिघातरहितेत्यर्थः ।

[११]तोयेत्यादि । तोयं पानादि योग्यम् । अपाश्रयो‡ विश्र( श्रा )मस्थानं च तद्वती । निरुत्खातिनीति, चक्रप्रतिघातरहिता । ननु प्रागेवोक्तोऽयं गुणस्ततः किमतिशयेनाप्यत्र कथनमिति चेत्, अस्यातिशयरूपत्वमपि द्योतयितुमिति मूकीभव । केदारहीनेति, केदाराणा-

---

* ‘छेदनीय प्रतती’ इति डा. जौली. मूलपाठः ।

† प्रतीकमिदं डा. जौली. पुस्तके न दृश्यते ।

‡ अत्र ‘आश्रय’ इत्यनुपसृष्ट एव डा. जौली. मूलपुस्तके पाठः ।

मनतिपङ्कत्वेपि शीघ्रगमनायोग्यत्वादिति भावः। व्यावर्त्तनसमर्थेति, व्यावर्त्तनानुगुणाविस्तारवतीत्यर्थः।

[12] एवं पत्त्यादिभूमीनामतिशयमुक्त्वा स्वभूमिप्रकरणमुपसंहरति-उक्तेत्यादि।

[13] एतयोक्त्या (या ? = पर) स्वभूम्या सर्वबलानां चतुरङ्गबलानां निवेशयुद्धप्रकाराः कार्यतया ज्ञेया इत्याह--एतयेति।

[14] एवं पश्वादीनां स्वभूमिषु उक्तासु तेषां तत्र कर्माणि वक्तुं-सूत्रम्--भूमिवासवनविचय* इति। भूमेर्वासस्य वनस्य च शोधनं प्रथममेवाश्वैः कार्यमित्यर्थः। तत्र प्रायेण पुरस्ताद् भूमेः गूढबलादि-निरसनं भूमिविचयः बलविमोक्षस्थानस्य निर्बाधकरणं वासशोधनं मार्गमध्यपातिनां वनानां गूढतस्करादिनिवासो वन······इत्ययमश्वैः कार्यमित्यर्थः। अस्य सूत्रस्योपलक्षणार्थत्वाभिप्रायेण वा कर्माण्याह-भूमीत्यादि। भूम्यादेः शोधनमुक्त्वा ऽनुगुणदेशादिपरिग्रहण मपि अश्वकार्यमित्याह-अविषमेत्यादि। निवेशाद्यनुगुणस्य प्रागेव ग्रहणम्। विषमेति पाठे पराभिभाव्यदेशग्रहणमिति व्याख्येयम्। तोयेति, परात्मनोरेतस्मिन्नुदके तस्य प्रथम एवाशुग्रहणम्। तीर्थेति, नद्यादितरणे प्रतिबन्धशङ्कायां आशूत्तरणाय तीर्थग्रहणम्। वातेति, वतो यथा आत्मनोऽनुकूलः स्यात् तथा युद्धभूमिग्रहणम्। रश्मीति, अनभिमुखसूर्यादिग्रहणम्। वीवधेत्यादि, स्वदेशादन्वायातिर्वीवधः; मित्रबलागमनमासारः तयोः परकीययोः घातो वा स्वकीययो रक्षणं वा तयोस्तत्फलयोर्व्यापारयोः स्वीकरणमित्यर्थः। विशुद्ध†स्थापना च बलस्येति, प्रतिबलावकाशकान् दूष्यबलमन्तः सञ्छाद्य आपत्तः परबलस्य प्रतीच्छां····················एवं परबलाक्रान्तस्यापरतः स्वबलस्य स्वीकरणञ्चेत्यर्थः। प्रसारवृद्धिरिति, प्रसारस्सर्वतोवन-जीवः तदुपचयश्चेति। बाहूत्सार इति, बाहुभ्यामिवोत्सारण प्रतिब-लस्योभयपक्षाभ्यां प्रसरणमश्वैरेवेत्यर्थः। पूर्वप्रहार इति, प्रहारे पूर्व-भावितं तदश्वैरेव, तेषामाशुकारित्वादित्यर्थः। व्यावेशनमिति, वि-विधं परबलस्यान्तः प्रविश्य व्याकुलीकरणम्। व्यावेधनमिति, अन्तः

* 'निचय' इति डा. जौली. मूलपाठः।

† अत्र 'विशुद्धि' इति डा. जौली. मूलपाठः।

प्रविश्य परबलस्य विविधभेदनम् । आश्वास इति, स्वसैनिकानां भागे (?) तद्व्यवस्थापनम् । ग्रहणमिति, प्रतियोधादीनामश्वैरनुगम्यादानम् । मोक्षणमिति, परैर्गृहीतानां स्वयोधानां मोक्षणम् । मार्गानुसारविनिमय इति, स्वयौधं गृहीत्वा गच्छतः परयौधस्य मार्गमनुसृत्यान्यस्य परस्य यौधस्य ग्रहणम्, अथवा स्वबलस्य मार्गमनुसरति प्रतिबले प्रदेशान्तरेण प्रतिबलमार्गस्यापि स्वयमश्वैरनुसरणमित्यर्थः। कोशकुमाराभिहरणमिति, परस्यावश्यरक्ष्ययोः कोशकुमारयोरभिमुखं हरणं तदप्यश्वैः सुकरमित्यर्थः। जघनकोट्यभिघात इति, जघने पश्चात्कक्षयोः कोट्योः पुरस्तात्पक्षयोश्चाभिघातः। हीनानुसारणमिति, मग्नानामश्वयौधानां साहाय्यदानमित्यर्थः । अनुयानमिति, भग्नपरबलानुद्रवणम् । समाजकर्मेति, विक्षिप्तस्य स्वसैन्यस्य सङ्गीकरणम् इत्येतान्यश्वकर्माणीत्यर्थः ।

[१५]हस्तिकर्माण्याह—पुरोयानमित्यादि स्वबलस्याग्रतो गमनम्। अ(नु ?)कृतेत्यादि, अ(नु ?)कृतानामसंविहितानां मार्गाणां च वासस्थानानां नद्यादितीर्थानाञ्च करणं मान(मग्न)परिज्ञानार्थम् । स्थानेत्यादि स्थानं परबलाक्रमणे घटाबद्धेनाप्रतप्यतयावस्थानम्, गमनं घटाबन्धेनैव दूराध्वक्रमणम्, अवतरणं शैलादिविषमादवरोहणम् । विषमसम्बाध(:)प्रवेश इति, गुल्मतृण पङ्कादिदुर्गगमनप्रवेशपरानि(?)कान्तारप्रवेशश्च । अग्नीत्यादि, अग्निदानः परशिबिरे, स्वशिबिरे परदत्ताग्निप्रशमनञ्च । एकाङ्गविजय इति, अश्वाद्यङ्गाभावेपि हस्तिबलेनैकेनैव विजयलाभः । भिन्नसन्धानमिति, भिन्नस्य विशीर्णस्य स्वबलस्य पुनस्सन्धानं पिण्डितकरणम् । अभिन्नभेदनमिति, सङ्घतपरानीकभेदनम् । व्यसने त्राणमिति, रात्रनिर्हारादिसत्रजन्ये वा परबलाक्रमणजे वा व्यसने रक्षणं हस्तिद्य(व)नायाः प्रकारतुल्यत्वादित्याशयः।अभिघात इति, घटया परबलमर्दनम् । विभीषिकेति, हस्तीति सामान्यमात्रेण भयहेतुत्वम् । सत्रासनमिति, शिक्षितम(स) त्रत्नघातकत्वादिविशेषप्रसिद्ध्योद्वेजकत्वम् । औदार्यमिति, बलस्य श्लाघ्यताप्रीतिहेतुत्वम् । ग्रहणमिति, परयौधादीनामिति शेषः । मोक्षणमिति, परगृहीतानां स्वयौधानाम्, एतद्द्वयमश्वेष्विव गजेष्वपि तुल्यमिति भावः । सालेत्यादि, सालं प्राकारं द्वारं गोपुरं अट्टालकं

सारा( ला )द्बहिर्निर्गतः प्रदेशः एषां भञ्जनम् । कोशवाहनापहानमिति, राजधनानां वाहनं सञ्चारणं भङ्गे सति युद्धभूमेरपवाहनं अपसारणञ्चेत्यर्थः। केचिदपवाहनमिति पठन्तो राज्ञः प्रभृतीनां वाहनमित्याहुः। उपवहनयोग्यो ह्यौपवाह्य इति। उक्तान्येतानि हस्तिकर्माणीत्याह—हस्तिकर्माणीति ।

१६ स्वबलरक्षेत्यादि । प्रकारतुल्यसंस्थानतया रथानां स्वबलरक्षकत्वं ग्राह्यम्। तत्र सदा समविषमादिदेशेषु प्रावृट्शरदादिकालेषु चायुधपरित्यागं, चतुरङ्गस्यापि परबलस्य निवारणं, ग्रहणमोक्षणञ्च पूर्ववद्रथकर्मतया व्याख्येयम्। भिन्नस्य स्वबलसन्धानं सपिण्डनम्। अभिन्नेत्यादि, अभिन्नस्य संहतस्य परबलस्य शिथिलीकरणम् । त्रासनौदार्येऽपि हस्तिवद्रथेष्वपीति ग्राह्यम्। भीमघोषश्चेति, मेघगर्जितवन्मन्द्रध्वनिता, एतानि रथकर्माणीत्यर्थः।

१७ सर्वदेशेत्यादि । यत्र यदा च योद्धुं पत्तिर्गच्छति तत्र सदा विषमादिदेशेषु प्रावृट्शरदादिकालेषु चायुधापरित्यागः, व्यायामः उपर्युपरि प्रवृत्तिरूपः इति पङ्क्तिकर्माणीत्यर्थः।

१८ अथानायुधीयानां कर्मकराणां कर्माण्याह—शिबिरेत्यादि । शिबिरं बलनिवेशस्थानम्, मार्गो ऽथवा सेतुर्नद्यादिबन्धनम, कूपमथो(?)जलार्थं खननम्, तीर्थं नद्याद्यवतारः, एषां पञ्चानां गुर्वादिनिरासेन शोधनक्रिया। यन्त्रेत्यादि, यन्त्रं जामदग्न्यादि, आयुधं खड्गादि, आवरणं कवचम्, उपकरणं शयनासनादि, ग्रासो घृततण्डुलादि, एषां वहनं कर्मेत्यर्थः। आयोधनाच्चेत्यादि, युद्धभूमितः प्रहरणानां शरखड्गादीनां कवचखेटादीनां शरादिविद्धि(द्ध)यौधानाञ्चापनयनमिति कर्मकरपर्यायाणां..............णां कर्माणीत्यर्थः।

१९ एवमङ्गानां पृथगुपयोगानुक्त्वा हयगजाल्पत्वे तत्प्रतिविधानोपायानाह—कुर्यादित्यादिना। अल्पाश्वेन राज्ञा रथेष्वश्वैस्सह मिलिता गावो योजनीयाः। अल्पगजेन तु खरोष्ट्रयुक्तैः भस्राकृतिभिः शकटैः व्याप्तो नि (?) गर्भः कार्य इत्यर्थः।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां साङ्ग्रामिके दशमे ऽधिकरणे चतुर्थो ऽध्यायः।

## १० अधि., ५ अध्या., १५५–१५७ प्रक.

### सू. पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः, सारफल्गु-बलविभागः, पत्त्यश्वरथहस्तियुद्धानि च।

एवं रथादीनां भूमिव्यापारांश्चोक्त्वा तेषां व्यूहविभागेनैवायोधनं विजयावहं तदभिधानार्थं सूत्रम्-पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभाग इति। पक्षौबहिः पुरस्तात्कोट्यां, कक्षे तु द्वे पश्चादन्तः पार्श्वेन, उरस्यं मध्यं एषां पञ्चानां समूहविशेषाणां बलस्याग्रतः परिमाणानुगुण्येन विभजनं कार्यमित्यर्थः।

[१]अथ स्कन्धावारायातिदेशे सङ्ग्राम इत्यपेक्षायामाह-पञ्चधनुः शतेत्यादिना।...........पूक्कादुदुर्गात्पञ्चधनुः शतमन्तरालं मुक्त्वा युद्धभूमिं कुर्यादित्यर्थः।

[२]तदपवाद ( हिमाहि ? ) माह-भूमिवशेन वेति । पञ्चधनुश्शतान्न्यूनेऽधिके वा देशेपि यद्यनुगुणा भूमिः स्यात् तदा तदनुगुणं कुर्यादित्यर्थः। तत्रैव व्यूहं विभजेदित्याह-विभक्तेत्यादिना, शिबिरप्रतिग्रहपक्षकक्षोरस्येषु विभक्तप्रथा (थ) नां व्यूहेयात्रां ( ताम् )। अचक्षुर्विषय इति, परैरेतद्दर्शने प्रतिव्यूहकल्पनभयादिति भावः। मोक्षयित्वेति, स्थापयित्वा । सेनापतिनायकाविति, अङ्गदे (द) शस्यैकः पतिः, तत्पतिदशकस्यैकः सेनापतिः तद्दशकस्यैको नायक इति वक्ष्यति।

[३]व्यूहनप्रकारं पदाद्युपक्रमेणाह-शमान्तरमिति । शमश्चतुर्दशाङ्गुलः ( शमः ? ) सोऽन्तरमन्तरालं पत्तेः पत्त्यन्तरतो यथा स्यात् तथा पत्तिं स्थापयेत्।

[४]त्रिशमान्तरमश्वमिति। अश्वमश्वन्तरा (ला ?) त् द्विचत्वारिंशदङ्गुलान्तरालं स्थापयेत्। एवं रथं हस्तिनश्च सजातीयात् सप्तत्यङ्गुलान्तरालं स्थापयेदित्यर्थः। एवं पदात्यादीनां बाहुल्ये गजादीनामक्षमत्वे वा विधानमुक्त्वा बाहुल्याभावे मध्यमत्वेन अत्युत्तमत्वे च विधिमाह-द्विगुणान्तरं त्रिगुणान्तरं चेति, पूर्वोक्तप्रकारात् पदा-

त्यादीनां पत्त्यन्तरात् द्विगुणं वान्तरालं कृत्वा पदात्यादिं स्थापये- दित्यर्थः ।

[4]सुखेनेति*, नियन्त्रणञ्च (?) । असंबाधेति†, असंमर्दन ।

[6]एवं खड्गादिधारिणां पत्तीनां मध्यमादिगजादीनाञ्च विधिमु- क्त्वा धन्विनामत्युत्तमगजादीनाञ्च विधिमाह-पञ्चारत्नीति ।

[8]पञ्चहस्तं धनुस्तस्मिन् धन्विनं धन्व्यन्तरादन्तरालं कृत्वा (अश्वं ?) स्थापयेत् ।

[9]पञ्चधनुषीत्यादि, पञ्चविंशतिहस्तान्तरालं कृत्वा रथं हस्ति- नञ्च स्थापयेदित्यर्थः ।

[9]एवं रथादीनां मिथोऽन्तरालप्रमाणमुक्त्वा पत्तकक्षोरस्यानां पञ्चानामनीकानां मिथोऽन्तरालप्रमाणमाह—पञ्चधनुरनीकेत्यादि । अनीकानां सन्धिरन्तरालं पञ्चविंशहस्ता (स्त) इत्यर्थः ।

[10]इदानीमश्वरथद्विपानां पुरोयायिपुरुषसंख्यामाह-अश्वस्येत्या- दिना । अश्वस्य प्रतियोद्धारः पुरुषाः पुरोयायिनस्त्रयः ।

[11]रथस्य तु पञ्चदश । एवं हस्तिनश्च पञ्चदशेत्यर्थः । पञ्च चाश्वा इति, एकस्य रथस्य हस्तिनश्च पञ्च पञ्चाश्वाः पुरोयायिनोऽश्वाः पञ्च, अतएव तयोः पुरोयायिपुरुषाणामपि पञ्चदशत्वमुक्तम् । प्रत्येकमश्वा- नामपि पुरुषत्रित्वात् पञ्च त्रिकाणां पञ्चदशत्वाच्चेति भावः ।

[12]तावन्तः पादगोपा इत्यादि । एकस्याश्वस्य त्रयः पुरुषाः पाद- गोपाः, एवमेकस्य रथस्य हस्तिनो वा पञ्चाश्वाः पञ्चदश पुरुषाश्च पादगोपाः स्युरित्यर्थः ।

[13]एवं पुरोयायिपादगोपञ्च पुरुषयुक्तमेकं रथं व्यवस्थाप्य पत्ता- दिषु मध्यमस्योरस्य तावद्रथसंख्यामाह—त्रीणि त्रिकाणीत्यादि । रथानां त्रीणि त्रिकाणि नवसंख्यान् रथानिति यावत् । नवेति साक्षा- दनभिधानं मिलितानां त्रयाणां..................पङ्क्तितयावस्थाननि- यमज्ञापनार्थम् ।

[14]एवमुरस्ये सिद्धां नवसंख्यां शेषेषु चतुर्ष्वादिनिशति—ताव- दित्यादि । यावद्रथमुरस्यं तावद्रथं पतं कक्षञ्चोभयोः पार्श्वयोः कुर्या-

* अत्र 'यथासुखम्' इति डा. जौली. मूलपाठः ।

† 'असंबाधम्' ' इति डा. जौली. मूलपाठः ।

दिति पक्षयोर्द्वयोः कक्षयोश्चतुर्ष्वनीकेषु नव नव रथान् स्थापयेदित्यर्थः । एवञ्च पञ्चस्वनीकेषु सङ्कलय्य रथसङ्ख्यामाह—पञ्चेत्यादि, पञ्च नवकानि नाम पञ्चचत्वारिंशदित्यर्थः ।

[16]द्वे शत इत्यादि । एकस्य रथस्य पञ्चाश्वतया पञ्चचत्वारिंशद्रथानां द्वे शते पञ्चविंशतिश्चाश्वाः स्युरित्यर्थः ।

[17]षट्शतानीति । एकस्याश्वस्य पुरोयायिपुरुषाणां त्रित्वादश्वानां शतद्वयस्य षट्शतानि, अथ पञ्चविंशतेः पञ्चसप्ततिश्च पुरोयायिपुरुषाः स्युरित्यर्थः ।

[18]तावन्त इत्यादि । यावन्तोऽश्वानां पुरोयायिपुरुषाः तावन्तः पादगोपा अपि, यावन्तश्च रथानां द्विपानाञ्च पुरोयायिनो ऽश्वाः पुरुषाश्च तावन्तः पादगोपा अपि कार्या इत्यर्थः ।

[19]एवं समव्यूह* इति । व्यूहावयवभूतस्य त्रिकस्येत्यर्थः† ।

[20]द्विरथोत्तरेति‡, द्वौ द्वौ रथावुत्तरेण यस्याः सा तथा । वृद्धेरवधिमाह—आ एकविंशतिरथादिति, एकस्या(?)त्रिकादुपरि द्वाभ्यां ततो वृद्धं(?)प्रकृतिं कृत्वा द्वाभ्यां द्वाभ्यां वर्धने तच्च सप्त नवैकादशत्रयोदश पञ्चदश सप्तदशैकोनविंशतिरित्येते त्रिकेण सह वृद्धा दश स्युरित्यर्थः ।

[21]ओजा इति, युग्याः । समव्यूहप्रकृतय इति, समव्यूहाश्च तत्प्रकृतिकाश्च संभूय दशेत्यर्थः ।

[22]पक्षादीनां मिथो व्यूहसंख्यावैषम्येण विषमव्यूह इत्याह—पक्षकक्षेत्यादि । अत इति, व्यूहावयवान् ।

[23]तस्यापीति । विषमव्यूहस्यापि पूर्ववत् द्वाभ्यां द्वाभ्यां वृद्धिरित्यर्थः ।

[24]विषमव्यूहप्रकृतय इति, अत्रापि पूर्ववत् विषमप्रकृत्या सह तत्प्रकृतिकानां दशकमिति ग्राह्यम् ।

---

* 'एष समव्यूहः' इति डा. जौली. मूलपाठः ।

† अयं व्याख्याभागो विंशतितमसूत्रावयवभूतस्य 'तस्य' इति पदस्य प्रतीयते । तथा सतीत्थं पाठानुपूर्वी स्यात्:—"२०–तस्येति । व्यूहावयवभूतस्य त्रिकस्येत्यर्थः । द्विरथोत्तरेति," इति ।

‡ अत्र 'द्विरथो वृद्धिः' इत्यानुपूर्वीको डा. जौली. मूलपाठः ।

[२५]एवं व्यूढसैन्ये समविषमाभ्यां व्यूहाभ्यां यो व्यूहनबलशेषस्तस्यावापः कार्य इत्याह—अतः सैन्यानामिति।

[२६]आवापो नाम व्यूहावशिष्टस्य तत्रैव पुनः प्रक्षेप इत्याशयवांस्तस्य प्रकारमाह—रथा( दी ? )नामित्यादि। अङ्गेष्विति, पक्षद्वये कक्षद्वये चतुर्ष्वङ्गेषु। अयमर्थः—व्यूहविशिष्टान् रथांस्त्रिधा विभज्य पक्षादिषु चतुर्ष्वापचेदिति।

[२७]व्यूढशेषमतिरिक्तं सैन्यं व्यूढान्न्यूनं समधिकं वा, तत्रावाप्यमित्यपेक्षायामाह—एवं त्रिभागोन इति। व्यूढसैन्ये त्रिधाकृते एकं भागं विहाय भागद्वयमात्रमेव सैन्यमावाह्यं न तु समधिकं वेत्यर्थः। केचिदुक्तस्यैवार्थस्यायमुपसंहार इत्याहुः।

[२९]तेनेति। रथावापप्रकारेणाश्वान् गजानपि त्रिधा विभज्य एकं भागमुरस्ये द्वौ पक्षादिष्विति व्याख्यातमित्यर्थः।

[३०]त्रिधा गोरथावाप इत्येतदपवादतया सर्वारम्भसाधारणमावापप्रकारमाह—यावादित्यादिना। सम्बाधमिति*, युद्धोपमर्दम्।

[३१]आवाप एव क इत्यत्राह—दण्डबाहुल्यमिति। व्यूहातिरिक्तचतुरङ्गबलमित्यर्थः।

[३२]आवापप्रसङ्गात् व्यवहारार्थं प्रत्यावापादीन्यप्याह—पत्यबाहुल्यमित्यादि।

[३३]एकाङ्गबाहुल्यमिति। पत्तिबाहुल्यं पत्तिमात्रनियमः, एकाङ्गबाहुल्यञ्च निर्धारितपरस्यान्यतमत्रिषयमय( ? )मिति भेदः।

[३४]दूष्या इति—जनमवगृह्य चरन्तो मुख्याः।

[३५,९]पूर्वं व्यूढसैन्यापेक्षयैवावापप्रमाणमुक्तं त्रिभागोनमिति, इदानीं परबलापेक्षयाह—परावापादिति। चतुर्गुणतः प्रभृति यावदष्टगुणावधिकमा..........वेदित्यर्थः। अनियमजमाह—विभवतः स्वसैन्यानामिति†।

[३६]तदेव त्रीणि.................मुरस्यः स्थापयेदित्यारभ्य व्यूहमुक्त्वा तेनैव हस्तिव्यूहमतिदिशति—रथव्यूहेनेति। पार्श्वचन्त( ? )

---

* 'संबाधनम्' इति डा. जौली. मूलपाठः।

† 'विभवतः सैन्यानाम्' इत्येतावन्मात्र एव जौलीसम्पादितमूलपुस्तके पाठः।

रथेभ्योऽधिकसंख्यत्वं हस्तिनामपि तुल्यत्वमेव, तच्च स्वातन्त्र्येणैव न तु रथाङ्गतयेति हृदयम्।

[37] रथमिश्राणामपि हस्तिनां व्यूहनं कार्य मित्याह—रथमिश्रो वेति। रथैर्वामिश्रो वा हस्तिनां व्यूहः कार्य इत्यर्थः।

[38] कथमित्यत्राह—चक्रान्तयोरित्यादि*। चक्रं सैन्यं तस्यान्तयोः कोट्योः हस्तिनः स्थाप्याः। अन्तौ कोट्यौ बहिः पक्षौ चेति पर्यायाः, पुरः पार्श्वौ पक्षे जघने इति चैकार्थाः। उरस्यं मध्यमिति च तुल्यार्थौ।

ननु व्यूहकरणे यथोक्तपत्त्यश्वसहितानां रथानां हस्तिनाञ्च यद्यत्र ग्रहणं तथाश्वानां पृथग्वचनानुपपत्तिः रथाद्यङ्गतयैव तल्लाभात्। अथात्र पत्त्यश्वादि एतासां ग्रहणं तर्हि ऽयङ्गबलविभागो ऽय-मेवस्यात्, नोत्तरत्र ह्यङ्गबलविभागेनातिदेष्टव्य इति चेन्न। रथाद्यङ्ग-भूतान् विनापि मुख्यानामश्वानां स्वातन्त्र्येणैवात्र विवक्षितत्वादिति नोक्तदोषः। अत्र 'रथा उरस्य' इत्यतोऽनन्तरं 'अयं भ(प)क्षभेदी' ति पठितव्यम्, लेखकप्रमादात्तु पाठाभावः पक्षयोर्हस्तिस्थापनेन भेदो-ऽस्येति तथा। मध्यभेदिनं हस्तिरथमाह—हस्तिनामुरस्यमित्यादि।

[39] पार्श्वभेदिपर्यायमन्तभेदिनमाह—विपरीतो ऽन्तभेदीति। पक्ष-भेद्युरस्यभेदिभ्यां विपरीतः कक्षयोर्हस्तिनो रथाः पक्षयोरश्वा उरस्य इत्ययमन्तभेदीति पार्श्वभेदीत्यर्थः। यदा तु चक्रान्तयोर्हस्तिन इति पक्षे सोऽयं पक्षभेदीति न पठ्येत तदा विपरीतो ऽन्तभेदीति पठितत्वा प्रथमपक्ष एव स्यात्, तत्र च पार्श्वयोर्हस्तिकरणे यत्तो(त्नो)ऽनुक्तः स्यादिति शेष इति ग्राह्यम्।

[40] हस्त्यादीनां चतुर्णामप्येकैकत्वेपि व्यूहप्रकारं दर्शयन् हस्तिनां तावदाह—हस्तिनामेवेति। व्यूह इति शेषः सन्नाह्यानामिति, युद्ध-योग्यानाम्। औपवाह्यानामिति, राजवाहनानाम्। व्यालानामिति, दुष्टगजानाम्।

[41] वर्मिणामिति, कवचिनामश्वानाम्। शुद्धानामिति, कवच-रहितानाम्।

[42] आवरणिन इति कवचिनः।

---

* डा. जौलीसम्पादितमूलपुस्तके 'चक्रान्तेषु' इति बहुवचनान्त एव पाठो लभ्यते।

[४३]मिश्र इत्यादि मिश्रं दर्शयन् द्वि( वि )मिश्रं तावदाह—पत्त्य कोष्ठयोरित्यादि । द्विमिश्रान्तरमाह-हास्तनः पृष्ठत इत्यादि । दर्शित पक्षापवादमाह—परव्यूहवशेन वेति, परव्यूहभञ्जकत्वं यथा स्यात्तथे-त्यर्थः ।

[४४]अङ्ग विभागे ऽयङ्गविभागमतिदिशति—तेनेति ।

ननु प्रागेव हस्तिभिर्विना पत्त्यश्वरथानां यो व्यूहप्रकारो दर्शितः स एव ऽयङ्गबलविभागो नेदानीं पुनर्वक्तव्य इति चेन्न । तदानी-मङ्गाङ्गिभावेनावस्थितानां पश्वादीनां विभाग उक्तः, इदानीं स्वतन्त्रा-णामेव गणश इति भेदादिति ।

एवं पत्त्यश्वरथद्विपानां पक्षकक्षोरस्येषु निवेशप्रकारमुक्त्वा पत्त्यादीनामेव सारासारत्वाभ्यामपि भाग............वभिधानार्थं सूत्रम्—सारफल्गुबलविभाग इति । तत्र सारं बलं पितृपैतामह-त्वादि, दण्डं सम्पद्वित्तं तद्विपरीतं भीरु वा फल्गुबलं तयोर्विभागः कार्य इत्यर्थः ।

[४५]तत्र पत्तीनां तत्सारत्वमाह—दण्डसम्पदित्यादिना ।......... लया पितृपैतामहत्वादिरूपा दण्डसम्पत्, प्रागुक्तसारपुंसां पत्तीनां सारबलाबलत्वमित्यर्थः । हस्त्यश्वयोस्तु विशेष एव सारबलत्व-मित्याह—हस्त्यश्वयोरिति ।

[४६]विशेषानेवाह—कुलमित्यादिना । कुलमेकोत्पत्तिस्थानत्वम्, जातिः भद्रत्वमन्दत्वमागधरत्वादिरूपा, सत्त्वं शौर्यम्, वयस्थता कर्मण्यत्वयवप्राप्तिः, प्राणोबलम्, ........उत्सेहा( ? )याम परिणाहा-दिमत्त्वम्, जवो वेगः, तेजस्तैदण्यं मनो वा, शिल्पं शिक्षितत्वम्, स्थैर्यं प्रहारादौ सत्यपि व्यवसितनिर्वाहभासा (?) सह्यत्वं वा, उदग्रता उन्नतमुखत्वम्, विधेयत्वं नियन्तुर्वशगता, सुव्यञ्जनाचारता लक्षणव्यापारयोः प्राशस्त्यमत्वम्, आचाराश्रेष्ठाः, एते हस्त्यश्वयो-र्गुणरूपा विशेषा इत्यर्थः । रथानां पुरुषाश्वसारव्यतिरिक्तस्यासार-त्वस्याभावान्तः( ? त्र )पृथग्वचनमिति ग्राह्यम् ।

[४७]एवमङ्गानां सारत्वं व्यवस्थाप्य तेषां सारविनियोगप्रकारमाह—पत्त्यश्वेत्यादिना । अयमाशयः—आदितस्तावत् बलं सर्वं सारासार-तया द्विधा विभजेत्; तत्र सारमुक्तम्, अवममध्यमभावात्, सार-

मनुसरन्तृतीयसारञ्चेत्याख्याभिः त्रिधा विभजेत्, तत्रोत्तमं त्रिधा-कृत्वा एवं त्रिभागमुरस्ये स्थापयेत् द्वौ त्रिभागौ चतुर्धा कृत्वोभयतः उभयपार्श्वयोः द्वौ भागौ पक्षयोः स्थापयेत् द्वौ च कक्षयोः, रथमध्य-ममनुसारं पञ्चधा विभज्य तेषामनुलोमः पृष्ठतः स्थापयेत्, अधमस्तृ (मं तृ) तीयसाराख्यं प्रतिलोमं तेषामग्रतः स्थापयेत्। अथ यदसारं फल्गु तदपि ततः प्रतिलोमं ततोऽप्यग्रतः स्थापयेदित्य............... एवमित्यादि, उक्तप्रकारेण सारमसारञ्च सर्वं बलमुपयुक्तं कुर्या-दित्यर्थः।

[४६]ननु फल्गुबलस्याग्रतः करणे किं फलमित्यत्राह—फल्गुबल-मिति। अन्तेष्विति, पत्तकक्षादीनामग्रे निवेश्येत्यर्थः। वेगाभिहुत इति*, आगच्छतां प्रतिबलानां..............अग्नेर्हविरिव भक्षतया देयं तावता तत्प्रशमनार्थमिति भावः। अभिहित इति पाठोऽप्ययमेव तद्भञ्जनेनैव तद्वेगः प्रशान्तः स्यादित्यर्थः।

[५०]ननु—

"कुरुक्षेत्रांश्च मत्स्यांश्च पाञ्चालाञ्छूरसेनकान्।
दीर्घांल्लघूंश्चैनरान् निकालेऽग्रेषु योजयेत्॥"

इत्यादिभिः सारबलस्यैवाग्रतः कार्यत्वं कथमुच्यत इत्याशङ्क्य व्यूहान्तरमाह--सारबलमित्यादि। पत्तकक्षोरस्यातिरेकेण पुरतोऽपि स्थानं कृत्वा तत्रैव सारबलं कुर्यात्। अनुसारादीन् युक्तस्थानेषु।

[५१]एवं सत्येतत् परबलवेगसहिष्णु स्यात्, पराभञ्जनीयं स्या-दित्येतस्य फलमेतदित्यर्थः।

[५२]एवं पक्षादितया च स्वबलं विभज्य परबलापाते योधनप्रकार-माह—व्यूहमित्यादिना। पक्षादीनां पञ्चानां मध्ये एकेन वा द्वाभ्यां वा स्वयं परबलं प्रहरेत्।

[५३]शेषैः प्रतिबलकृतं प्रहारं प्रतीच्छेदित्यर्थः।

[५४]परव्यूहे प्रहरणीयस्थानमाह—यत्परस्येत्यादिना। दुर्बलमिति असारम्। वीतहस्त्यश्वमिति†, सारवदपि अल्पविकलहस्त्यश्वम्।

---

* अत्र 'वेगाभिहूलितः इति डा. जौली. मूलपाठः।

† 'वीतं हस्त्यश्वम्' इति पृथक्पदात्मक एव पाठो जौलीसम्पादितमूलपुस्तके दृश्यते।

दूष्यामात्यमिति*, परस्मिन् क्रुद्धादिरूपमुख्ययुक्तम्। कृतोपजापं चेति, सारादिरूपमप्युपजापेन कृतभेदनमिति। एवं परस्य पक्षादि यत्फलं तत्प्रभूतसारेण हन्यात्।

५५ यत्तु परस्य पक्षादिषु सारतमं बलं तत् ततो द्विगुणसारेण हन्यादित्यर्थः।

५६ आत्मनो रथादिषु यदल्पसारन्तत् बहुनाङ्गेनोपचितं कुर्यादित्याह—यदङ्गमित्यादिना।

५७ परव्यूहे पक्षादिष्वासत्यादिनापि स्वबलव्यूहप्रकारमाह—यतः परस्येत्यादिना। परव्यूहे पक्षादिषु यत्राङ्गानामपुष्टत्वं तत्सन्निकर्षे स्वबलं व्यूहेतेत्यर्थः।

एवं चतुरङ्गस्य बलस्य व्यूहे विभक्तेऽङ्गानां युद्धकर्माभिधातुं सूत्रम्—पत्त्यश्वरथहस्तियुद्धानीति। स्फुटार्थमेतत्।

५८ अत्र प्राधान्यादि........पत्तियुद्धानीति वक्तव्यत्वेपि तस्य सूत्रे प्रतिलोमाभिधानं बाहुल्याशुकारित्वाद्यपेक्षयेति स्थिते, तत्रापि आशुकर्मकारित्वाभिप्रायेण प्रथममश्वकर्माण्याह—अभिसृतमित्यादिना। स्वबलात्परबलं पूर्वमभिसरणं अभिसृतम, परबलस्य पुरः पृष्ठतः पार्श्वेष्वभिहत्य परितो भ्रमणं परिसृतम्, परबलं मध्यतो भित्वा सूचीवदभिगमनमतिगमनम् †, तेनैव मार्गेण पुनर्निर्गमनमपसृतम्, बहुभिरश्वैरितस्ततश्चोन्मथ्यावमर्दवधानं पुनरेकत्रावस्थानं...... ......मध्यावस्थानं द्विधा, सूचिमार्गेणाभिगमनं वलया( यः ),गोमूत्रवद्वक्रगत्या प्रवृत्तिर्गोमूत्रिका, परबलस्यैकदेशमप्यवच्छिद्य तत्परिवेष्टनं मण्डलम्, सर्वगतीनां साङ्कर्येण प्रयोगः प्रकीर्णिका, अपसारं कृत्वा पुनरतिसरणं व्यावृत्तपृष्ठम्, परबलाभिमुखस्य बलस्यानुवर्त्तनमनुवंशम्, प्रहरतामेव युद्धान्निवृत्य स्वबलप्रवेश इत्यन्ये, भग्नानां स्वबलानां समन्ततो...........भनमग्रतः पार्श्वाभ्यां पृष्ठतो भग्नानुरक्षा, भग्नस्य परबलस्यानुवर्त्तनं भग्नानुपातः इत्येतान्यश्वयुद्धानि द्वादशेत्यर्थः।

---

* अत्र 'दूष्यामात्यकृतोपजापम्' इत्येकपदरूप एव डा. जौली. मूलपाठः।

† 'अतिसृतम' इति डा. जौली. मूलपाठः।

५९ हस्तियुद्धान्याह—प्रकीर्णिकेति । प्रकीर्णिकायां सर्वगतिसङ्कररूपत्वेन गुर्वङ्गभवैः हस्तिभिः दुष्करत्वादिति भावः। एवं चतुर्णां पर्यायङ्गानां समस्तानामेकैक..........वा घाततोऽपि हस्तियुद्धमित्याह–चतुर्णामित्यादिना।

६० पक्षकक्षोरस्यानां परानीकानां भञ्जनमेव मर्दनं तच्च हस्तियुद्धमित्याह—पक्षकक्षेत्यादिना। अवस्कन्द इति, छिद्रेषु प्रहारः। सौप्तिकमिति, सुप्तानामवमर्दनम्। इति हस्तियुद्धानीत्यर्थः।

६१ रथयुद्धान्याह--उन्मथ्येत्यादिना। बहुभिरितस्ततः परबलमवभज्य पुनरपसृत्यैकत्रावस्थानं हि उन्मथ्यावस्थानं तद्वर्ज्यानि। एतान्येवेति, हस्तियुद्धान्येव रथयुद्धान्यपि वेत्यर्थः। रथानामेव वैशेषिकानि त्वाह–समभूमावित्यादि*, समा स्थिरा.................काशेत्यादिरूपायां स्वभूमौ अभियानं परबलमभिभूय गमनम्। अपयानमिति, तदभिभूय ततोऽक्षततया शनैरपगमनम्। स्थितयुद्धमिति, प्रकारवत्त्वरुक्षितया परमानुरयावस्थानेन दीर्घयोधनमित्येतानि रथयुद्धानीत्यादि।

६३ एवं चतुर्णामङ्गानां व्यूहाद्यु(न्यु)द्धानि चोक्त्वोपसंहरति—एतेनेत्यादिना। विधिनेति, प्रकारेण। ओजानिति, आयुष्मान्(?); युग्मानिति, समान्; यावदिति, यथेति फलितार्थः तथा च चतुर्णामङ्गानां विभवः सदृशो यावत् यत्परिमाणेषु व्यूहः स्यात् तथा कारयेदित्यर्थः।

६४ अत्र (स?)राजावस्थानभूमिमाह--द्विशते इत्यादि। तस्मात् व्यूहात् द्वे धनुश्शते मुक्त्वा प्रतिग्रहे सैन्यपृष्ठभागे तिष्ठेत्। तत्र प्रयोजनमाह–भिन्नसंघातनार्थमिति, परबलाभिभवानां भिन्नस्य बलस्य सङ्घातका..............प्रतिग्रहस्तरयैव भिन्नसङ्घातनयोग्यत्वात् न तद्रहितो युद्धयेतेत्यर्थः।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां
नयचन्द्रिकायां कौटिलीयटीकायां साङ्ग्रामिके दशमे ऽधिकरणे
पञ्चमो ऽध्यायः।

---

* अत्र 'स्वभूमौ' इति डा. जौली. मूलपाठः।

## १० अधि., ६ अध्या., १५८, १५९ प्रक.

सू. दण्डभोगमण्डलासंहतव्यूहनं, तस्य प्रतिव्यूहस्थापनञ्च ।

तदेवं पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभाग इत्यनेन व्यूहानां सङ्ख्यादिभेदनियमतः व्यूहविभागमुक्त्वा व्यूहानामेव प्रकृतिविकारभावं तेषां संज्ञाश्चाभिधातुं सूत्रम्—दण्डभोगमण्डलासंहतभेदतया व्यूहनमभिधीयत इत्यर्थः ।

तत्र शुक्रबृहस्पत्योर्मतभेदं दर्शयति—पक्षावुरस्यमित्यादिना । पक्षौ बहिःकोट्याविति पर्यायाविति स्थिते पक्षौ बहिः कोट्यौ, उरस्यं मध्यं, प्रतिग्रहः पश्चाद्राजावस्थापनं इत्यनेन प्रकारेण चतुरवयव औशनसो व्यूहविभाग इत्यर्थः ।

बार्हस्पत्यमाह—पक्षावित्यादिना । कक्षौ जघन्यावन्तः पार्श्वौ, शेषं पूर्ववत् बार्हस्पत्य इति*, बृहस्पतिनोक्तः ।

उभयोरौशनसबार्हस्पत्यमतयोः प्रकृतिव्यूहाश्चत्वार एवेत्याह—प्रपक्षेत्यादिना । प्रविभक्तानि पक्षकक्षोरस्यानि अनीकानि येषां ते प्रपक्षकक्षोरस्याः, दण्डादितया चतुर्धेत्यर्थः । प्रविभागश्च वक्ष्यत इति भावः ।

एवं प्रकृतिव्यूहान् विभज्य तेषामौशनसबार्हस्पत्यमतानुगुणं तावल्लक्षणमाह—तत्रेत्यादिना । तत्रेति, तेषु दण्डादिषु । तिर्यग्वृत्तिर्दण्ड इति, तिर्यक् तिरश्चीनो वृत्तिरवस्थानं यस्य स दण्डाख्यः प्रकृतिव्यूह इत्यर्थः ।

समस्तानामन्वावृत्तिर्भोग इति । समस्तानामित्यौशनसमतप्रतिग्रहेण सपक्षादीनां त्रयाणां, बार्हस्पत्यमते तु कक्षाभ्याञ्च सहेति षण्णामपि तिर्यग्दण्डवदवस्थितानां अन्वावृत्तिः सर्पदेहवदनुबन्धेनावृत्तिः विक्रमबाहुल्येनावस्थितिर्भोग इत्यर्थः ।

सरतां सर्वतोवृत्तिर्मण्डलमिति† । सरतां प्रतिबलाभिमुखं गच्छतां सर्पवदनीकानामेकीभावेन समन्ततो व्यापाररूपं मण्डलाख्यो व्यूह इत्यर्थः ।

---

* 'बार्हस्पत्याः' इति बहुवचनान्तः पाठो डा. जौली. मूलपुस्तके दृश्यते ।

† अत्र 'सुतरां सर्वतोवृत्तिर्मण्डलः' इति डा. जौली मूलपाठः ।

[८]स्थितानां पृथगनीकवृत्तिरसंहत इति । प्रतिबला मुख्येन चल- नात् प्र····················पञ्चधनु· नीकसन्धिरिति नियमा ( न ? ) सहत्वेन चतुर्णां षण्णां वा अनीकानां पृथग्वृत्तिः, तथा चलनेऽप्यसंहतानामिव व्यापारवत्त्वं असंहतव्यूह इत्यर्थः ।

[९]एवमौशनसबार्हस्पत्य पक्षयोरपि अनुगुणं दण्डादिप्रकृतिव्यूह- लक्षणमुक्त्वा बार्हस्पत्येन स्वमतेन दण्डस्य पुनर्लक्षणमाह --पक्षकक्षो- रस्येत्यादिना । एवमुत्तरत्रापि भोगादीनां पुनर्लक्षणाभिधानेऽपि अपौनरुक्त्यं ग्राह्यम् । पक्षकक्षोरस्यैस्समं वर्त्तमान इति, पक्षादिषु पञ्चस्वनीकेषु समं··················भावेन वर्तमानः स्थानगमनादि कुर्वाणो दण्डाख्यः प्रकृतिव्यूह इत्यर्थः । अत्र कक्षयो रुशनसानङ्गी- कारात् दण्डादिलक्षणेषु चतुर्ष्वपि विरोधोऽनुसन्धेयः ।

[१०]एवं दण्डस्य स्वामिना मतं सामान्यलक्षणमुक्त्वा तद्विकारान् प्रदरादीनष्टादश लक्षयति–स कक्षातिक्रान्तः प्रदर इत्यादिना । स दण्डः कक्षाभ्यां जघनपार्श्वाभ्यां प्रतिबलाभिमुखं प्रसर्पन् प्रदराख्यो दण्डविकार इत्यर्थः ।

[११]स एव पक्षाभ्यां प्रतिक्रान्तो दृढक इति । कक्ष्याद्यभिमुखमा- गच्छतो बलस्य संपीडनार्थं पक्षाभ्यां बहिः कोटिभ्यां प्रतिक्रान्तः प्रतिलोमानो दृढकाख्य इत्यर्थः ।

[१२]स एवातिक्रान्तः* पक्षाभ्यामसह्य इति । स दण्डः दृढक एव पक्षाभ्यां प्रतिबलस्यान्तरवगाढोऽसह्याख्यो दण्डविकार इत्यर्थः ।

[१३]पक्षाववस्थाप्योरस्याभिक्रान्तः† श्येन इति । द्वावपि पक्षौ यथा स्थापयित्वोरस्येन प्रतिबलमुपसर्पञ्छ्येनाख्यः तत्साम्या- दित्यर्थः ।

[१४]एवमुक्तानां प्रदरादीनां चतुर्णां ( अ ? ) विपर्यये क्रमेण चत्वारो व्यूहाः स्युरित्याह–विपर्यये चापं चापकुक्षिः प्रतिष्ठः सुप्रतिष्ठश्चेति तस्य पक्षाभ्यामतिक्रान्तः प्रदर इत्युक्तं तद्विपर्ययो नाम कक्षाभ्यां प्रतिक्रमणं तदा पक्षाभ्यां प्रतिक्रान्तश्चापाख्यो दण्डविकारः स्यात् ।

---

* 'स एव निष्क्रान्तः' इति डा. जौली. मूलपाठः ।

† अत्र 'अतिक्रान्तः' इति डा. जौली. मूलपाठः ।

एवं पक्षाभ्यां प्रतिक्रान्तो दृढक इत्युक्तं तद्विपर्ययोऽपि पक्षाभ्यामपि (ति) क्रमणमेव तदा चापपक्षाख्यो* दण्डव्यूहस्ये (श्चे) ति । एवमतिक्रान्तः पक्षाभ्यामसह्य इत्युक्तं तद्विपर्ययः पक्षाभ्यां प्रतिक्रमणं तदा प्रतिष्ठो नामा व्यूहः स्यात् । एवं पक्षाववस्थाप्योरस्याभिक्रान्तः श्येन इत्युक्तं तद्विपर्ययस्तूरस्येन पक्षभ्यां (?) चाभिक्रमणं वा उरस्येन पक्षाभ्याञ्चातिक्रमणं वा सुप्रतिष्ठाख्य इत्यर्थः ।

[१५]एवं प्रदरादींश्चतुरः तद्विपर्ययांश्च दण्डव्यूहविकारान् प्रदर्श्य दण्डस्यैव विकारान्तराण्यपि दर्शयति—चापपक्षः सञ्जय इति । चापश्च वेणोर्विकारश्चापं धनुः तदाकृतिपक्षौ यस्य स चापपक्षः सञ्जयाख्य इत्यर्थः ।

[१६]दण्ड एवोरस्यातिक्रान्तो विजय इत्याह—स एवोरस्यातिक्रान्त इति ।

[१७]स्थूलकर्णाख्यं दण्डव्यूहमाह—स्थूलेत्यादि । स्थूलौ पक्षौ यस्य स तथा ।

[१८]द्विगुणेत्यादि । द्विगुणापेक्षया स्थूले यस्य स विशालविजयाख्य इत्यर्थः । अतिक्रान्तेत्यादि, तृतीयातिक्रान्तौ पक्षौ अस्येति तथा, सतु चमूमुखाख्य इत्यर्थः ।

[१९]विपर्यये झषास्य इति । विपर्यय इत्यतिक्रान्तोरस्यत्वे झषास्याख्य इत्यर्थः ।

[२०]ऊर्ध्वराजिरित्यादि । ऊर्ध्वा उपरि परबलाभिमुखी राजिः बलश्रेणिर्यस्य स तथाभूतो दण्डः सूच्याख्य इत्यर्थः ।

[२१]द्वौ दण्डौ वलय इति । पक्षकक्षोरस्येषु तिर्यक्स्थितौ द्वौ दण्डौ यस्य स वलयाख्य इत्यर्थः ।

[२२]चत्वार इत्यादि । प्रदिषु (?) पञ्चसु प्रत्येकं चत्वारः चतुरास्तिर्यक् दण्डाकारा बलस्कन्धा यस्य स व्यूहो दुर्जयाख्यः इत्यर्थः । दण्डव्यूह नुपसंहरति— दण्डव्यूहा इति । एते अष्टादश दण्डव्यूहाः । अत्रैका प्रकृतिभूता शेषास्सप्तविकृतय इति ग्राह्यम् ।

[२३]भोगव्यूहाः पञ्चेत्याह—पक्षेत्यादिना । पक्षादिभिसमं वर्त्तमानो

---

* अत्र कदाचित् 'चापकुक्ष्याख्यो' इत्यादिपूर्वोक्तप्रकरणानुसारी पाठः स्यात् ।

यथाति........................दण्ड उक्तः, तथा तैर्विषमं वर्त्तमानो भोगव्यूहः सर्पशरीरवत् कुटिलतयावस्थितत्वादित्यर्थः। स च द्विधे-त्याह—सर्पसारी गोमूत्रिकावेति, तिर्यगवस्थितत्वे सर्पवदेकारो वा गोमूत्रवदनेकधा विभिन्नो वेत्यर्थः।

[२४] स युग्मोरस्य इत्यादि । स भोगः युग्मोरस्यः द्विधा विभक्तः, दण्डाकारमध्ये एकैकदण्डाकारपक्षद्वयः शकटाख्यो भोग इत्यर्थः।

[२५] विपर्यये मकर इति। युग्मरूपपक्षद्वय एक दण्डाकारोरस्यो मकराख्यो भोग इत्यर्थः । त एषु ये ऽनुपक्षाकदयास्ते औशनसाः तत्रोपोक्तपक्षादिपञ्चानिकाः(?)ते बार्हस्पत्या इति विवेक्तव्यम्।

[२६] हस्त्यश्वरथैर्व्यतिकीर्ण इति रथहस्तिनो ऽन्यतरं प्रधायात्र निवेशनं तमाह—हस्त्यश्वरथैर्व्यतिकीर्ण इति । स एवंभूतः पारि-पतन्तकाख्यो व्यूह इत्यर्थः।

[२७] सरतां सर्वतोवृत्तिर्मण्डलमिति पूर्वं लक्षितस्य मण्डलस्य स्वा-भिमतं लक्षणमाह—पक्षकक्षोरस्यानां एकीभावो मण्डलमिति* । पूर्वोक्तानीकसन्धिरूपान्तरालरहितो मिथो मेलनान्मण्डलाख्यः स्या-दित्यर्थः।

[२८] स सर्वतो मुखः सर्वतोभद्र इति। स मण्डलाख्यः सर्वतो मुखः चतुर्दिक्षु प्रतिबलाभिमुखः सर्वतोभद्राख्य इत्यर्थः । अष्टानीको दुर्जय इति, युग्मोरस्यश्चतुष्पक्षो द्विपक्षो ऽष्टानीकः स दुर्जयाख्यः, दण्डव्यूहेष्वपि दुर्जयस्योक्तत्वादिति ग्राह्यम्।

[२९] स्थितानां पृथगनीकवृत्तिरिति लक्षितस्यासंहतस्य स्वाभिमतं लक्षणमाह—पक्षकक्षोरस्यानामसंहतत्वादसंहत इति। स्थानित्वप्रति-बलाभिमुखमने...........प्यसंहतत्वादसंहताख्य इत्यर्थः।

[३०] स षोढेत्याह—स पञ्चानीकानामाकृतिस्थापनाद्वज्रो गोधा वेत्यादिना। तत्र स्वमतेन पक्षादिपञ्चानीकानां वज्राद्या( द्या )कृत्य-नुकरणेन तत्तत्संज्ञाह्यस्याह–स पञ्चेति। इति असंहताख्यो व्यूहः।

[३१] चतुर्णामित्यादि। औशनसदिशा सपक्षोरस्यप्रतिग्रहाणामुद्या-नककाकपद्याकृतिस्थापनात् तत्संज्ञ इत्यर्थः ।

* अत्र 'एकीभावे मण्डलः' इति डा. जौली. मूलपाठः।

[३२] त्रयाणामित्यादि । त्रयाणां पक्षयोः प्रतिग्रहोरस्ययोरन्यतरस्य चेत्यर्थः । इत्यसंहत व्यूहा इति, षडिति शेषः ।

[३३] एवं दण्डादिप्रकृतिव्यूहांस्तद्विकारांश्चोक्त्वा चक्राद्यतिकेष्वेकैकाङ्गनियमेनाप्यरिष्टादींस्त्रीन् भेदानाह—रथोरस्य इत्यादिना । अत्र प्रतिपक्ष इत्यर्थः । सिद्धं ग्राह्यमेवमङ्गनिवेशभेदादरिष्टाख्यः अरिष्टमशुभं तस्य नास्तीति । पृष्ठः प्रतिग्रहः ।

[३४] पत्तय इत्यादि । पत्तिपक्षाश्चोरस्यरथकक्षो हस्तिपृष्ठोऽचलाख्य इत्यर्थः ।

[३५] हस्तिनोऽश्वा इत्यादि । हस्तिपक्षो...........रश्वोरस्योरथपक्षः पत्तिपृष्ठश्चाप्रतिहताख्य इत्यर्थः ।

एवं व्यूहभेदानुक्त्वा तेषां प्रत्यन्तिकाभिधानार्थं सूत्रम्-तस्य प्रतिव्यूहस्थापनमिति । तस्य चतुरङ्गबलव्यूहस्य प्रत्यनीकव्यूहनमुच्यत इत्यर्थः ।

[३६] तान्याह—तेषां प्रदरमित्यादिना । अत्र कक्षाभिक्रान्ततया बहिर्विश्रान्त बलप्रसरेण दृढकेन घातनमुचितमित्यादिरूपेण दृढकासह्यादेरपि बाध्यबाधकभावः स्वयमूह्यः ।

[३७] दृढकमसह्येनेत्यादौ सर्वत्र घातयेदित्यनुषञ्जनीयम् ।

[४] स्वतरस्य सर्वस्य घातकमनियमेन प्रतिव्यूहमाह—दुर्जयेनवेत्यादि* । दण्डमण्डलभेदेष्वन्ययोरन्यतरेणेति भावः ।

[४४] पदात्या जङ्गयानामेव मिथो बाध्यबाध्यकभावनीयमाह—परयश्चेत्यादि ।

[४५] अङ्गानामेव बाध्यबाधकभावान्तरमाह—हीनाङ्गमित्यादि । पदात्यादिषु अन्यतममाटविकबलं व्यूहं तदङ्गाधिकेन व्यूहेन घातयेत् । अथवा हीनमङ्गमाधिकेन घातयेदित्यर्थः । हीनत्वञ्च सारबाहुल्यादिनेति भावः ।

[४६] व्यूहं व्यूहानां प्रकृतिविकारा(र)भावं तत्संज्ञाश्चोक्त्वा एव व्यूहस्य अङ्गविभागादिष्टे कर्त्तव्ये तज्ज्ञापनार्थं संज्ञाकरणं नायकेन कार्यमिति वक्तुं नायकं तावदाह—अङ्गदशकस्येत्यादिना । तत्र त्रय

---

* डा. जौली. मूलपुस्तके अत्र 'वा' इति नास्ति ।

एव दशवर्गाधिपतयः–पतिकः* सेनापतिः नायक इति। तत्र पतिकस्य दशवर्गाधिपतित्वमाह–अङ्गदशकस्यैकः पतिक इति । अधिपतिरिति शेषः। अत्राङ्गशब्देन रथो वा हस्ती वा प्रधानाङ्गमुच्यते, तस्य व्यूढस्य यद्दशकं तदधिपतिः पतिक इत्यर्थः । तथा च रथानां हस्तिनां वा दशकस्य तदनुसारिणोश्च शतकस्य तदनुबन्धिनः पत्तिषट्शतस्य चैकाधिपतिः पतिक इत्यर्थः ।

[४७] एवं भूतानां पतिकानां दशकस्यैको ऽधिपतिः सेनापतिः ।

[४८] सेनापति दशकस्यैकः पतिः नायक इत्यर्थः ।

[४९] एवं नायकमुक्त्वा तस्य सैन्येषु प्रकृत्यामाह—स तूर्येत्यादिना। तूर्यघोषाणां ध्वजानां पताकानाञ्च विशेषैः स्वसंज्ञां स्वसंकेतं स्थापयेत्। एवं भूते तूर्यघोषे ध्वजे पताकायां..........† पितायामङ्गविभागादिषट्के ऽयमयञ्च विशेषो ग्राह्य इति संकेतं ग्राहयेदित्यर्थः। व्यूहाङ्गानामिति, रथादीनां तूर्य ध्वजादिभिः संज्ञां नियमयेदिति ।

[५०] अङ्गविभाग इति। अत्राङ्गविभागो व्यूहविभजनं, संघातः सहततयावस्थानं, स्थानं गमनाकरणं, गमनं, परबलाभियोगः, व्यवर्त्तनं परबलात्प्रत्यावर्त्तनं, प्रहरणं योधनम् इत्येतदङ्ग विभागादिषट्क ...............षट्सु कर्त्तव्येष्वित्यर्थः। स्वपरबलयोः समे एकरूपे दण्डादिव्यूहविभागे सिद्ध्यङ्गं कश्चिद्विशेषमाह—सम इत्यादिना। देशतः समविषमादिरूपात्, कालतः रात्रिवर्षादियोधिनां रात्र्यादिरूपात् सारं शौर्यादियोगः, एभिःजयः स्यादित्यर्थः।

[५१] एवं प्रकाशयुद्धाङ्गतया प्रकृतिविकृतिभूतान् व्यूहांस्तेषां बाध्यबाधकभावञ्चोक्त्वा विजिगीषोस्तत्त्याज्यतामभि प्रायेण तूष्णीं युद्धं स्थितिश्चानुष्ठेयत्वेनाह--यन्त्रैरित्यादिना‡ । यन्त्राणि जामदग्न्यादीनीति । उपनिषद्योगाश्चौपनिषदिकोक्ताः विष( म ? )धूमाम्बुदूषणादयः ।......उपाध्यायाः (?) व्यासक्तानामन्यपराणां रन्ध्रेषु घातनं नीलैः तीक्ष्णपुरुषैः मायाभिरसत्प्रकाशेनातिसन्धाने दैवसंयोगैः राज्ञो

---

* 'पदिकः' इति सर्वत्रापि डा. जौली· मूलपुस्तके पाठः ।

† अत्र कदाचित् 'पताकायां वा निरूपितायां' इत्यानुपूर्वीकः पाठो भवेत् ।

‡ अत्र डा. जौलीसम्पादित मूलपुस्तके 'दण्डैः' इत्यात्मकः पाठः समुपलभ्यते ।

दैवसंयोगि.............राज्ञो दैवसम्पन्नत्वख्यापनैः । शकटैर्हस्तिभूषणैरिति, हस्तिनां भूषणानि तदेतद्द्वेषरूपं वाच्छादनानि एषां तैः शकटैश्च ।

५२ दूष्यप्रकोपैः—परप्रकृतिषु ये दूष्याः तेषां प्रकोपनैः भेदनैः,... ......यूथैः पुरतः पशुसङ्घप्रक्षेपैः । स्कन्धावारप्रदीपनैरिति, शिबिराग्निनादैः, प्रमर्दनैरिति पाठे स्कन्दनैरित्यर्थः । कोटिजघनघातैर्वेति, कोट्योः परबलयोः जघनयोः कक्षयोश्चातर्कितप्रहारैः । दूतव्यञ्जना ये गूढपुरुषाः तत्कृतिरुपजापैश्च परस्योद्वेगं कुर्यादिति ।

५३ किञ्चिद्दुर्गादिदाहात्मकरणैश्चेत्याह—दुर्गमित्यादि । दुर्गं नाशितं वा आत्मीयतया कृतं वा, तुल्यज्ञतया तज्जन्यकोपो जनपददाहादि शत्रुर्वा सामन्तो राजा वा ऽन्यो वा समुत्थित इति, एभिश्च परस्य भयं जनयेत् न तु युध्येतेत्यर्थः ।

५४ आयुधादपि नीतिप्रयोगः सिद्धिद इत्याह—एकं हन्यादित्यादिना । इष्ट.................मुक्तं परं हन्यादेवेति, न तापश्च (?) या हननपक्षेऽप्येकमेव हन्यात् । नन्वितराज्ञीतिस्तु प्रयुक्ता परान् हन्यादेव, तांस्तु गर्भगतानपि कार्त्स्न्येनेति विशेष इत्यर्थ । उक्तञ्चः—

युद्धं सर्वात्मना त्याज्यं राज्यकामेन धीमता ।
उपायैस्त्रिभिरादान मर्थस्याह बृहस्पतिः ॥

इत्येवं मानववाक्यान्यप्युदाहार्याणि ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां साङ्ग्रामिके दशमे ऽधिकरणे षष्ठो ऽध्यायः ।

सम्पूर्णञ्च साङ्ग्रामिकमधिकरणम् ।

# अथ सङ्घवृत्तं नाम एकादशमधिकरणम्।

## ११ अधि., १ अध्या., १६०, १६१ प्रक.

### सू. भेदोपादानानि उपांशुदण्डश्च ।

सामादीन् सङ्ग्रामपर्यायदण्डान्तानुक्त्वा ये भूम्यानन्तर्येण स्वभूमावेव अप्येकैकशः क्षुद्रावर्त्ताः शत्रूपजीविनः क्षत्रियादीनां सङ्घीभावैकबलाः सङ्घाः सङ्घातेन नित्यमजय्याः, तेषां विधेयीकरणोपायप्रदर्शनार्थं सङ्घवृत्तमारभ्यत इत्यधिकरणसम्बन्धे स्थिते तद्विधेयीकरणोपायकथनार्थं सूत्रम् भेदोपादानानीति । भेदस्य सङ्घविश्लेषोपायस्य उपादानानि प्रयोगाः उच्यन्त इत्यर्थः ।

[1]सङ्घाद्ध्येकैकशः सैन्यतया वा तन्मुख्यद्वारा मित्रत्वेनवोपजीव्याः, तदुभयविधलाभानां मध्ये सङ्घलाभ उत्तम एव, अतः सोऽवश्यं विधेय इत्याह—सङ्घे (ही ?) त्यादिना ।

[2][3]तथात्वे हेतुमाह—सङ्घे हीत्यादि* । सङ्घातादिति, संहतत्वादित्यार्थः । ननु सम्भूयप्रयाणमेवैतत्, तच्च प्रागेवोक्तमिति चेन्न । तद्धि स्वातन्त्र्येण एकदेशाधिपतीनां राज्ञां मिथः पणादिकृतसन्धीनां एककार्यकरणरूपः, नत्वेतत्तथा, अपित्वेकस्मिन्नेव देशवार्त्तादिजीविनामनेकेषां क्षुद्राणामेकार्थतया समवायरूपम्ः अतोऽत्यन्तम (न्तं) भिन्नमित्यलम् । तान् सङ्घानप्रतिकूलान् सामदानाभ्यां विधेयी कुर्यात्, इतरान् भेददण्डाभ्यामित्याह-तानित्यादिना ।

[4]के पुनस्ते सङ्घा इत्यत्राह—काम्भोजेत्यादि । काम्भोजसुराष्ट्रयोः क्षत्रियाः श्रेणीभूताः एकैक चारिणोऽतिक्षुद्राः कृषिशास्त्रादिभिर्जीवन्ति । आदिशब्दाद्वर्णान्तरीया अपि ग्राह्याः ।

[5]लिच्छिविकादिदेशवासिनस्तु राजशब्दमात्रधारिणो निष्परि-

---

* अत्रोभयत्रापि 'सङ्घाभिसंहतत्वात्' इत्यानुपूर्वीकः पाठो डा. जौली. सम्पादित मूल पुस्तके दृश्यते ।

कराः सङ्घातमेवोपजीवन्ति । आदिशब्दादन्धकवृष्ण्यादयश्च । उभयेषामप्येषां भेदएव स्वीकरणोपाय इत्यर्थः ।

[६]आसन्ना इति, बन्धुतयानुप्रविष्टाः । भेदप्रकारमाह–परस्परेत्यादि । न्यङ्ग-अन्योन्यदोषोक्तिः, द्वेषो वाक्यारुष्यादिमात्रजः, अमर्षजं वैरं, बन्धुपराद्यपकारकं कलहं, स्थानमिति एकं त्रिपार्थनादि; एतान्युक्त्वा क्रमेणाभिमुखतान्तिकं (?) तं साक्षीकृतं भेदं विश्लेषमपचारयेयुः प्रयुञ्जीरन् ख्यापयेयुरिति ।

[७]वनभेदप्रकारश्चाह—असौ वे* त्यादि । विजल्पतीति, परिवदतीत्यर्थः ।

[८]एवमुभयत इति । भेद्ययोरुभयोरेकस्यैकः सत्रिणो भेदं कुर्यात्, अन्यस्य वाऽन्य इत्यर्थः । मिथो बद्धरोषाणामेषां येबालाः पुत्रादयः, तेषांविद्यादिविषयान् कलहान् उपाध्यायच्छद्मानः सत्रिणोजनयेयुः, असौ त्वामक्षराण्यपि तज्ज्ञानादित्युक्तवानित्यादिकथनेनेत्याह–बद्धरोषाणामित्यादिना । वि..........................दिका, शिल्पमस्त्रशिक्षादि, द्यूतमल्लक्रीडादि, वैहारकं प्रवेशनोत्तरप्रहेलिकादि प्रयोगः ।

[९]सङ्घमुख्येषु वाक्यान ( ? ) जनयेयुरित्याह—वेश्येत्यादि । वेश्यासु सौरिकेषु च काममदाक्षिप्तानाममर्षजननं सुकरमिति भावः । सङ्घमुख्यमनुष्याणामिति, सङ्घे मुख्याये मनुष्यास्तेषाम् ।

[१०]कृत्यपक्षोपग्रहेण वेति । सङ्घमुख्यानां ये मिथः कृत्याः कुण्डभीतलब्धमानिनः तानुपगृह्यते तत्कुमारकलहानुत्पादयेयुरित्यर्थः । कुमारकानिति, सङ्घस्य पुत्रपदव्यारूढा ये कुमारकाख्याः तेषु ये भिन्नवृत्तयः तान् प्रभूतयावृत्त्या......नीष्णां ( ? ) प्रोत्साहयेयुः सङ्घपुत्रत्वे तुल्येपि योऽयं राजाह......परिच्छदः तत्प्रभृत्येभ्यो हीनपरिच्छद इति मिथः कलहोत्थमुत्..................† ।

[२५]......................सङ्घष्वेव चरन्तः शौण्डिकव्यञ्जनाः स्वपुत्रादिमरणं व्यपदिश्य मृतोद्देशेन यद्देयं मद्यं तन्नैषेचनिकाख्यं

* 'असौ त्वा' इति डा. जौली. मूलपाठः ।

† कदाचिदत्र '॰मुत्पादयेदित्यर्थः ।' इत्याद्यनुपूर्वीकः पाठो भवेत् । इतः परश्च भूयान् ग्रन्थस्त्रुटितो भाति । पञ्चविंशतितमसूत्रादारभ्यैव पुनर्व्याख्याग्रन्थः समुपलभ्यते ।

पुत्रेभ्यः सङ्घेभ्यो दद्यात्, मदनरसयुक्तत्वेन प्राणहर इत्यत्राह—विक्रमकाल इत्यादि ।

[२८] भेदोपायान्तरमाह—चैत्यदैवतेत्यादि । चैत्यदैवतानि चण्डिकाद्यत्युग्रदेवताः, तद्द्वारेषु वा हिरण्यनिक्षेपानुगुणरक्षास्थानेषु वा राजपुत्रस्य सङ्घान्तर्गत इत्यपदेशैस्सह शपथकरणार्थमेतदिति राजपुत्राय राज्ञा दत्तमिदं हिरण्यं सङ्घेषु तेभ्यश्चे( दि ? )प्रकाशयेयुः । सङ्घेषु पृच्छत्सु राजक्रिया एते भारायिता इति गोपायन्त इव कथयेयुरित्यर्थः ।

[२८] एवं राजपुत्रवत् पक्षेभ्यः सङ्घानां............रीरादिनाशरूपमवस्कन्दं कारयेयुरित्यर्थ इत्याह—अथेत्यादिना ।

[२९] भेदोपायान्तरमाह—सङ्घानां वा वाहनेत्यादि । कालिकतया कालान्तरदेयमूल्यतः संघेभ्यो गृहीत्वा सङ्घमुख्याय तत्प्रसिद्धमेव दद्यात् ।

[३०] अथ सङ्घैस्तद्द्रव्यं याचितो विजिगीषुरमुष्मै मुख्याय दत्तमिति ब्रूयात् । एवञ्च संघस्य............रोधः स्यादिति भावः ।

[३१] एतेनेति । राजशब्दादिसङ्घकथनेन भेदकथनेन यात्राकाले शिबिरवर्त्तिकानामाटविकानाञ्च सङ्घभेदो व्याख्यातः ।

[३२] ............भेदनमाह—सङ्घमुख्यमित्र* मित्यादिना । आत्मसंभावितमिति, स्वात्मनि साभिमानमित्यर्थः । ग्राहयेदिति, प्रतिपन्नं कुर्यात् ।

[३३] अमुष्य राज्ञ इति—विजिगीषोरित्यादि (ना ?) ।............नेन गूढवधं शङ्कयेदित्यर्थः । इहन्यस्त इति, सङ्घमुख्ये पुत्रतयेत्यर्थः ।

[३४] प्रतिपन्नमिति । तथाभ्युपगतवन्तः । उपगृह्येति स्वपक्षीकृत्येत्यर्थः ।

[३५] अवाप्तार्थ इति । मुख्यपुत्रेण कृतसङ्घविनाश इत्यर्थः । तमपीति, मुख्यमपितैरेव घातयेदित्यर्थः ।

[३६] भेदान्तरमाह—बन्धकीपोषकेत्यादि† । बन्धकयः कुलटाः, अत्र कुलट........परस्त्रीसम्भवादि ग्राह्यम् ।

---

* अत्र '०मुख्यपुत्रम्' इति डा. जौली. मूलपाठः ।

† 'बन्धकीपोषकाः' इति बहुवचनान्तः पाठो डा. जौली. मूल पुस्तके ।

[३७] मुख्योन्मादनेनापि किमित्यत्राह—जातकामानामित्यादि । बहुषु जातकामेषु अन्यतमं दत्तगमनविश्वासं कृत्वा ततो ऽन्यस्मिंस्त्रिया गमनेन वाऽन्यक्र.........पोषमुख्यान्मिथः कलहं कारयेयुरित्यर्थः ।

[३८] कर्मकुर्युरिति, स्वकार्यहननं कुर्युरित्यर्थः । इत्थं कामुक इति, उक्त्वेति शेषः ।

[३९] कामुकान्तरकृतत्वप्रतिभासार्थ...........*...तं वेत्यादि । संवादितं कारितसंवादम् ।

[४०] असाविति । त्वत्पार्श्वगमनं प्रतिबध्नातीत्यर्थः ।

[४१] नेह स्थास्यामीति, तस्मिन्नहते त्वत्पार्श्वे वस्तुमशक्यमित्यर्थः ।

[४२] यदा त्वेकेन कृतसंवादमन्यः प्रसह्यापहरेत् तत्राह—प्रसह्येति । अज्ञातहन्तृकत्वायेति भावः ।

[४३] [४४] अमर्षणमिति असहना स्वयमेव विषम प्र......वेति (?) ।

[४५] अमुनेति । कामुकान्तरेण हत इति प्रकाश इत्यर्थः ।

[४६] पक्षान्तरमाह—जात काम वेति । स्त्रियां जातकाममुज्व षणसंवादस्य मेलयित्वा वशीकारार्थाभिरोषधीभिरतिसन्धायाज्ञातं व्यापाद्यान्यत्र गच्छेदित्यर्थः ।

[४७] सिद्धव्यञ्जने गते सत्त्रिणः कामुकान्तरप्रयुक्तस्स ( ? ) सिद्ध इति ख्यापयेयुरित्याह—तस्मिन्नित्यादि ।

[४८] ..................प्रयुक्तानां स्त्रीणां कृत्यमुक्त्वा विधवादीनामप्याह—अस्येत्यादिना । गूढाजीवा योगास्त्रिय इति, गम्यानां व्यू ( गू ) ढगमनं व्य ( प्र ) त्युपाय आसां तागूढाजीवा योगपुरुषधारिण्यः । दायनिक्षेपार्थमिति; दायार्थं निक्षेपार्थञ्चेति, पत्यौ मृते दायः पत्यावन्यत्र ( स ? ) वा सङ्क्रमतीत्यत्र विवादिन्य इत्यर्थः । एवं निक्षेपेपि साक्षादिति तन्निर्णयार्थं सङ्घमुख्यान् सम्प्राप्ता इत्यर्थः ।

[४९] अदिति कौशिकस्त्रिय इति† । अदितिकौशिदेवतालेख्यध्वजेन भिक्षमाणानां योगपुरुषाणां......दार्थं कृतसंवादांश्च रात्रौ गूढवेश्मसु

---

* अत्र कदाचित् '०प्रतिभासार्थमाह—विसंवादितं' इत्यानुपूर्वीकः पाठो भवेत् ।

† डा. जौली. सम्पादित मूल पुस्तकेऽत्र 'अदिति' इति पाठो नास्ति ।

सुतीक्ष्णा हन्युर्वा बद्ध्वाऽपहरेयुर्वेत्यर्थः। एवञ्च सङ्घो दुर्बलो विधेयः स्यादित्याशयः।

[५०] पक्षान्तरमाह—*...................षु चपलम्। प्ररूपयेदिति, बोधयेत्।

[५१] कथमित्यत्राह—अमुष्मिन् ग्राम इत्यादि। दरिद्रकुलमिति, दरिद्रकुटुम्बम्। अपसृतं, कार्श्यवशादन्यत्र पत्यर्थं गतम्।

[५२] तं...†.........राजत्वापादिका।

[५३] परस्त्रीं गृहाणैनां प्रेयसीत्वेनेत्यर्थः।

[५४] अर्धमासान्तरामिति‡, अर्धमासः पक्षः सोन्तरालमा (नो?) क्रोशकालो यथास्यादिति आक्रोशेदिति। दूष्य इति राज्ञो वध्यः।

[५५] भार्यादिष्वन्यतमामति+चरति बलाद्गच्छतीत्यर्थः।

[५६] तञ्चेदिति। सङ्घ एव यदि तन्मुख्यं निगृह्णीयात्, तथा तं निगृह्यमाणं राजा स्वीकृत्य प्रोत्साहयेत्।

[५७] अथ सङ्घस्तन्न निगृह्णीयात् तदाऽऽक्रोष्टारं दूष्यतया राजवध्यं सिद्धव्यञ्जनास्तीक्ष्णा रात्रौ गूढं हन्युः।

[५८] हतस्य च तस्य बन्धुतया......रित्याह—तत इत्यादिना।

[५९] ब्राह्मणस्य सिद्धस्यासौ हन्ता भार्याद्यन्यतमब्राह्मणीजारश्चे-त्यादौकोशौ (सौ) प्रकार इत्याह—असौ ब्रह्महा ब्राह्मणीजारश्चेति। सत्रीति शेषः।

[६०] अन्यस्य प्ररूपयेदिति, सङ्घमुख्येष्वेकेन वृतां काञ्चित्कन्या-मन्यस्यैषा भविष्यतीति प्ररूपयेत् प्रब्रूयात्।

[६१] अमुष्येति। तत्कन्यापितुः; कन्या राजानं पतिं पुत्रञ्च प्राप्स्यति।

---

* कदाचिदत्र 'सत्री वेत्यादिना। स्त्रीलोलुपमिति, स्त्रीषु चपलम्' इत्याद्यानु-पूर्वीकः पाठो भवेत्।

† अत्र कदाचित् 'तस्येति। राजार्हा इति, राजत्वापादिका' इत्यादिपाठो भवेत्।

‡ 'अर्धमासानन्तरं' इति डा. जौली. मूलपाठः।

\+ अत्र 'अभिचरति' इति डा. जौली. मूलपाठः।

६२ अतश्चैनां सर्वस्वं प्रदाय वा बलेन वा लभस्वेति।

६३ ततः पाश्चात्य............पूर्वं परस्य पक्षमुद्धर्षयेत्, पाश्चात्यविजयेनोद्धतं तद्विरोधिनञ्च कुर्यादित्यर्थः।

६४ पाश्चात्येन लब्धायान्तु पूर्वं परेण तस्य कलहः सिद्ध एव नत्वापाद्य......दित्या—लब्धायामिति।

६५ भेदनान्तरमाह—भिक्षुकी वेत्यादि। प्रियभार्यमिति विशेषणं तत्तत्परामर्शादमर्षोत्पादौचित्यं ज्ञापयितुम्।

६६ भिक्षुकया वचनमाह—असौ*.........न्मत्तो ऽसौ मुख्यस्ते भार्यायां मां दूतीत्वेन प्रेषितवान्।

६७ तद्भयात्तु तस्य पु(प)त्ररूपं लेख्यमाभरणं चेदं गृहीत्वाऽहमागता।

६८ भार्या तु ते तदिदं ना†......तीति निर्दोषा।

६९ तदयं निगूढं हन्तव्य इत्यर्थः। अहमपि तावत्प्रतिपत्स्य इति‡, यावदसौ त्वया हतः स्यात् तावदहमपि तदुक्तं कुर्वाणैः........।

७० ...............वादस्थानेषु स्वयमुत्पन्ने वा तीक्ष्णैरुत्पादिते वा कलहे सति राजा हितपक्षमर्थेन बलेन च स्वीकृत्य तं गुणहीनेषु विक्र+........देशान्निर्वासयेद्वेत्यर्थः।

७१ एवं राज्ञः सङ्घेषुवृत्तमुक्त्वा उपसंहरति—एवमेकेति।

७२ राज्ञि संघानामपि वृत्तं लाघवेनोदीरयति—सङ्घाश्चेत्यादि।...
.....मुपाया उक्ताः। तेभ्यो रक्षयेयुः, आत्मानमित्यर्थः।

७३ एवं सङ्घानामात्मरक्षणमुक्त्वा तन्मुख्यानाञ्च सङ्घेषु वृत्तिमाह—सङ्घमुख्यश्चेत्यादिना।...........ति तथा। हित इति पथ्यकारी;

---

* अत्र 'असौ ते इत्यादिना। यौवनोन्मत्तो' इत्यानुपूर्वीकः कदाचित्पाठो भवेत्।

† अत्र कदाचित् 'नाम्नापि न स्मरतीति' इत्यादिपाठो भवेत्।

‡ 'प्रतिपत्स्यामि' इति डा. जौली. मूलपाठः।

+ कदाचिदत्र 'विक्रमयेत्, अपवाहयेद्वा—' इति पाठः स्यात्।

प्रिय इति इष्टकारी; दान्त इति अनुद्धतवृत्तिः; युक्तजन इति उपगृहीतलोकः; सर्वचित्तानुवर्त्तक इति कतिपयचित्तानुविधायी सदैवंभूतो वर्त्ततेत्यर्थः।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां संघवृत्ते एकादशे ऽधिकरणे प्रथमो ऽध्यायः।



सम्पूर्णञ्च सङ्घवृत्तमधिकरणम्।



# आबलीयसं, नाम द्वादशमधिकरणम्।

## १२ अधि., १ अध्या., १६२ प्रक.

### सू. दूत कर्माणि।

तदेवं समज्यायोभ्यां सन्धीयेत हीनेन विगृह्णीयादित्युक्त्वा बहुभेदास्सन्धयः संग्रामपर्यन्ता विग्रहप्रकाराश्च दर्शिताः, भेदो... ............तरसस्य सन्धिमनिच्छति ज्यायसि कर्त्तव्याभिधानार्थमाबलीयसं वाच्यमित्याधिकरण सन्बन्धः।

ननु किमिदमाबलीयस्त्वं नाम..............व मात्रं वा, द्वयोर्दुर्बलयोरन्यतरस्य दुर्बलत्वं वा, नाद्यः समबलस्यापि नानापत्तेः (?)। नापरः, सर्वेभ्यः प्रलाभप्रसङ्गादिति चेन्न प्रबलः प्रतिद्वयोर्दुर्बलयोर्मध्ये मात्रया दुर्बलात् दुर्बलतरस्य कृत्यमित्यवस्थाना...... .........स्योरुक्तत्वादाबलीयसोर्द्विभेदाधिकं कथमित्यपेक्षायां तद्भेद कथनार्थं सूत्रं—दूतकर्मेति। दूतव्यापार उच्यत इत्यर्थः।

[1] तत्र सन्धीयत्वात् तत्प्रदर्शनार्थं मतभेदांस्तावद्दर्शयति—बलीयसेत्यादिना। आत्मनो बलवत्तरेणाभियुक्तो दुर्बलः तत्कृतसकलन्यवकारेष्वपि स्रोतोजवानुपत्ति.................एतीत्यर्थः।

[2] सर्वदा बलवदनुवृत्तिर्न पौरुषमित्यत्राह—इन्द्रस्य हीति।

[3] मतान्तरमाह—सर्वसन्दोहेनेति। यावद्बलं व्यापृतस्य जयो मृत्युर्वा स्यात्।

मन्वयमपि निषेधति इत्याह*..........

[5] आद्यस्य दोषमाह—सर्वत्रेति। कुलैडका इति, यथा सङ्घात् प्रच्याव्याभकूलगृह............तमेष...........स्तः तथेत्यर्थः।

[6] द्वितीयस्याप्याह—युध्यमानश्चेति। अप्लव इति, नौरहितः।

[10] ......नाम तमाह—तद्विशिष्टस्त्विति। तस्माद्राज्ञो बलवत्तरं राजान्तरं†............धर्षं दुर्गं वाश्रितः। चेष्टेतेति, कुर्यादित्यर्थः।

---

* इतः परं भूयान् ग्रन्थस्त्रुटितो भाति।

† अत्र कदाचित् 'अविपह्यं दुर्धर्षं' इत्यानुपूर्वीकः पाठो भवेत्।

[11] विषयभेदाच्चेष्टाया भेदमाह—अय इत्यादिना ।

[12] अभ्यवपत्स्येति, आत्मीयार्पणे बलम् (?) । धर्मविजयीति, तद्भयाद्बलस्य प्रतिपत्तिः । अपितु यदायं परेभ्यो बिभेति तदापि स प्रवक्तव्य इत्यर्थः ।

[14-15] अर्थेनेति, धनदानेन ।

[16] अग्राह्य..............सन्ध्यादिनेति शेषः ।

[17] तेषामिति, धर्मविजयिप्रभृतीनाम् । उत्तिष्ठमानमिति, अभियुञ्जानम् । सन्धिनेति, सन्धिनिमित्तेन मित्रयुद्धेन, नयप्रातिनयप्र........वेण वा । प्रतिव्यूहेत...............अपकुर्यात् सन्धेस (?) लोहतापनन्यायेनेति भावः ।

[18] मन्त्रयुद्धप्रकारमाह—शत्रुपक्षस्येति । अस्य सन्धेयस्य शत्रुपक्षमुपाये............।

[19] ........तत्स्वपक्षसन्धेयस्य प्रकृतिवर्गे भेददण्डाभ्या मित्यर्थ ।

[20] कूटयुद्धरूपतया प्रतियुद्धं दर्शयति—दुर्गमित्यादिना । दुर्गं स्थानीयादि । राष्ट्र............दिभिः साधयेयुः नाशयेयुरित्यर्थः । दुर्गादिध्वंसनेन यात्राविघातात् परसिद्धिमिच्छेदिति भावः ।

[21] सर्वेत इति । पार्श्वयोः पृष्ठत इत्यादिः ।

[22] अस्य शत्रुभिराटविकैश्च दुर्गसेनादिरूपं राज्यं या (वा) तयेत् ।

[23] तत्कुलीनेन ज्ञातिना, अवरुद्धेन याचितेन पुत्रेण वा ।

[24] राज्यकृत्यानन्तरं सन्ध्यर्थं दूतं प्रहिणुयादित्याह—अपकारान्तेष्विति ।

[25] पक्षान्तरमाह—अनपकृत्य वेति । सन्धानमिति, प्रार्थनीयमिति, शेषः । स...............लाचरणयोगात् सप्तलोहघटन्यायस्तुल्यबल विषय इति भावः ।

[26] अपकारस्तु स्वर्णादिपणनेन सन्धिमिच्छत्यपि (?) विजिगीषोरपि यात्राधानं निवर्त्तेत । पणितस्य तु कोशस्य दण्डस्य वा पुनः पुनः पादं पादमधिकं कृत्वा वा पूर्वोक्तादधिकं सन्धिकालं कृत्वा वेत्यर्थः । यथा स्वर्णलक्षे पणिते पुनः पञ्चविंशतिसहस्रेणेत्यादि, एवं दण्डेपि शतमश्वा देया इति पणिते पुनः पञ्चविंशत्यधिकशतेनेत्यादि । अहोरात्रोत्तरं वेति, यथैकवर्षमेवं कार्य......... ।

[२७]............न रथ्यर्थे उपवर्षमित्यादि सन्ध्यभ्युपगमे कोशदण्डयोर्दान प्रकारमाह स चेदित्यादि । अत्र कोशदण्डयोरिति (अ?) न्याय्याक्रमे प्रकृतेपि प्रथमदण्डदानमनुरूप.............योक्ता दुर्बलेन सन्धिविधौ कोशादपि दण्डः प्रधानं क्रियमाणाङ्गत्वादिति ज्ञापयितुमिति ग्राह्यम् । कुण्ठमिति, युद्धाक्षमम् । उत्सारमपि मासिकार्धमासिकादिमारकविषयप्रयोगमित्यर्थः ।

[२८]पुरुषबलमिति* । पत्तिबलञ्चेद् याचेतेत्यर्थः । दूष्याः राज्ञि...
.........आटविकाश्च । योगबलाधिष्ठितमिति†, परसैन्ये गरधूमदानादिद्वारा ।

[२९]तद्बलं शत्रुबलञ्च यदुभयं नाशयेत् तेन सहितमित्यादि (?) ।

[३१]अनुरक्तमिति, स्वस्मिन्निति शेषः ।

[३२]दण्डसन्धिमुक्त्वा कोशसन्धिमाह—कोशसन्धिमिति । सारमिति, अनयमित्यर्थः । अनयस्य विकासाद्य.............स्यादिति हृदयम् ।

[३३]कुप्यमिति । वस्त्रास्तरणादिकमन्यमपि अयुद्धयोग्यमित्यर्थः ।

[३४]भूमीत्यादि । यदि परो भूमिसन्धिं याचेतेत्यर्थः । परस्य फल्गुफलामित्यर्थः । नित्यामित्रामिति, परच्छेदादिना नित्यदूषिताम् । अनपाश्रयामिति, दुर्गरहिताम् । महाक्षय.........पचयः क्षयः, धान्यादिदानं व्ययः तौ महान्तौ प्रभूतौ यस्य निवेशकरणे तामित्यर्थः ।

[३५]स्वावस्थानार्थं स्थान.........वा दुर्बलः सन्धिं याचेतेत्याह—सर्वस्वेन वेत्यादि ।

[३६]राजधानीमपि दत्त्वा स्वशरीरं रक्षेदित्याह—यत्प्रसह्येत्यादि । उपासत इति, सन्ध्या.........था शरीरमपि लभ्येतेत्यर्थः ॥

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्र विरचितायां नयचन्द्रिकायां कौटिल्यटीकायां आबलीयसे द्वादशेऽधिकरणे प्रथमोऽध्यायः ।



* 'पुरुषसन्धि' इति डा. जौली. मूलपाठः ।

† अत्र 'योगपुरुषाधिष्ठितम्' इति डा. जौली मूलपाठः ।

## १२ अधि., २ अध्या., १६३ प्रक.

सू. मन्त्रयुद्धम् ।

यदैवं सन्धिं याचितः परं प्रत्याचष्टे तदा तत्प्रतिविधानार्थं सूत्रम्—दूतकर्म मन्त्रयुद्धमिति*। मन्त्ररूपं वा युद्धं मन्त्रेण विजयार्थोऽपि आरोप इत्यर्थः ।

[१] .........न्यकृत्यामाह—स चेदित्यादिना ।

[२] विनयाधिकारिकोक्ताः शत्रुषड्वर्गवशगा दूतेनैव तदोपधियमाणा इमे उच्यन्त इमे ग्राह्याः ।

[३] मार्गमिति, विनाशफलं चरितम् ।

[४] धर्ममर्थञ्चेति । काममोक्षयोः प्रकृतानुपयोगादग्रहणम् ।

[५] उपदेष्टृशिरसि दोषं निदधदाह—मित्रमुख्या हीत्यादिना ।

[६] साहसादित्वमुपपादयति—शूरैरित्यादिना । साहसं निरूप्यकरणम् । त्यक्तात्मभिरिति, देहनिरपेक्षैः । योद्धुमिति, व्यवसाय इति शेषः ।

[७] अस्याधर्मत्वमाह—जनक्षयमिति ।

[८] अर्थातिक्रममाह—दृष्टमित्यादि । दृष्टमर्थमिति, सन्धिद्वारा हस्तगतमित्यर्थः । मित्रमदुष्टञ्चेति, विजिगीषुभ्यां कृत्रिमं तत्त्यक्तुं व्यवसायो ऽर्थातिक्रमः ।

[९] प्रकारान्तरेणाप्यर्थातिक्रममाह—मित्रवांश्चेत्यादिना ।

[१०] एतेनार्थेनेति, युष्मत्सख्यर्थः परार्थः । सर्वत इति, पुरः पार्श्वयोः पृष्ठतश्चेत्यर्थः ।

[११] मण्डलस्य वा परित्यक्त इति, मध्यमादेः परित्यक्तवर्गस्थ इत्यर्थः ।

[१२] तर्ह्येतस्याभियोक्तारं किमुपेक्षेतेति.........इत्यत्राह—ये त्वामित्यादि, ये त्वामतदुच्छेदो (?) प्युक्तं न प्रतिघ्नन्ति..........रुदासीनास्तिष्ठन्ति ।

[१३] तदेवं बुद्ध्वेत्यादि.........इत्याह—भूय इत्यादि । क्षयव्ययाभ्यां युज्यतामिति, युग्यपुरुषापचयः क्षयः, धान्यहिरण्यादिदानं व्ययः ।

* अध्यायादावत्र 'मन्त्रयुद्धम्' इत्येव सूत्रम् । प्रथमाध्यायादौ तु 'दूतकर्माणि' इति पृथक् सूत्रम् । अत्रापि कदाचित् 'मन्त्रयुद्धमिति' इत्यात्मकमेव प्रतीकं स्यात् ।

[14] अभियुज्यमानान्मित्राच्चाभियुक्ताम् ।

[15] ततः शिथिलमूलमेनमुच्छेत्स्याम इति,..........मिति वचनमिति शेषः।

[16] श्रेयसा योक्तमिति, तव मित्राणाञ्च विनाशः त्वदमित्राणां श्रेय इति भावः। न केवलमर्थातिक्रमः अपितु त्यक्तात्मभिः शूरैः.........ण संश्रयोधने (?) प्राणसंशयोपीत्यर्थः । तथा सिद्धस्य राज्यस्य विनाशोऽपीत्याह—अनर्थश्चेति ।

[17] एवं भेदयोगानिवृत्तो ऽपरं विधिमाह—तथापीति । अस्येति, अभियोक्तृपरस्येत्यर्थः। यथा सङ्घवृत्त इति, यथा सङ्घानां तीक्ष्णानां ......ध्यविधवादिभिर्मिथो भेदनमुक्तम्, तथा प्रकृतीनामपि कार्यमित्यर्थः । योगवामने तीक्ष्णरसदप्रयोगाश्चेति, यथा वक्ष्यन्त इति वाक्यशेषः।

[18] एतदेव विषयभेदव्यञ्जनेन विवृणोति—यदुक्तमित्यादिना, पूर्वात्मकरक्षणे प्रकरणे यच्छयनासनं नावादानिकं रक्ष्यतयोक्तं तत्र तीक्ष्णान् रसदांश्च प्रयुञ्जीतेत्यर्थः।

[19] एवमतिदिष्टान्येव भेदनादनाघातनानि विषयभेदेन सेनामुख्येषु दर्शयितुं सूत्रम्—सेनामुख्यवध इति । स्फुटार्थम्*। तदुपायमाह—बन्धक्यादिना। बन्धकी पोषका-रत्तकाः।

[20] तत्किमित्यत्र विषयभेदप्रदर्शनेन व्यञ्जयति—बहूनामित्यादि । एकस्यां स्त्रियां बहूनां मुख्यानां द्वयोर्वा कामो( मे )जात इत्यर्थः।

[21] परत्रापगमने इति, विजिगीषुपार्श्वगमने । तद्यात्रासाहाय्यदाने वा योजयेयुरित्यर्थः। भर्त्तुरिति, विजिगीषोः।

[22] एवं सेनामुख्यभेदनोपायमुक्त्वा पक्षान्तरतया तद्धातनोपायमाह—कामवशाद्वेति । दापयेयुरिति, आत्मव्यञ्जनैः सेनामुख्यानामिति शेषः।

[23] राजदेहे विषदानोपायमाह—वैदेहकव्यञ्जनो वेत्यादि। महिष्याः प्राणसमाः प्रेष्याः प्रभूतमर्थं.......गत्वा पुनस्त्यजेत्।

[24] तस्याश्च परिचारकव्यञ्जनेन प्रणिधिना संवननकारको ऽय-

* 'सेनामुख्यवधः' इति तृतीयाध्यायस्यादि प्रकरणसूत्रम् । अत्र कथमापतितमिति न ज्ञायते।

मित्युपदिष्टसिद्धव्यञ्जनः । तस्यैव प्रभूतार्थदस्य वैदेहकव्यञ्जनस्य वशीकरणार्थं किञ्चिदौषधं दद्यात् । तत्प्रयोगे च वैदेहकव्यञ्जनः पूर्वतोऽपि तस्यां सङ्गातिशयमभिनयेत् ।

[२५] ततः सिद्धे संवननप्रयोगसिद्धव्यञ्जनः तस्याः प्रलयात् सुभगाया (?) राजदेहे ऽवधातव्यमेतत् सौभाग्यातिशयार्थमिति त... ......विषयुक्तं तं दद्यात् येन राजव्यावृत्तिः स्यादित्यर्थः ।

[२६] परकीयमाह—तत इत्यादि ।

[२७] महामात्रभेदनमाह—कार्त्तान्तिकेत्यादि । स्त्रीपुरुषलक्षणज्ञः क्रमाभिनीतो बहुशः संवाददर्शनात् क्रमेणापि................सम्पन्नं ब्रूयादित्यर्थः ।

[२८] भार्यामस्येति । ब्रूयादित्येवास्य महामात्रस्य भार्याञ्च भिक्षुकी ब्रूयात् ।

[२९] राज्ञस्त्वं भार्या च राज्ञो माता भविष्यसीति ।

[३०] भार्याव्यञ्जनो वेति । रूपयौवनसंपत्त्या महामात्रेण भार्यात्वेन स्वीकृता वार्धत्या ( बन्धक्या ) दिष्वन्यतमेत्यर्थः ।

[३१] अवरोधयिष्यतीति, महिषीत्वेन स्वीकरिष्यतीत्यर्थः ।

[३२] तवान्तिकायेति । तव समीपं गन्तुमर्थं पत्ररूपं लेख्यमाहरणञ्चाहृतमित्यर्थः । ततश्चमहामात्रस्य राज्ञश्च विरोधः स्यादित्याशयः ।

[३३] पक्षान्तरमाह—सूदारालिकेत्यादि । सूदः पाचकः, आरालिकः सूपकारः; तद्व्यञ्जनो वा गूढपुरुषः महामात्रपरिकरभूतः सन्नाहप्रयोगार्थं राज्ञो वचनं तन्निमित्तमात्मनः प्रभूतार्थदानञ्च व्यपदिशेत् ।

[३४] अस्येति, राज्ञः । वैदेहक व्यञ्जनस्तु...........रविक्रेतारं ज्ञायमानमाहूयोक्तः तीक्ष्णः विषमे तस्य हरतेप्यर्थतामिति न जाने किमर्थमिति आपन्नस्य तद्वचनं संवादयेदित्यर्थः ।

[३५] संघो मारकश्च मया तदुक्तमिति ब्रूयादित्याह—कार्यसिद्धिश्चेति ।

[३६] एवं महामात्रेभ्यः परस्य विश्लेषणप्रकारमुक्त्वोपसंहरति—एवमिति । सामदानभेदानां यथासंभवमेकेन द्वाभ्यां वा समुच्चयेन वास्य परस्यान्योन्याविदितमेकैकं महामात्रं विजिगीषुस्तथा योजयेत्, तथा परेण सहायोध( ज )नया (?) ततो ऽपसरणं वा कुर्यादित्यर्थः ।

३७एवं परस्तानमहामात्राणामेव भेदनमुक्त्वो शून्यफलात् पौरादीनामसहर्त्रादिभ्यो जानपदानाञ्च भेदनमाह—दुर्गेषु चास्येत्यादिना। दुर्गेष्विति, स्थानीयादिष्विति। पराभियोगार्थं गतेन राज्ञा रहिततया शून्यस्थानीयं रक्षतीति शून्यपालं तस्याप्ततया स्थिताः सत्रिणः शून्यपाले पौराणां मैत्रीनिमित्तमनुरागजननार्थमावेदयेयुः।

३८कथमित्यत्राह—शून्यपालेनेत्यादि। योधाः शूराः, चौराः तस्कराः, अधिकरणस्थाः समाहर्तृप्रदेष्ट्रादयः।

३९आवेदनप्रकारमाह—कृच्छ्रगत इति। कष्टदशां प्राप्तो राजा जीवतोऽप्यस्य प्रत्यागमनमनिश्चितमित्यर्थः।

४०ततः किमित्यत्राह—प्रसह्येत्यादि। अराजकप्रायत्वाद् राज्यस्यापायेनापि वित्तान्याहरत, स्वशत्रूंश्च व्यापादयतेति।

४१अथास्मिन् प्रवादे प्रथिते पौराणि च स्वार्थानाहरेयुः हठाद्दापयेयुः, बलाद्धरेयुरिति............मुख्यांश्चेति वित्तसंहरणशत्रुघातानुज्ञानादिति भावः।

४२तीक्ष्णानां मुख्यं हननदशायां वक्तव्यमाह—एवं क्रियन्त इत्यादि। शून्यपालस्य शुश्रूषणम्। इदञ्च शत्रुवचनान्तद्वयस्य शून्यपालकारितत्वप्रतिहासनार्थम्।

४३एवं पौरेषु शून्यपालकारितमिद............लस्यापि पौरकृताकृत्यप्रतीहासनार्थमाह—शून्यपाल स्थानेष्विति। शून्यपालग्रहासन्नप्रदेशेषु शोणितादीनि प्रहारचिन्हानि खड्गादीनि.........ना......नि राज्ज्वादीनि चोत्सृजेयुः, प्रहरणादिसूचनार्थम्।

४४एवमेतानि तत्र तत्र प्रकाश्य शून्यपालस्य सत्रिणो ब्रूयुः, निरङ्कुशान् पौरान् जनान् घ्नन्तिचा पहरन्ति चेति, यथास्यान्तेष्वप्यमर्षः स्यादिति भावः।

४५शून्यपालान् पौरानिव समाहर्तृतो जानपादानपि सत्रिणो भेदयेयुरित्याह—एवं जानपदानिति।

४६जानपदानां समाहर्तृतो भेदनप्रकारमतिदेशेनोक्त्वा समाहर्तुर्जानपदेभ्यो विभेदनप्रकारमाह—समाहर्तृपुरुषांस्त्वित्यादिना।

४७एवं शून्यसमाहर्तृतः। पौरजानपदबाधकत्वरूपदोषे जाते सति

तैरेव सत्रिणो घातयेयुः, एकलोष्ठवधन्यायादित्याह—समुत्पन्न इत्यादिना ।

[४८]शून्यपालसमाहर्त्तारौ घातयित्वा तैरेव परस्य ज्ञाति........वा यन्त्रितं पुत्रं वा राज्ये स्थापयेयुरित्याह—तत्कुलीनमित्यादि ।

[४९]अन्तःपुरं राजभवनं, पुरमध्यनिविष्टत्वात्; पुरद्वारं गोपुरं, द्रव्याणां काष्ठवेणवादीनां, धान्यादीनां शाल्यदीनाञ्च, परिग्रहादीनि स्थानानि च गूढं दहेयुः । तानन्तः पुरादीन् हन्युः अन्तः पुरादिस्थान् रक्षिणो हन्युरित्यर्थः । एतानि दाहयित्वा सत्रिणः स्वयमेव गत्वा पुरस्यैव तत् ब्रूयुरार्त्ताभूत्वा वदन्तः—पुरोपजापभेदिभिः कृत्यपक्षैरेतत्सर्वं विनाशतामिति बिषादमभिनयन्त इत्यर्थः। आत्मकृतत्वशङ्कानिवृत्त्यर्थं यात्रानिवृत्यर्थञ्चेति भावः ।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्र विरचितायां
नयचन्द्रिकायां कौटिल्यटीकायां आवलीयसे
द्वादशेऽधिकरणे द्वितीयोऽध्यायः।

## १२ अधि., ३ अध्या., १६४-१६५ प्रक.

### सू. सेनामुख्यवधः मण्डलप्रोत्सहानञ्च ।

एवं सन्धयनिच्छोः परस्य भञ्जनार्थं सेनामुख्यवधमभिधायोपायान्तरमभिधातुं सूत्रम्—मण्डल प्रोत्साहनमिति । मण्डलञ्च दशराजात्मकमुक्तम् । तस्य प्रोत्साहनं परेऽभियोक्तरि विक्रमणायोद्योजन तदुच्यत इत्यर्थः ।

[१]मण्डलप्रोत्साहनं वक्तुमुक्तस्य सेनामुख्यवधस्य शेषं तावदाह-राज्ञ इत्यादिना । पत्त्यश्वरथद्विपमुख्यानामिति, पत्त्यादिशब्दैस्तदध्यक्षा विवक्षिताः । मुख्या महामात्राः, तेषां मित्रस्थानीयेषु राजा रुष्ट इति सुहृत्त्वेन यो विश्वासस्तेन रहस्यमिदं नतु प्रकाश्यमिति कथयेयुः ।

[२]बहुलीभूते तस्मिन् रहस्यत्वेनैव प्रकाशिते तीक्ष्णाः कृतरात्रिप्रचारप्रतीकाराः—कृतो रात्रौ प्रचार दोषस्य प्रतीकारो यैस्ते तथा; अत एव रात्रौ नियन्त्रणश्रान्तस्तद्गृहेषु स्वामिवचनादिति राजा तावदुक्तवान्, इतो गम्यतामिति ब्रूयुः ।

[३]एवं शङ्कैर्हन्युरित्याह—तान्निर्गच्छत एवेति ।

[४]राज्ञोक्ततयैवैतत्कृतमिति पार्श्वस्थान् ब्रूयुः...............च्छे-त्याह—स्वामिसन्देश इति चेति ।

[५] ...............सत्त्रिणो मित्रच्छद्मानो ब्रूयुः ।

[६]अयं प्रकाशः फलतो जातः, यदस्माभिरुक्तं जीवितुकामेन तद्देशादपक्रमितव्यमिति, अपक्रान्तानां गूढव्यापादनमेव राज्ञा कारितमिति, एवमुक्ते शेषा अपसरेयुरिति भावः ।

[७]विषयविभागेन सर्वेषामपि मुख्यानामुपजापभेदान् दर्शयन् अयाच्य याचने तावदाह—येभ्यश्चेत्यादिना । राजा येभ्यः प्रार्थितो नादात् तान् सत्त्रिणो ब्रूयुः ।

[८]कथमित्यत्राह—उक्तः शून्यपाल इत्यादि ।

[९]शून्यपालस्य किल राजैवमुक्तवान्—अयाच्यं याचमानो ऽमुकश्चामुकश्च ।

[१०, ११]मया प्रत्याख्याताः शत्रुसङ्गता इति, ते त्वयोन्मूलनीया इति ।

[१२]ततः पूर्ववदाचरेदिति । रात्रिषु कांश्चित्तीक्ष्णैर्घातयेत्, अहतांस्तद्वधप्रदर्शनेन सत्त्रिभिरपसारयेद्वित्यर्थः । एवं याच्ययाचनापक्षयोरपि व्याख्या द्रष्टव्या ।

[१६]विश्वासार्थं दत्त इति, तस्य विश्वासजननार्थमित्यर्थः ।

[२२, २३]किमन्यत्स्वदोषशङ्कितत्वादिति । अन्यत्र तत्कारणमिति शेषः ।

[२६]एतेन सर्वकृत्यपक्षो व्याख्यात इत्याह—एतेनेति । अदानादिविषयभूतानां मुख्यानां भेदनप्रकारेण क्रुद्धभीतलुब्धवर्गाणां सर्वेषामपि भेदनं कार्यमित्यर्थः ।

[२७]राज्ञो महामात्रेभ्यो भेदनप्रकारान्तरमाह—प्रत्यासन्नो वेत्यादिना । आप्ततया स्थितः सत्त्री राजानमेवं बोधयेत् ।

[२८]कथमित्यत्राह—असौ चेत्यादि ।

[२९, ३०]प्रतिपन्न इति, तथेति गृहीतवन्तः । विजिगीषोर्दूष्यतया वध्यान्महामात्रं प्रति प्रहितान् शासनहरान् पथि गृहीतान् दर्शयेत्—एतत्तदिति ।

[३१]शत्रुपुरुषैर्यदस्य संभाषणमुक्तं तदिदं मया निश्चितमेव जात-

मिति ब्रूयादित्याह—सेनामुख्येत्यादि । सेनामुख्याः बलाध्यक्षाः, प्रकृतिपुरुषा इति मूलपुरुषा इति भृत्यास्तान्, भूमिहिरण्यं वा दास्याम इति प्रलोभ्य तैरपि............द्वेत्यर्थः ।

[३२]उपायान्तरमाह—यो ऽस्येत्यादि । समीपे इति, राज्ञः स्थानीय एव । दुर्गेवेति, अन्तपालादिषु दुर्ग इत्यर्थः । एकस्मिन् पुत्रे यौवरा ..............ते यो ऽन्यो यान्त्रितपार्श्वस्थितो ऽन्तपालादिदुर्गस्थो वा तं भेदयेत् ।

[३३]कथमित्यत्राह—आत्मसम्पन्नतर इति । युवराजादपि गुणवत्त-रस्त्वं............।

[३४]...............किं राज्यार्थं न व्याप्रियसे ।

[३५]विक्रमय्य तद्गृहाणेति ।

[३६]अन्यथा ऽनर्थोपि स्यादित्याह—पुरास्त्वेत्यादिना पुरापि यीद विनाशयिष्यतीत्यर्थः ।

[३७]पक्षान्तरमाह—तत्कुलीनमित्ययादि । ज्ञातिं वा यन्त्रितपुत्रं वा, प्रभूतं हिरण्यं दास्यामीति प्रलोभ्य विजिगीषुर्ब्रूयात् ।

[३८]अन्तर्बलमिति । मौलबलम् । प्रत्यन्तस्कन्धमिति, विषयान्त-स्थितबलम् । अन्तं वेति, जानपदादिक्रमेण वा विनाशयति ।

[३९]पक्षान्तरमाह—आटविकानित्यादि । अर्थमानाभ्यामिति, मानः सत्कारः ।

एवं सेनामुख्यवधमुक्त्वा मण्डलप्रोत्साहन मुपायान्तरतया वक्तुं सूत्रम्—मण्डलप्रोत्साहनमिति । स्फुटार्थम् ।

[४०]तदाह—पार्ष्णिग्राहं वेत्यादि । ( त्वयिनिवृत्तस्येति*, मामुक्त्वा त्वदभियोग्यतयेत्यर्थः पक्षान्तरमाह—मित्राणिवेत्यादि† । )‡ अस्ये-ति, अभियोक्तुः ।

[४१]अहं वस्सेतुरिति । सेतुरभियानप्रतिबन्धकः ।

---

* प्रतीकमिदं डा. जौलीसम्पादित मूलपुस्तके ऽत्र नोपलभ्यते ।

† प्रतीकमिदं डा. जौलीसम्पादित मूलपुस्तके न दृश्यते ।

‡ कदाचिदेतं कोष्ठान्तर्गतः पाठोऽन्यतः कुतश्चित्स्थलादापतितः स्यात् ।

[४२] भिन्ने*इति, ( अ ? ) च्छिन्ने। प्लावयिष्यतीति, जलसमाधिनाभिभव एवोक्तः, सेतुभेदोक्तनिर्वहणार्थमिति ग्राह्यम्।

[४४] एवं परस्य मित्रप्रोत्साहनमुक्त्वा सामवायिकादीनां सर्वेषामपि प्रोत्साहनमाह–तत्संहतानामित्यादि।

[४५] तेन संहतानां सामवायिकवृत्तीनामन्येषाञ्च दूतं प्रेषयेदित्याह एष खल्वित्यादि। कर्मेति, उत्सादनम्।

[४६] बुद्ध्यध्वमिति। मदभ्यवपत्तेः श्रेयस्त्वं बुद्ध्यध्वमित्यर्थः।

[४८] मध्यमस्येत्यादि। मध्यमोदासीनयोः य उदासीनः, तदर्पणं तस्मिन्नात्मार्पणं मध्यमोदासीनयोः श्रेयेद्वेत्यर्थः।

इति वादिकविचूडामणिमहोपाध्यायश्रीमन्माधवयज्वमिश्रविरचितायां नयचन्द्रिकायां कौटिलीयटीकायां आबलीयसे द्वादशे ऽधिकरणे तृतीयो ऽध्यायः।

---

## १२ अधि., ४ अध्या., १६६–१६७ प्रक.

### सू. शस्त्राग्निरस प्रणिधयः वीवधासारप्रसारवधश्च।

एवं पराभियोगनिवर्तनार्थं मण्डलप्रोत्साहनमुक्त्वा मण्डलानुत्थानविलम्बनयोः कर्तव्याभिधानार्थं सूत्रम्–शस्त्राग्निरसप्रणिधय इति। शस्त्रादीनां गूढप्रयोगा उच्यन्त इत्यर्थः।

[१] [२] तत्र शस्त्रप्रणिधानमाह–ये चास्येत्यादिना। अस्येति परस्य, दुर्गेषु स्थानीयादिषु, जनपदानामन्योन्तरालेषु च ये वैदेहकादिव्यञ्जनाः प्रणिधयस्ते परस्यैव सामन्ताद्यधीनोऽयं देशो युष्माभिराह… …………….अन्तर्भेदादि ( ज ? ) ज्ञत्वादिति पुरुषान् प्रेषयेयुः। अथागतानेकान् दुर्गस्थिता विजिगीषुप्रहिता गूढपुरुष………….।

[३] ……………….कृतीनां राज्ञि परस्परतश्च क्रोधभयादीनि रन्ध्राणि प्रदर्शयेयुरित्याह–आगतांश्चेत्यादि।

[४] तेष्विति। प्रकृतिच्छिद्रेषु। तैरिति, सामन्त……………… ……प्रहरेयुरित्यर्थः।

[५] रसप्रणिधानमाह–स्कन्धावारे वाऽस्येति। परस्य शिबिरे

* अत्र 'विभिन्ने' इति सोपसर्गः पाठो जौली पुस्तके।

शौण्डिकव्यञ्जनो गूढपुरुषः स्वस्य पुत्रतया व्यपदिष्टमभिव्यक्तं...... ............मारण विषेण व्यापाद्य पुत्रमरणेनार्त्तो नाम भूत्वा तस्येदं नैषेचनिकमिति मद्यकुम्भाननेकान् मदनरसयुक्तान् दद्यात्। स्वमद्यदोषशङ्कानिरासार्थम्।

[६] पक्षान्तर माह– शुद्धं वेत्यादि।

[७] दण्डमुख्योऽपि विशेषमाह–शुद्धं वेत्यादि। दण्डमुख्याहि प्रथमं कांश्चित् पाययित्वा...........मिति तत्परिहारार्थमेतदिति भावः।

[८] एवं दण्डमुख्योऽपि शौण्डिकवदभिव्यक्तः पुत्रतया स्थापयित्वात्रस्कन्दकाले रसेन तं प्रवास्य नैषेचनिकं देयमित्याह–दण्डमुख्यव्यञ्जनो वेत्यादि। (व्यञ्जन ?)

[१०] पक्षान्तरमाह—पक्वमांसिकेत्यादि। पक्वमांसोदनशुण्डापूपविक्रेतृ (व्यञ्जन ?) व्यञ्जना वा मांसादिरसपण्यानां............रसादिविशेषं मुहुर्वदन्तो मिथः स्पर्धया। कालिकमिति, कालान्तरदेयमूल्यमिति। समर्घतरमिति, लघुतरमूल्यतया इदं क्रेतव्यमिति वा। क्रेतॄनाहूय स्वपण्यानि निर्विशेषेणापचारयेयुः, मिश्री कृत्य दद्युरिति फलितार्थः।

[११] पक्षान्तरमाह—सुराक्षीरेत्यादि। सुरादीनि विक्रेतृ (स्थां?) हस्तात् क्रीत्वा स्त्रियो बालाश्च विषयुक्तेषु स्वपात्रेष्वर्पयित्वा पुनर्विक्रेतृपात्रेषु प्रत्यर्पयेयुः।

[१२] अनेनेति। पूर्ववदियता मूल्येन वा, पूर्वतो गुणविशिष्टं वा भूयो देयमिति वदन्तः। अमित्रक्रेतॄणां क्रीत्वादिवचनं स्वभाजनगृहीतप्रत्यर्पणेप्यनपराधार्थं मौढ्यव्यपदेशसंभवादिति।

[१३] पक्षान्तरमाह—एतान्येवेति। सुराक्षीरादीन्येव पण्यतया विक्रमं व्यवहारन्तो वैदेहकव्यञ्जना रसेनापचरेयुरित्यर्थः। विशुद्धस्थापना च बलस्येति प्रतिबलावकाशकान् दूष्यबलमन्तः सरुच्छाद्य आपत्त...........।

# शुद्धिपत्रम्

| पृ. | पं. | अशु. | शु. |
|---|---|---|---|
| १ | ६ | लाभदैर॰ | लाभनैर |
| ८ | १३ | दाद्यत् | द्द्यात् |
| ,, | २० | तथेदीनीं | तथेदानीं |
| ९ | १० | प्रमाणं | प्रयाणं |
| ,, | १६ | युग्म | युग्य |
| १३ | २८ | प्रतिलोमेन | प्रतिलोमे न |
| ३३ | ३० | बोध्यम् | बोध्यम् |
| ३५ | २८ | मनित् | मनिन् |
| ३७ | ५ | द्रार्थं | द्रार्थं |
| ३९ | १७ | लनिति | लाविति |
| ४६ | ३ | संकलय्य | संकलय्य |
| ५४ | ६ | विक्रणा | विक्रमणा |
| ,, | १६ | भिधानुं | भिधातुं |
| ,, | १८ | तसूत्रस्य | तमसूत्रस्य |
| ५५ | ११ | ररिं मित्रं | ररिमित्रं |
| ६२ | २६ | ऽन्तर्द्धिरुच्यत (इत्यस्याग्रे) | (अधि. ७ अध्या १३, सू. २८) |
| ८४ | १६ | गरीयात् | गरीयान् |
| ८७ | १० | विधिक्षेपान्य | अधिक्षेपाद्य |
| ,, | ,, | (    ) एतत्कोष्ठकमध्ये | भ. ना., अ. २२, श्लो. ३९ । |
| १२६ | ४ | गजोरणः" इति ( अस्याग्रे ) | ( अधि. १०, अ. ४, सू. १६ ) |
| ,, | १० | निपातक | निपातन |
| ,, | २५ | षड्हस्त | षड्हस्त |

| पृ. | पं. | अशु. | शु. |
|---|---|---|---|
| १४१ | २५ | लाभासिद्धः | लाभासिद्धः |
| १७४ | १६ | हनिव्यामी | हनिष्यामी |
| १८२ | २० | शल्पशास्त्र | शल्यशास्त्र |
| १९१ | १६ | तञ्च | पञ्च |
| १९३ | १८ | मन्त्र | मन्त |
| १९५ | १७ | श्चैनरान् | श्चैवनरान् |
| १९८ | २४ | तिर्यदण्ड | तिर्यग्दण्ड |
| १९९ | १ | ५ अध्या. | ६ अध्या. |
| २०० | ७ | बा | वा |
| २०१ | १ | ५ अध्या. | ६ अध्या. |
| " | ४ | वदेकारो | वदाकारो |
| " | ५ | मूत्रबद | मूत्रवद |
| २०२ | २१ | अङ्गयाना | जयाङ्गाना |
| २०३ | १ | ५ अध्या. | ६ अध्या. |
| २०८ | १ | १० अधि. | ११ अधि. |
| " | २६ | कौशिदेव | कौशिकदेव |
| २१० | ६ | दित्या | दित्याह |
| २१२ | १७ | इद्रस्य | इन्द्रस्य |

# THE PUNJAB SANSKRIT SERIES.

## READY FOR SALE.

1. **Barhaspatya Artha Sastram** or the Science of Politics according to the School of Brihaspati. Original text edited with an intro., notes and English translation by Dr. F. W. Thomas, M. A., Librarian, India Office Library, London, together with an Historical Introductory Remarks and Indexes by Pt. Bhagavad Datta, *B.* A. Supdt. Research Dept., D. A. V. College, Lahore. Price Rs. 2/8/—.

2 **Jaimini Grihya Sutra** or the Domestic Ceremonies according to the School of Jaimini. Original text edited with extracts from the comm. Subodhini, list of Mantras, notes, introduction, and for the first time translated into English by Dr. W. Caland, M. A., Utrecht. Price Rs. 6/-.

3. **Aryavidyasudhakra** or a History of Sanskrit Literature ( in Sanskrit ) composed by YaJneshvara Cimana *B*hatta, the same edited with various new notes by Mahamahopadhyaya Pt. *S*ivadatta D. *K*udala Hd. Pt. Oriental College, Lahore. Price Rs. 8-( .

4. **Kautiliyam Artha Sastram** Original text Prepared with the help of Munich ( German ) Mss. Edited with an extensive historical introduction of 47 pages, and English notes by Dr. J. Jolly, M. A. Ph. D., and Dr. R. Schmidt, M. A., Ph. D. the ancient comm. Nayachandrika of Mahamahopadhyaya Madhva with various notes is also added. Printed on best paper, cloth bound with gold letters. *V*ol. I containing text and introduction @ Rs. 5-0. Ordinary paper 4-0.

Vol. II. Original Commentary and English notes Rs- 5-0. ordinary Rs. 4-*0*.

5. **Nilamata Puranam** Hitherto unpublished text. Edited with notes, introduction, indexes and 9 appendices etc., by Pro. R. L. *K*anjilal, M. A. Vedantatirtha and *V*idyaratan and J. D. Zadu Esqr., Shastri, M. A., O. L. It is an historical work giving full accounts of the Ancient History fo Kashmir. Price Rs. *5-0*.

6. **Atharwan Jyotish** Hitherto unpublished text edited with variants and a valuable English Introduction by Pt. Bhagvad Datta B. A. Price Ans. *0*-8-*0*.

**7. The Datharamsa** or A History of the Tooth-relic of the Buddha. Original pali text edited and translated into English with notes, intro. etc, by Dr. Bimalacharan Law, Ph. D., M. A., B. L. Fellow of the Royal Historical Society, translator and writer of many Books on Buddhist Literature. It is an historical record of the incidents connected with the tooth-relic of the Buddha. It is as important as the Mahawansa and the Dipawansa. The history of Ceylon would be incomplete without it. Printed on best ivory paper cloth bound Rs. 4-0

**8. The Jatakas of the Jains** or an English translation of the Trishashtishlaka Purush Charitra of Shri Hemachandracharya by Prof. Amulyacharana Vidyabhushan and Prof. Banarsi Dass Jani, M. A., Vol. I, It contains previous births of the Lord Risaba, the first Tirthankar of the Jains. It is a very interesting book for Research Scholars and Students of folk-lore. Highly appreciated by Scholars of Jain Literature.

**9. Ancient Indian Colonies in the Far East** by Dr. R. C. Majumdar M. A., Ph. D., Dean of the Faculty of Arts, Dacca University. Vol. I Champa. its political history and inscriptions. It is a very useful Book for Research Scholars. No such history of Indian Colonies is written before in English In the Press.

Besides above we can supply all kinds of books relating to Ancient India. Apply to:—

**MOTI LAL BANARSI DAS,**
**The Punjab Sanskrit Book Depot,**
SAIDMITHA BAZAR,
*LAHORE, (India).*

# आर्यविद्यासुधाकरः

वेद्यविद्याकुमुदिनीविकासनविशारदः ।
विराजते ह्यविरतमार्यविद्यासुधाकरः ॥ १ ॥
वेदादिशास्त्रपाथोधिमन्थनेनोद्धृतः सताम् ।
विकासयतु चेतांसि त्वार्यविद्यासुधाकरः ॥ २ ॥
विद्याविलासिनीलीलाविरहान्धीकृतात्मनाम् ।
स्वान्तध्वान्तं हरत्येष आर्यविद्यासुधाकरः ॥ ३ ॥

हंहो आर्यविद्याविलासिनीविलासविलोकनलालसाः! सहृदया!! महोदयाः !!! क्षणमितोऽपि दीयतां सदयमिदं युष्मदीयं नयनद्वयम्।

विलोकयतां मुद्रणालयाकाशविमुद्रितो बहुप्रकाशो वेदादिवेद्यविद्याकुमुदिनीविकासनविशारदोऽयमार्यविद्यासुधाकरः । ( History of Sanskrit Literature )

ग्रन्थोऽयं समस्तार्यवर्यविद्याविवेकविनयनयशिल्पविज्ञानशौर्यौदार्यचातुर्यादिकथाप्रकाशको दाक्षिणात्येन द्विजन्ममूर्धन्येन चिमणाजीतनूजेन पण्डितप्रवरेण यज्ञेश्वरेण विरचितः ।

ग्रन्थोऽयं ग्रन्थकारेण पञ्चभिः प्रकाशैः समापितः ।

अत्र च प्रथमे प्रकाशे—आर्यजनानां मूलोत्पत्तिस्थानम्, तद्विषयका विप्रतिपत्तयः, त्रिविष्टपस्य विवेचनम्, ब्राह्मणादि जातिचतुष्टयविवेकस्य प्राचीनता, आर्यप्रजायाः प्रसवकालः, आर्याणां राजनीतिः, वैदिककाले वर्णलिपिप्रकाशः, तत्प्रचारः, वर्णलिपिप्रकाशविषयकं शर्मण्यदेशीयभट्टमोक्षमूलरमतं, तन्मतनिरसनं, धर्मलक्षणं, वेदस्वरूपं, ऋग्वेदस्य परिचयः, इत्येवमादयोऽवश्यं ज्ञातव्या विषयाः सुनिरूपिताः।

द्वितीये च प्रकाशे—अग्निहोत्रं, आग्रयणं, चातुर्मास्यं, सोम याग:, अश्वमेधयागः, इत्येवमादीनि श्रौतकर्माणि सविस्तरं निरूपितानि ।

तृतीये च प्रकाशे—गर्भाधानादीनि महायज्ञान्तानि पञ्चविंशतिस्मार्तकर्माणि, नैमित्तिक—वार्षिक—मासिक—दैनिक—स्वरूपाश्चत्वारः संस्काराः, ब्रह्मचर्याद्याश्रमचतुष्टयविचारः, इत्येवमादयोऽवश्यं ज्ञातव्या विषया निरूपिताः ।

चतुर्थे प्रकाशे च—समयाचार—कुल—मिश्रकस्वरूपं तान्त्रिकमतम्, चतुःषष्टितन्त्रात्मकः कौलमार्गः, चार्वाक—माध्यमिकयोगाचार-सौत्रान्तिक-वैभाषिकार्हताभिधमतानि, षड्दर्शनोक्तमतानि, रामानुजाचार्यमतम्, मध्वाचार्यमतं, वल्लभाचार्यमतं, पाशुपतमतं, शैवमतं, प्रत्यभिज्ञामतं, रसेश्वरमतं, इत्येवमादयो विषयाः सुनिरूपिताः ।

पञ्चमे प्रकाशे च—वेदबाह्यधर्मप्रचारकारणम्, पुराणप्रतिपाद्यवि-

विश्वधर्मविरोधपरिहारः, षड्दर्शनमतविरोधपरिहारः इत्येवमादयो विषयाः सुनिरूपिताः ।

ग्रन्थोऽयं सर्वाङ्गमनोहरतया विमुद्रितं विक्रयणाय सज्जीभूतमास्ते। अतस्त्वर्यतामेतद् ग्रहणाय । मूल्यं ८)

## कौटिल्य अर्थशास्त्र ।

विदितमस्तु विदुषाम्—यत् अर्थशास्त्रस्य अतिप्राचीनो ग्रंथः कौटिल्यप्रणीतः 'वुर्जवर्ग' यूनीवर्सिटीसंस्कृताध्यापकेन डा. जे. जौली एम. ए. पी. एच. डी. एल. एल. डी. महाशयेन संपादिताः सकलसौलभ्याय साधु मुद्राप्य प्राकाश्यं नीतः । दृप्तान् नन्दराजान् समूलमुन्मूल्य चन्द्रगुप्तस्य राजसिंहासने प्रतिष्ठापयितारं संसारप्रसिद्धं राजनीत्याचार्यधौरेयं महामनसं चाणक्याख्ययाऽऽख्यातं कौटिल्यं को न वेद ।

इतः २३०० वर्षाणि पूर्वमस्य ग्रन्थस्य निर्माणकालः । इत्यतिप्राचीनोऽयं ग्रन्थस्तात्कालिकीं भारतवर्षस्थितिं सम्यक् परिचाययितुमेक एवाऽऽस्ते । सभ्यसंसारे भारतस्य स्थानमनेनैकेनैव ग्रंथेन अत्युच्चतां नीतम् । भारतीयप्राचीनेतिहासे कठिनप्रहेलिकायमाणा बह्वी विषया अनेनैव एकेन ग्रंथेन विशकलिताः । संस्कृतसाहित्ये इदमेवैकं ग्रन्थरत्नं यत् भारतीयामार्थिकीं राजनैतिकीं सामाजिकीं च सभ्यतां विस्तरेण बोधयति। अथ अद्यतनानां स्वप्ने ऽप्यगोचरस्तास्ता वैज्ञानिकवैचित्रीरत्रोपलभ्यन्ते याभिराश्चर्याक्रान्तो भवत्यद्यतनो विधिम्मन्यो वैज्ञानिकसंसारः । यूरोपमहायुद्धसमये ये ये नवा आविष्कारा विज्ञानसंविद्गर्भादुद्भूतास्तेषु भूयांसः परसेनासंमोहकविषगर्भधूमनिर्माणप्रयोगविधिप्रभृतयः प्राचीनैर्भारतीयैः करामलकीकृता आसन्निति अत एव ग्रंथप्रकाण्डाज्ज्ञायते । किञ्च वर्तमानवैज्ञानिकम्मन्यपाश्चात्यवर्गेण लेशतोऽप्यविदिताः अग्निस्तम्भनाऽदृश्याञ्जनक्षुधावारणप्रभृतयोऽद्भुता विषया अप्यनेकेऽत्रोपलभ्यन्ते। सर्वथा ग्रन्थोऽयं विदुषां परिशीलनीयः संग्राह्यश्च ।

तस्मात् त्वर्यतामेतद्ग्रहणाय। अन्यथा हस्ताहस्तिकया जनतया क्रीयमाणस्यास्य ग्रंथमणेरस्मिन् संस्करणे समाप्ते द्वितीयसंस्करणप्रतीक्षा भवतां हृदयानि खेदयिष्यति ।

अत एतद्विज्ञापनदर्शनसमकालमेव वी. पी. द्वारा एतद्ग्रन्थप्रेषणकृते ऽस्मत्सविधे पत्रं प्रहीयताम् । मूल्यम्—उत्तमकागज मुद्रितस्य ५) । मध्यमकागजमुद्रितस्य ।

द्वितीयभागः उक्त डा. जौलीमहाशयकृता इंग्लिशटिप्पणी नयचन्द्रिकाख्या एतद्ग्रंथटीका च सहैवाऽऽस्ते ॥ मु० ५) मध्यम कागज ४)